अङ्गुल्योन्नतपर्वाणस्तुङ्गाया:[1] कोमलान्विता: ।
रत्नकाञ्चनलाभाय विपरीता विपत्तये ॥
सुभगत्वं नखै: स्निग्धैराताम्रैश्च धनाढ्यता ।
पुत्रा: स्युरुन्नतैरेभि: सुसूक्ष्मैश्चाऽपि[2] राजता ॥
पाण्डुरै: स्फुटितै रूक्षैर्नीलैर्धूम्रैस्तथा खरै: ।
निस्स्वता भवति स्त्रीणां पीतैश्चाऽभक्ष्यभक्षणम् ॥
शुक्ला:[3] स्निग्धाश्च वृत्ताश्च समारूढशिरास्तथा ।
यदि स्युन् पुपुरं (?)[4] दध्युर्बान्धवाद्यै: समाप्नुयु: ॥
अशिरा:[5] शरकाण्डाभा: सुवृत्ताल्पतनूरुहा: ।
जङ्घा: कुर्वन्ति सौभाग्यं यानश्च गजवाजिभि: ॥
क्लिश्यते[6] रोमजङ्घा स्त्री भ्रमत्युन्नतपिण्डिका ।
काकजङ्घा पतिं हन्ति [7]वाचाटा कपिला च या ॥
जानुभिश्चैव मार्जारसिंहजान्वनुकारिभि: ।

1 अङ्गुष्ठोन्नतपर्वाण: तुङ्गाग्रा: इति गृ. रत्ना., पृ. १४; वी. मि. लक्षण., १३२

2 सुसूक्ष्मैरपि राजता इति गृ. रत्ना., पृ. १४; वी. मि. लक्षण., १३४

3 सूक्ष्माग्रा: स्निग्धवृत्ताश्च समारूढशिखास्तथा इति गृ. रत्ना.. पृ. १४; वी. मि. लक्षणे., १३५एवं दृश्यते—

गुल्फा: स्निग्धाश्च वृत्ताश्च समारूढशिरास्तथा ।
यस्या: सा तु धनाढ्यत्वं बान्धवाद्यै: समाप्नुयात् ॥

4 यदि स्युर्नुपुरं (?) दध्नु: इति गृ. रत्ना., पृ. १४

5 इत आरम्य अङ्गिरोवचनमिति गृ. रत्नाकरे (पृ. १४. ) वी. मि. लक्षण-प्रकाशे., ( पृ. १३६–१३९ ) भविष्योद्धृता दृश्यन्ते

6 कुप्यते लोमजङ्घा स्त्री भ्रमते बद्धपिण्डिका इति गृ. रत्ना., पृ. १४

7 वाचाला इति. गृ. रत्ना., पृ. १४

श्रियमाप्य सुभाग्यत्वं प्राप्नुवन्ति सुतांस्तथा ॥
घटाभैरध्वगा नार्यो निर्मांसैः कुलटाः स्त्रियः ।
शिरालैरपि [1]हिंस्राः स्युर्विश्लिष्टैर्धनवर्जिताः ॥
अत्यन्तकुञ्चितै रूक्षैः स्फुटिताग्रैर्गुडप्रभैः ।
अनेकजैः[2] तथा रोमैः केशैश्चाऽपि तथाविधैः ॥
अत्यन्तपिङ्गला नारी विषकन्येति [3]निश्चिता ।
सप्ताहाभ्यन्तरे [4]जाया पतिं हन्यान्न संशयः ॥
हस्तिहस्तनिभैर्वृत्तै [5]रम्भाभैः करभोपमैः ।
प्राप्नुवन्त्यूरुभिः[6] शश्वत् स्त्रियः सुखमनङ्गजम् ॥
दौर्भाग्यं च[7] निर्मांसाभिर्बन्धनं रोमशोरुभिः ।
तनुभिर्वधमित्याहुः मध्यच्छिद्रैस्त्वनीशता ॥
मध्यावर्तं[8] समं चारु सूक्ष्मरोमाचितं पृथु ।
जघनं शस्यते स्त्रीणां [9]रतिसौख्यकरं द्विजाः ॥
ऊर्ध्वरोम भगे यस्याः समं सुश्लिष्टसंस्थितम् ।

1 सिंहास्या विशिष्टैर्धनवर्जिता इति गृ. रत्ना., पृ. १४
2 अनेकशस्तथा इति गृ. रत्ना., पृ. १४
3 विश्रुता इति गृ. रत्ना., पृ. १५
4 स्वीयं इति गृ. रत्ना., पृ. १५
5 अलोमैः इति. गृ. रत्ना., पृ. १५
6 एवं वी. मि. ल., पृ. १३७; आप्नुवन्त्युरुभिश्शश्वत् स्निग्धैः इति गृ. रत्ना., पृ. १५
7 बद्धमांसाभिर्बन्धनं लोमशालिभिरिति गृ. रत्ना., पृ. १५; स्थूलमांसाभिः इति वी. मि. लक्ष., १३८
8 सव्यावृत्तं……रोमतलमिति गृ. रत्ना., पृ. १५; वी. मि. लक्ष., १४१
9 रतौ सौख्यकरं स्त्रियाः । ऊर्ध्वं रोमतले यस्याः सममिति गृ. रत्ना., १५

अपि नीचकुलोत्पन्ना राजपत्नी भवत्यसौ ॥
अश्वत्थपत्रसदृशः [1]कूर्मपृष्ठोह्यभूतिकः (?)।
शशिबिम्बनिभश्चाऽपि तथाच शकटाकृतिः ॥
भगः[2] शस्ततमः स्त्रीणां रतिसौभाग्यवर्धनः ।
तिलपुष्पनिभो[3] यश्च यस्याश्वखुरसन्निभः ॥
द्वावप्येतौ परप्रेष्यां[4] कुर्वाते च दरिद्रताम् ।
उलूखलनिभैः[5] शोकं मरणं विवृताननैः ॥
निरूपैरतिनिर्मांसैर्गजाश्वसमरोमभिः ।
दौःशील्यं दुर्भगत्वं च [6]दारिद्र्यमभिगच्छति ॥
कपित्थफलसङ्काशः पीनो बलिविवर्जितः ।
स्फिक्[7] प्रशस्तो हि नारीणां निन्दितो ह्यन्यथा द्विजाः॥
पयोधरभरान्नम्रः प्रबालीत्रिवलीगुरुः(?) ।
मध्यः शुभावहः स्त्रीणां रोमराजीविभूषितः ॥
पणवाभैर्मृदङ्गाभैस्तथा मध्ये [8]यवोपमैः ।
प्राप्नुवन्ति भयायासं दौःशील्यमपि चेदृशैः ॥

1 पृष्ठाकृतिस्तथा इति गृ. रत्ना., पृ. १५; कूर्मपृष्ठोऽप्यचूलिकः (अशिखः) इति वी. मि. लक्ष., १३९

2 भगः शुभकरः·········प्रीतिविवर्धनः इति गृ. रत्ना., पृ. १५

3 सदृक् यस्तु यश्चाश्व० इति गृ. रत्ना., पृ. १५

4 पररतौ कुर्वीत इति गृ. रत्ना., पृ. १५

5 उलूखलनिभः·········विवृताननः इति गृ. रत्ना., पृ. १५

6 दारिद्र्यं चाधि इति गृ. रत्ना., पृ. १६; वी. मि. लक्ष , १३९

7 स्फीतः प्रशस्तो नारीणां निन्दितो ह्यन्यथा विदुः । पयोधरभरान्नम्रः प्रवरत्रिवली, इति गृ. रत्ना., पृ. १६

8 तथा मध्ये यवोदरैः, इति गृ. रत्ना., पृ. १६

सुवक्रमुल्बणं[1] पृष्ठमरोमं सुसमाहितम् ।
नानाप्रस्तरपर्य्यङ्कं[2] रतिसौख्यकरं परम् ॥
कुब्जमद्रोणिकं पृष्ठं रोमशं यदि योषितः ।
स्वप्नान्तेऽपि सुखं [3]तस्या नाऽस्ति हन्यात्पतिं च सा ॥
विपुलैः सुकुमारैश्च कुक्षिभिः सुबहुप्रजाः ।
मण्डूककुक्षिर्या[4] नारी राजानं सा प्रसूयते ॥
उन्नतैः [5]वलिभिर्वन्ध्याः संवृत्तैः कुलटास्त्रियः ।
जारकर्मरता सा स्यान्न प्रभुत्वमवाप्नुयात् ॥
उन्नतावनतैः क्षुद्राः विषमैर्विषमाशयाः ।
आयुरैश्वर्य्यसम्पन्ना[6] वनिता हृदयैः समैः ॥
सुवृत्तमुन्नतं पीनं [7]अदूरोन्नतमायतम् ।
स्तनयुग्मं [8]सदा शस्तमतोऽन्यदसुखावहम् ॥
उन्नतिः प्रथमे गर्भे द्वयोरेकस्य भूयसी ।
वामे तु जायते कन्या दक्षिणे [9]तु भवेत्सुतः ॥
दीर्घे तु [10]चूचुके यस्याः सा स्त्री धूर्ता रतिप्रिया ।

1 अवक्रं इति गृ. रत्ना., पृ. १६
2 पुष्पाद्यपर्य्यङ्कं इति गृ. रत्ना., पृ. १६
3 तस्य इति गृ. रत्ना., पृ. १६
4 असृक्कक्षा च इति गृ. रत्ना., पृ. १६
5 वलिभिर्वन्ध्याः सुवृत्तैः इति गृ. रत्ना. पृ. १६
6 सा सुरैश्वर्यसम्पन्ना वनिता इति गृ. रत्ना. पृ. १६
7 अधरोन्नतमिति (?) गृ. रत्ना., पृ. १६
8 इदं इति गृ. रत्ना., पृ. १६
9 जायते इति गृ. रत्ना., पृ. १६
10 चिबुके इति गृ. रत्ना., पृ. १७

आविष्टे[1] तु पुनर्यस्या द्वेष्टि सा पुरुषं सदा ॥
स्तनैः [2]सर्पफणाकारैः श्वजिह्वाकृतिभिस्तथा ।
दारिद्र्यमधिगच्छन्ति स्त्रियः पुरुषचेष्टिताः ॥
आरकूटघटैः स्तुल्यैर्भवन्तीह[3] तथा द्विजाः ।
समञ्च[4] मांसलं चारु शिरारोमविवर्जितम् ॥
वक्षो यस्या भवेन्नार्या भोगान् भुङ्क्ते तथेप्सितान् ।
हिंस्रा भवति वक्रेण दौःशील्यं रोमशेन तु ॥
निर्मांसेन तु वैधव्यं विस्तीर्णे कलहप्रिया ।
चतस्रो रक्तगम्भीरा रेखाः स्निग्धाः करे स्त्रियाः ॥
यदि स्युः सुखमाप्नोति विच्छिन्नाभिरनीशता ।
रेखा कनिष्ठिकारभ्य[5] मूला यस्याः प्रदेशिनीम् ॥
शतमायुर्भवेत्तस्या ऊनाया [6]न्यूनता क्रमात् ।
संवृत्ताः समपर्वाणस्तीक्ष्णाग्राः कोमलत्वचः ॥
समा ह्यङ्गुलयो यस्याः सा नारी भोगवर्द्धिनी ।
बन्धुजीवारुणैः तुङ्गैर्नखैरैश्वर्यमाप्नुयात् ॥
नखरैर्धूम्रवर्णाभैः[7] श्वेतपीतैरनीशता ।
रक्तैर्मृदुभिरैश्वर्यं [8]निच्छिद्राङ्गुलिभिर्द्विजाः ॥

1 प्रविष्टे इति गृ. रत्ना., पृ. १७ वी. मि. लक्ष., १४७
2 सर्पफणाकारः इति गृ. रत्ना., पृ. १७
3 भवन्ति हि इति गृ. रत्ना., पृ. १७
4 सुसमं मांसलं चाथ यथा, इति गृ. रत्ना., १७
5 मूलात् यस्याः प्राप्ता इति गृ. रत्ना , पृ. १७
6 मूलता इति गृ. रत्ना., पृ. १७
7 नखैर्बभ्रुविवर्णाभैः इति गृ. रत्ना., पृ. १७
8 विचित्राङ्गुलिभिरिति गृ. रत्ना., पृ. १७

स्फुटैरविरलै रूक्षैः [1]क्लेशं पाणितलैः खरैः ।
सप्त रेखा[2] यवा यासामङ्गुष्ठाङ्गुलिपर्वसु ॥
तासां हि विपुलं सौख्यं धनं धान्यं तथाऽक्षयम् ।
मणिबन्धोऽप्यवच्छिन्नो रेखात्रयविभूषितः ॥
दधाति न चिरादेव मणिकाञ्चनमण्डितम्[3] ।
श्रीवत्सपद्मशङ्खाङ्कगजवाजिनिवेशनैः[4] ॥
चक्रस्वस्तिकवज्रासिपूर्णकुम्भैरिवाङ्कुशैः[5] ।
प्रासादच्छत्रमुकुटैर्हारकेयूरकुण्डलैः[6] ॥
शङ्खतोरणनिर्यूहैर्हस्तन्यस्तैर्नृपस्त्रियः ।
यस्याः पाणितले रेखा [7]रक्तो स्रक्कुण्डकुण्डिकाः(?) ॥
दृश्यन्ते चरणे यस्या [8]राजपत्नी भवत्यसौ ।
वीथ्यापणतुलामानैः [9]तथा मुद्रादिभिः स्त्रियः ॥
भवन्ति वणिजां पत्न्यो रत्नकाञ्चनशालिनाम् ।
दात्रयोक्त्रयुगाबन्धफालोलूखललाङ्गलैः[10] ॥

1 क्लेशं पाणिभिराप्नुयुरिति गृ. रत्ना., पृ. १८
2 समरेखा इति गृ. रत्ना., पृ. १८
3 मण्डनमिति गृ. रत्ना., पृ. १८; वी. मि. लक्ष., १५०
4 श्रीवत्साम्बुजशङ्खाङ्क इति गृ. रत्ना., पृ. १८; श्रीवत्सध्वजशङ्खाब्ज इति वी. मि. लक्ष., १५२
5 कुम्भनिभाङ्कुशैरिति गृ. रत्ना., पृ. १८
6 मण्डलैरिति गृ. रत्ना., पृ. १८
7 यूपकुम्भाश्च इति गृ. रत्ना., पृ. १८ ; यूपस्रग्दण्डकुण्डलाः इति वी. मि. लक्ष., १५२
8 यज्ञपत्नी इति गृ. रत्ना., पृ. १८
9 तुलामानभाण्डमुद्रादिभिः इति वी. मि. लक्ष., १५२
10 फालोदूखल इति गृ. रत्ना., पृ. १९

भवन्ति धनधान्याढ्याः कृषीवलजनाङ्गनाः ।
अनुद्धतशिरासन्धिपीनं[1] रोमविवर्जितम् ॥
गोपुच्छाकृति[2] नारीणां भुजयोर्युगलं शुभम् ।
निगूढग्रन्थयो यासां[3] कूर्प्परा रोमवर्जिताः ॥
बाह्वो ललिता यासां[4] प्रशस्ता वृत्तकोमलाः ।
उन्नतावनतश्चैव[5] नाऽतिस्थूलो न रोमशः ।
स स्कन्धस्तु सदा स्त्रीणां सौभाग्यारोग्यवर्द्धनः ॥
स्थूले स्कन्धे वहेद्भारं रोमशे व्याधिता भवेत् ।
वक्रे स्कन्धे भवेद्वन्ध्या कुलटा चोन्नतानते ॥
स्फुटं रेखाद्वयं[6] यस्या ग्रीवायां चतुरङ्गुलम् ।
मणिकाञ्चनमुक्ताढ्यं स दधाति विभूषणम् ॥
अधना स्त्री कृशग्रीवा दीर्घग्रीवा च बन्धकी ।
ह्रस्वग्रीवा स्थिरापत्या स्थूलग्रीवा च दुःखिता ॥
अनुन्नता समांसा च समा यस्याः कृकाटिका ।
सुदीर्घमायुस्तस्यास्तु चिरं भर्ता च जीवति ॥
निर्मांसा बहुमांसा च शिराला रोमशा तथा ।
कुटिला विकटा चैव विस्तीर्णा च न शस्यते ॥

1 कोमलं मांसलं चैव पीनं इति. गृ. रत्ना., पृ. १८; दोषवर्जितमिति, वी. मि. लक्ष., १४९

2 गोपुराकृति इति गृ. रत्ना., पृ. १८

3 यस्या दशना लोम इति गृ. रत्ना., पृ. १८

4 यस्याः इति गृ. रत्ना., पृ. १८.

5 तनुभारनतश्चैव नाति इति गृ. रत्ना., पृ. १९

6 त्रयं इति गृ. रत्ना., पृ. १९; स्पष्टरेखात्रयमिति वी. मि. लक्ष., १५७

न स्थूलो न कृशोऽत्यर्थं न [1]वक्रो न च लोमशः ।
हनुरेवंविधः [2]श्रेयानतोऽन्यो न प्रशस्यते ॥
चतुरस्रमुखी धूर्त्ता मण्डलास्या[3] समं भवेत् ।
अप्रजा वाजिवक्त्रा स्त्री महावक्त्रा च दुर्भगा ॥
श्ववराहवृकोलूकमर्कटास्याश्च याः स्त्रियः ।
क्रूरास्ताः [4]पापकर्मिण्यः प्रजाबन्धुविवर्जिताः ॥
मालतीवकुलाम्भोजनीलोत्पलसुगन्धि यत् ।
वदनं मुच्यते [5]नैषां न च ताम्बूलभोजनैः ॥
ताम्राभः किञ्चिदानम्रः स्थौल्यकार्श्यविवर्जितः ।
अधरो यदि तुङ्गश्च नारीणां भोगदः सदा ॥
स्थूले कलहशीला स्याद्विवर्णे चाऽतिदुःखिता ।
उत्तरोष्ठेन तीक्ष्णेन वनिताऽत्यन्तकोपना ॥
जिह्वा तनुतराऽवक्रा ताम्रा दीर्घा च शस्यते ।
स्थूला [6]ह्रस्वा विवर्णान्ता वक्रा भिन्ना च निन्दिता ॥
शङ्खकुन्देन्दुधवलैः[7] स्निग्धैस्तुङ्गैरसन्धिभिः ।
मिष्टान्नपानमाप्नोति दन्तैरेभिरनुन्नतैः[8] ॥

1 न रक्त इति गृ. रत्ना., पृ. १९; न कृशोऽत्यल्प इति वी. मि. लक्ष., १५७
2 श्रेयांस्तत इति गृ. रत्ना., पृ. १९;
3 शठा भवेत् इति गृ. रत्ना., पृ. १९
4 पापकर्माणः इति गृ. रत्ना., पृ. १९
5 नैतत्पान इति गृ. रत्ना., पृ. १९
6 दीर्घा इति गृ. रत्ना., पृ. २०
7 शबलैः, इति गृ. रत्ना., पृ. २०
8 अनिष्ठुरैरिति गृ. रत्ना., पृ. २०

सूक्ष्मैरतिकृशैर्ह्रस्वैः[1] स्फुटितैर्विरलैस्तथा ।
रूक्षैश्च दुःखिता नित्यं [2]विकटैर्विमतिर्भवेत् ॥

सुमृष्टदर्पणाम्भोजपूर्णबिम्बेन्दुसप्रभम्[3] ।
वदनं वरनारीणां [4]अदृष्टफलदं शुभम् ॥

स्थूला कृशा नातिवक्रा नातिदीर्घा समुन्नता ।
तादृशी[5] नासिका यस्याः सा धन्या तु शुभङ्करी ॥

उन्नता मृदुरोमाणो रेखाः शुद्धा न सङ्गताः ।
क्रिकार्द्धतुल्याः[6] सूक्ष्माश्च योषितां तु सुखावहाः ॥

धनुस्तुल्याभिः सौभाग्यं वन्ध्या स्याद्दीर्घरोमभिः ।
पिङ्गला सङ्गता ह्रस्वा दारिद्र्याय न संशयः ॥

नीलोत्पलदलप्रख्यैराताम्रैश्चारुपक्ष्मभिः ।
वनिता नयनैरेभिर्भोगसौभाग्यभागिनी ॥

शशकाक्षी[7] मृगाक्षी च वराहाक्षी वराङ्गना ।
यत्र तत्र समुत्पन्ना महान्तं भोगमाप्नुयात्[8] ॥

अगम्भीरैरसंक्षिप्तैर्बहुरेखासमन्वितैः[9] ।

1 श्वैवेति गृ. रत्ना., पृ. २०

2 विकटैर्भामिनी इति गृ. रत्ना., पृ. २०

3 सुप्रभमिति गृ. रत्ना., पृ. २०

4 अभीष्ट इति गृ. रत्ना., पृ. २०

5 ईदृशी इति गृ. रत्ना., पृ. २०

6 वृकार्ध इति गृ. रत्ना., पृ. २०

7 खञ्जनाक्षी इति गृ. रत्ना., पृ. २०

8 अश्नुते इति गृ. रत्ना., पृ. २०

9 सुगम्भीरैरसंश्लिष्टैर्बहुरेखाविभूषितैः इति गृ. रत्ना., पृ. २१; वी. मि. लक्ष., १६४

राजपत्न्यो भवन्तीह नयनैर्मधुपिङ्गलैः ॥
वायसाकृतिनेत्राणि दीर्घापाङ्गानि योषिताम् ।
अनाविलानि चारूणि[1] भवन्ति न (हि?) विभूतये ॥
गम्भीरैः पिङ्गलैश्चैव दुःखिताः स्युश्चिरायुषः ।
वयोमध्ये त्यजेत्प्राणानुन्नताक्षी च याऽङ्गना ॥
रक्ताक्षी[2] विषमाक्षी च धूम्राक्षी प्रेतलोचना ।
वर्जनीया सदा नारी श्वनेत्रा चैव दूरतः ॥
उद्भ्रान्तकैरवैश्चित्रैर्नयनैरङ्गनास्त्विह ।
मद्यमांसप्रिया नित्यं चपलाश्चैव सर्वतः ॥
लकाराकृतयः[3] कर्णा नतस्कन्धाग्रसंस्थिताः ।
वहन्ति विकसत्कान्ति हेमरत्नविभूषणम्[4] ॥
खरोष्ट्रनकुलोलूककपोतश्रवणाः स्त्रियः ।
प्राप्नुवन्ति महादुःखं प्रायशः प्रव्रजन्ति वै ॥
ईषदापाण्डुगण्डा याः सुवृत्ताः पार्वणत्विषः[5] ।
प्रशस्ता निन्दितास्त्वल्पा[6] रोमकूपकभूषिताः ॥
अर्द्धेन्दुप्रथनाभोगं[7] रोमशं सुसमाहितम् ।

1 चारूणि भवन्ति हि विभूतये इति गृ. रत्ना., पृ. २१

2 रुद्राक्षी·······श्वेतलोचना इति गृ. रत्ना., पृ. २१

3 मकाराकृतयः कर्णा लसत्केशाग्रसंस्थिता इति गृ. रत्ना., पृ. २१; शूकराकृतयः कर्णा न च स्कन्धा न संस्थिताः इति वी. मि. ल., १६६

4 विकसत्कान्तिहेमवर्णविभूषणमिति गृ. रत्ना., पृ. २१

5 इषदापाण्डुरा गण्डाः सुवृताः सर्वतः स्त्रियाः इति वी. मि. ल., पृ. १५८

6 अन्या रोमकूपवि० इति गृ. रत्ना., पृ. २१; प्रशस्ता न पुनर्द्धन्या इति वी. मि. लक्ष., पृ. १५८

7 प्रतिमाभोगमरोमं सुसमाहितमिति गृ. रत्ना., पृ. २१; अरोमशमना-

भोगसौख्यकरं श्रेष्ठं ललाटं वरयोषिताम् ॥

द्विगुणं परिणाहेन ललाटं[1] त्रिगुणं च यत् ।
शिरः प्रशस्तं नारीणामवन्ध्या[2] हस्तिमस्तकाः ॥

सूक्ष्माः कृष्णा मृदुस्निग्धाः कुञ्चिताग्राः शिरोरुहाः ।
भवन्ति श्रेयसे स्त्रीणामन्ये स्युः क्लेशशोकदाः ॥

हंसकोकिलवीणालिशिखिवेणुस्वराः स्त्रियः ।
प्राप्नुवन्ति बहून् भोगान् भृत्यानाज्ञापयन्ति च ॥

भिन्नकांस्यस्वना[3] नारी खरकाकस्वरा च या ।
रोगव्याधिभयं शोकं दारिद्र्यं चाऽधिगच्छति ॥

हंसगोवृषचक्राह्वमत्तमातङ्गगामिनी ।
स्वर्गलभ्या[4] भवेन्नारी महिषी पार्थिवस्य च ॥

श्वशृगालगतिर्निन्द्या[5] या च वायसवद्व्रजेत् ।
दासी मृगगतिर्नारी दुर्भगा स्याच्च बन्धकी ॥

फलिनी रोचना हेमकुङ्कुमत्विष एव च ।
वर्णाः [6]शुभकरास्त्रीणां यश्च दूर्वाङ्कुरोपमः ॥

मृदूनि मृदुरोमाणि नात्यन्तं स्वेदजानि च ।
सुरभीणि च गात्राणि यासां ताः पूजिताः स्त्रियः ॥

यतमिति वी. मि. लक्ष., १६६

1 ललाटं विहितमिति गृ. रत्ना., पृ. २१

2 अधन्या हस्ति० इति गृ. रत्ना., पृ. २१; सुधन्या इति वी. मि. लक्ष., पृ. १६७

3 खरा इति गृ. रत्ना., पृ. २२

4 स्वकुलं द्योतयेत् इति गृ. रत्ना., पृ. २२

5 या स्याद्या च वायसगामिनी इति गृ. रत्ना., पृ. २२

6 शुभङ्कराः इति गृ. रत्ना., पृ. २२

आश्वलायनः[1]

दुर्विज्ञेयानि[2] लक्षाणान्यष्टौ पिण्डान् कृत्वा "ऋतमग्नौ प्रथमं यज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदिदमिह प्रतिपद्यताम्। यत्सत्यं तद्दृश्यतामि"ति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥

क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः[3] प्रजा भविष्यतीति विद्यात्। गोष्ठात्पशुमती, वेदिपुरीषाद्ब्रह्मवादिनी[4]। अविनाशिनो ह्रदात् सर्वसम्पन्ना, देवनात् कितवी, चतुष्पथाद्विप्रव्राजिनी, ईरिणादनपत्या,[5] श्मशानात् पतिघ्नी ॥

अष्टपिण्डकरणं च वक्ष्यमाणक्षेत्रादिमृत्तिकाभिः। 'गोष्ठं' गवामवस्थानदेशः। 'वेदिपुरीषं' वेदिमृत्तिका। 'देवनं' दीव्यतेऽस्मिन्निति द्यूतस्थानम्। 'विप्रव्राजिनी' भर्तारं विहाय परिव्रजनशीला। 'ईरिणं' ऊषरम्।

1 १.५

2 लक्षणानि दुर्ज्ञानानि, अष्टौ पिण्डान् कृत्वा 'ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम्। यदि च कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद् दृश्यताम्' इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयात् 'एषामेकं गृहाण' इति इति या. अप., ७८

3 अर्थवती अस्या इति गृ. र., २२; मुद्रितसूत्रपुस्तके अन्नवतीति पाठः

4 ब्रह्मवर्चस्विनी इति या. अप., ७८; मुद्रितपुस्तके च

5 अधन्या इति या. अप., ७८; मुद्रितपुस्तके च; जारिणादनपत्येति गृ. र., २३

मनुः[1]

महान्त्यपि समृद्धानि गोजाविधनधान्यतः ।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो लोमशार्शसम्[2] ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥

'महान्ति' [3]बहुजन्यानि । 'समृद्धानि' सम्पन्नानि वक्ष्यमाणैर्गवादिभिः । 'स्त्रीसम्बन्धे' कर्तव्य इति शेषः । 'हीनक्रियं' यथाविहितगर्भाधानादिक्रियारहितम् । 'निष्पुरुषं' कन्याजन्मबहुलम् । 'निश्छन्दो' वेदाभ्यासरहितम् । 'लोमशं' अत्युल्बणलोमयुक्तम् । 'अर्शसं' अर्शोव्याधियुक्तम् । 'श्वित्रि' श्वेतकुष्ठयुक्तम् ।

हारीतः

श्वित्रिकुष्ठ्युदरियक्ष्मामयाव्यपस्मार्यनार्षेयमब्रह्मसमानार्षेयं[4] चेत्येतानि अपतितान्यपि कुलानि वर्जनीयानि भवन्ति । कुलानुरूपाः प्रजाः सम्भवन्तीति । आदितः षट् [5]अयज्ञियत्वादनार्षेयाणि । अदैवत्वादब्राह्म-

1 ३. ६.

2 रोमशार्शसम् इति या. अप., ८४, गृ. र., मुद्रित पुस्तके च; अत्यन्त रोमयुक्तमिति व्याख्यातं चण्डेश्वरेण ।

3 बहुसम्बन्धीनि इति गृ. रत्ना., २३

4 अल्पायुरनार्श ( र्श ) स ( सा ) [ नार्षेया ] ब्रह्मसमानार्षेयं इति या. अप., ८४

5 अयज्ञियत्वादनार्षेयम् । अदैवत्वादब्रह्म । एककुलत्वात् समानार्षेयमिति । इति या. अप., ८४

णकुलत्वात्समानार्षेयमिति। तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतो नग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत्[1] ॥

आमयाव्यत्र उक्तेतरसञ्चारिरोगवान्। अत्र श्वित्र्यादिकुलानि षट् वर्जनीयानीत्यत्र हेतुः—'कुलानुरूपाः प्रजा भवन्ती'ति। इतिकरणं हेतौ। 'अनार्षेयं' अस्मर्यमाणगोत्रप्रवरम्। तस्य वर्ज्यत्वं 'अयज्ञियत्वात्'। अयज्ञियत्वं च यज्ञेषु चास्मर्य्यमाणप्रवरस्याऽनधिकारात्। 'अब्रह्म' अविद्यमानवेदाध्ययनम्। तद्वर्ज्यत्वे हेतुः—'अदैवत्वादि'ति। दैवकर्मशून्यत्वात्। 'नग्निका' दशवर्षा। 'दशवर्षा तु नग्निका' इति भविष्यपुराणवचनात्।

पुनर्हारीतः

[ सत्यश्च मत्रैवं ] तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेत्। पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः।[2]

यमः

चतुर्दश [3]कुलानीमान्यविवाह्यानि निर्दिशेत्।
अनार्षेयं[4] ब्राह्मणानां ऋत्विजां च विवर्जयेत् ॥
अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत्।
हीनाङ्गमतिरिक्ताङ्गं आमयाविकुलानि च ॥

1 विन्देत इति या. अप., ८४
2 [ ] न दृश्यते। इदं सर्वं अपरार्के दृश्यते।
3 कुलानीमान्यविवाह्यानि निर्दिशेत् गृ. रत्ना., पृ. २५; या. अप., पृ. ८५
4 अनार्षेयीं गृ. र., पृ. २५

श्वित्रिकुष्ठिकुलादीनां कुर्य्याद्धि[1] परिवर्जनम् ।
सदा कामकुलं वर्ज्यं लोमशानां च यत् कुलम् ॥
अपस्मारिकुलं [2]यच्च यच्च पाण्डुकुलं भवेत् ।

'ऋत्विजो'ऽत्र निन्द्ययाजकाः । 'कामकुलं' कामप्रधानं कुलम् । 'अतिवर्णं' अतिकृष्णमतिगौरं वा ।[3]

मनुः[4]

नोद्वहेत्कपिलां कन्यां नाऽधिकाङ्गीं न रोगिणीम् ।
नाऽलोमिकां [5]नाऽतिलोमां न वाचालां[6] न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नाऽन्त्यपर्वतनामिकाम् ।
न[7] पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥
यस्यास्तु न भवेद्भ्राता न[8] विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥

यस्या भ्राता न भवेत् तां पुत्रिकाधर्मशङ्कया नोपयच्छेदित्यर्थः । पुत्रिकाधर्मश्चाऽयं यत्तत्पुत्रेण कन्यापिता पुत्रवान् जनकः ।

1 कुर्याच्चेति गृ. र., पृ. २५ ; वेति या. अप., पृ. ८५
2 चैव पाषण्डानां कुलं भवेत् इति गृ. रत्ना., पृ. २५
3 इदं सर्वं अपरार्के ( पृ. ८५ ) दृश्यते ।
4 ३. ८.
5 नातिलोम्नीं गृ. रत्ना., पृ. २६ ; या. अप., पृ. ७८ ; या. वी., पृ. १०८
6 वाचाटां बहुभाषिणीम् इति वी. मि. संस्कार., ७३१.
7 नाहिपक्षि न पक्ष्याहिपुष्पनाम्नीं न इति या. अप., ७८
8 न विज्ञेयस्तथा इति गृ. रत्न., २६

गौतमः[1]

अभिसन्धिमात्रात्[2] पुत्रिकेत्येकेषां तच्छङ्कया नोपयच्छेताऽभ्रातृकाम् ।

'अभिसन्धिमात्रात्' अस्मादयमेतदीयमपत्यमित्यभिप्रायात् । मात्रशब्देन वह्निं प्रजापतिं चेत्यादि गौतमोक्तपुत्रिकाविधिव्यवच्छेदः ।

कात्यायनः

लोकापवाददुष्टा या[3] दुष्टा सा तु प्रकीर्तिता ।
अन्यत्राऽऽसक्तचित्ता या[4] या स्यात् संस्पृष्टमैथुना ॥

'संस्पृष्टमैथुना' क्षतयोनिः ।

नारदः[5]

दीर्घकुत्सितरोगार्त्ता व्यङ्गा संस्पृष्टमैथुना ।
धृष्टाऽन्यगतभावा च [6]कन्यादोषाः प्रकीर्तिताः ॥

'दीर्घः' चातुर्थिकज्वरादिः[7] । 'कुत्सितरोगो' अपस्मारादिः ।

1 ३. १०. १७. [ २८, १९ ]

2 अभिसम्बन्धिमात्रात् पुत्रिकेत्येकेषां । तत्संशयान्नोपयच्छेताभ्रातृकामिति मुद्रितपुस्तकपाठः

3 युक्ता या सा तु दुष्टा गृ. र., पृ. २४

4 गृ. र., पृ. २४, पाठः आदृतः

5 दुष्टा इति मुद्रितपुस्तके, १२, ३६

6 कल्प्यदोषा, गृ. रत्न., २४; कन्यादोषाः प्रकीर्तिताः, या. अप., ९५.

7 चिरकालव्यापी, गृ. र., पृ. २४

विष्णुपुराणे[1]

नातिकेशामकेशां वा नाऽतिकृष्णामपिङ्गलाम्[2] ।
निसर्गतो ऽधिकाङ्गीं च हीनाङ्गीं [3]चाऽपि नोद्वहेत् ॥
नाऽविशुद्धां सरोगां वा [4]कुटिलां वाऽतिरोगिणीम् ।
न दुष्टां [5]दुष्टभावां वा व्यङ्गिनीं पितृमातृतः ॥
न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घरस्वरां [6]क्षामां तथा काकस्वरां न च ॥
नाऽतिबद्धेक्षणां[7] तद्वद्वृत्ताक्षीं नोद्वहेत्स्त्रियम् ।
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ॥
गण्डयोः [8]कूपकौ यस्या हसन्त्याश्चैव जायते ।
नोद्वहेत्तादृशीं[9] कन्यां प्राज्ञः कार्यविचक्षणः ॥
नाऽतिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ।
आपीतहस्तपादां[10] च न कन्यामुद्वहेद्बुधः ॥

1 ३, १०, १६–२२. ( गोरखपुर पुस्तके )
2 कृष्णां न, गृ. र., पृ, २६
3 विसङ्गतां विकलाङ्गीमधिकाङ्गीं च, गृ. र., पृ. २६
4 कुलटां चातिरोगिणीं, गृ. र., पृ. २७; अकुलजामिति मुद्रित पुस्तके
5 च दुष्टभावां, इति गृ. रत्ना., पृ. २७; 'काकुवाक्यां' इति वी. मि. सं., ७३१; दुष्टवाक्यां वा इति मुद्रित पुस्तके
6 बालां, गृ. र., पृ. २७.
7 श्वेतेक्षणां तद्वद्रक्ताक्षीं, गृ. र., पृ. २७.
8 कूपकं, गृ. र., पृ. २७; कुपरौ यस्या हसन्त्यास्तां न चोद्वहेत् इति मु. पु.
9 इदं वाक्यं मुद्रित पुस्तके न दृश्यते
10 आपीत, गृ. र., पृ. २७.

न वामनां नाऽतिदीर्घां नोद्वहेत्सन्नतभ्रुवम्[1] ।
न चाऽतिच्छिद्रदशनां न करालमुखीं तथा ॥

'अतिकेशां' बहुकेशाम् । 'निसर्गतः' स्वभावतोऽधिकाङ्गीम् । 'व्यङ्गिनीं पितृमातृतः' यस्याः पितरौ व्यङ्गौ भवतः । 'श्मश्रुमती' श्मश्रुस्थाने दीर्घरोमा । 'व्यञ्जनवती' कुचादियुक्ता । 'क्षामा' कृशा । 'अतिबद्धेक्षणां' निमीलितप्रायनेत्राम् । 'वृत्ताक्षीं' वर्तुलाक्षीम् । 'करजं' नखम् । 'आपीतं' इषत्पीतम् । 'सन्नतभ्रुवं' संलग्नभ्रुवम् ।

करालमुखीं नोद्वहेदित्यनुवृत्तौ ब्रह्मपुराणे

अलोमामतिलोमाञ्च [2]वाचाटां केकरेक्षणाम् ।

'केकरेक्षणां' वक्रैकनयनाम् ।

कश्यपः

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ॥
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ।
उदकस्पर्शिता या च या च पाणिगृहीतिका ॥
अग्निं परिगता या च पुनर्भूप्रसवा च या ।
इत्येताः कश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

'कृतकौतुकमङ्गला' [3]कृतकङ्कणबन्धना । 'उदकस्पर्शिता' उदकपूर्वं दत्ता ।

1 संहतभ्रुवं इति. गृ रत्ना., पृ. २७.

2 वाचालां, गृ. र., पृ. २७.

3 बद्धकङ्कणा इति गृ. र., २८

स्मृतिः

वाग्दत्ता मनोदत्ता, अग्निं परिगता, सप्तमं पदमानीता, भुक्ता, गृहीतगर्भा, प्रसूता, सप्तविधा पुनर्भूस्तां गृहीत्वा वृथाकारीं[1] न प्रजां न धर्मं विन्देत्।

'प्रजां' स्वजातिधर्मामिति शेषः। धर्मं पत्नीसाध्यम् अग्निहोत्रादि। अत्र च प्रकरणे येषां विधिनिषेधानां दृष्टगुणदोषानुषङ्गो नाऽस्ति, यथा—'असपिण्डा च या मातु'रित्येवमादीनां तदतिक्रमे भार्यात्वमेव न भवति। भार्याशब्दस्य तु आहवनीयादिशब्दवत्संस्कारशब्दत्वात्। येषां तु दृष्टगुणदोषदर्शनेन विधिनिषेधौ, यथा—'स्फीतादपि न सञ्चारिरोगदोषसमन्विता'दित्यादि न तदतिक्रमे भार्यात्वाभावः, केवलं नियमातिक्रमात् प्रायश्चित्तमात्रं भवति। ऋक्षवृक्षनाम्न्यादिषु तु दृष्टगुणदोषानुविधायिविधिनिषेधप्रकरणमध्यपातात्[2]। मनुना सपिण्डादि प्रति निषेधस्य च पृथग्विधानाददृष्ट[3] एव दोषः कल्प्यः। परित्यागश्च यथा सगोत्रायाः स्मर्यते—

'सगोत्रां[4] चेदमत्योपयच्छेत्। मातृवदेनां बिभृयादि'ति बौधायनवचनात्। न तथा कपिलानदीनाम्न्यादेः। एवं वरेऽपि परिवेत्तृनपुंसकादावयमेव न्यायः समानः।

1 कारी न प्रजां धर्मम् इति गृ. र., २८.

2 मध्यपातात् गृ. र., २९

3 पृथक् करणाददृष्ट एव दोषः कल्प्यः गृ. र., २९.

4 बौ. ध., p. 116, edn. Chowkhamba, Benares.

# अथ वरनिरूपणम्

नारदः[1]

उन्मत्तः पतितः [2]क्लीबो दुर्भगस्त्यक्तबान्धवः ।
कन्यादोषौ च[3] यौ पूर्वावेष दोषगुणो वरे ॥

'दुर्भगः' स्त्रीद्वेष्यः । 'त्यक्तबान्धवः' अदुष्टान् बन्धून्विहाय स्वतन्त्रव्यवहारी । 'कन्यादोषौ च यौ पूर्वा'विति ।

'दीर्घकुत्सितरोगार्ता[4] व्यङ्गा संस्पृष्टमैथुना ।
धृष्टाऽन्यगतभावा च कन्यादोषाः प्रकीर्तिताः' ॥

इत्यत्र श्लोके उक्तौ 'पूर्वौ' प्रथमौ दीर्घकुत्सितरोगत्वव्यङ्गत्वरूपौ नारदोक्तावेव ।

कात्यायनः

निष्क्रान्तस्तेन[5] विद्विष्टस्तथा त्यक्तः स्वबन्धुभिः ।
अन्यजातिः क्षयी दासो लिङ्गस्थश्चोदरी यदि ॥
उन्मत्तः पतितः [6]कुष्ठी तथा षण्ढः सगोत्रजः ।
चक्षुश्श्रोत्रविहीनश्च तथाऽपस्मारदूषितः ॥

1 १२, ३७

2 क्रूरः इति गृ. र., २९

3 तु यौ पूर्वाविमौ दोषगुणौ वरे इति गृ. रत्न., २९; तु यौ पूर्वावेष दोषगणो वरे, या. अप., ९५

4 १२, ३६

5 स्वेन विद्विष्टः, इति गृ. र., ३०

6 क्रूरस्तथा तुल्यः सगोत्रतः [इति गृ. रत्न., ३०

वरदोषाः स्मृता ह्येते कन्यादोषाः प्रकीर्तिताः ।
प्राक्पश्चाद्वा समुत्पन्ना दानं तत्र विवर्जयेत् ॥

'निष्क्रान्तो' देशान्तरगमनशीलः । 'दासः' प्रेष्यः । 'लिङ्गस्थश्चोदरी यदि'[1] उदरम्भरणार्थं यद्याश्रमलिङ्गधारी । 'प्राग्' विवाहोपक्रमात् । 'पश्चात्' वाग्दानानन्तरम् ।

मनुः[2]

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित्[3] ॥

गुणहीनाय न देयेत्यत्र तात्पर्य्यम्, रजस्वला तु न धार्य्या ।

यमः

दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः ।
न त्वेव गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

'शक्तितः' सामर्थ्ये सति । 'नग्निकामेव' दशवर्षां दद्यात् ।

1 'लिङ्गस्थश्चोदरी यदि' उदरभरणार्थं यदि आश्रमलिङ्गधारी इति कल्पतरुः । अन्ये तु लिङ्गस्थो यत्याश्रमलिङ्गधारी । तथा उदरी यदि उदरभरणार्थं यावत् तावत् व्यापारकारी इति द्वयमपि विवक्षितमित्याहुः इति गृ. र., ३०

2 ९. ८९.

3 काममामरणात् तिष्ठेद्गृहे कन्यर्तुमत्यापि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ इति गृ. र., ३०

मनुः[1]

उत्कृष्टायाऽभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥

'उत्कृष्टाय' कुलशीलादिभिः । 'अप्राप्तां' यावद्वयस्का देयत्वेनोक्ता तावद्वयोऽप्राप्तवतीमपि ।

आश्वलायनः[2]

कुलमग्रे परीक्षेत [ये] 'मातृतः पितृतश्चे'ति यथोक्तं पुरस्ताद्[3] बुद्धिमते कन्यां प्रयच्छेत् ।

शातातपः

वरो वरयितव्योऽर्थी कुलशीलसमन्वितः ।
रूपवान् पण्डितः [4]प्राज्ञो युवा दोषविवर्जितः ॥

कन्यागुणाधिकारे याज्ञवल्क्यः[5]

एतैरेव[6] गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥

1 ९. ८८.

2 १. ५

3 परस्तात् शुद्धिमते कन्यां प्रयच्छेत इति गृ. र., ३१

4 प्राज्ञः सुरादोषविवर्जितः इति गृ. रत्न., ३१

5 १. ५५.

6 वरगुणैः इति गृ. र., ३१

नारदः[1]

परीक्ष्यः पुरुषः पुंस्त्वे निजैरेवाऽङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन स कन्यां [2]लब्धुमर्हति ॥
सुबद्धजत्रु [3]जान्वस्थिः सुबद्धांसशिरोधरः ।
स्थूलगाढस्तनूजत्वगविलग्नगतिश्वरः[4] ॥
रेतोऽस्य प्लवते चाऽप्सु [5]छर्दिमूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेभिर्विपरीतैस्तु [6]षण्डकः ॥
चतुर्दशविधः [7]शास्त्रे षण्ढो दृष्टो मनीषिभिः ।
चिकित्स्यश्चाऽचिकित्स्यश्च [8]तेषामुक्तो विधिः क्रमात् ॥
निसर्गषण्ढो बद्धश्च पक्षषण्ढस्तथैव च[9] ।
अग्निशापाद्गुरोः क्रोधाद्देवक्रोधात्तथैव च[10] ॥

1 १२. ८–१९

2 लब्धुं इति गृ. र., ३१ ; लघुमर्हति इति मूलपुस्तके

3 जान्वस्थिः सुबन्धांशशिरोरुहः इति गृ. र., ३१

4 स्थूलघाटस्तनूरुत्वगविलग्नगतिस्वरः इति गृ. र., ३१, मुद्रित नारदीये च

5 मूत्रं च फेनिलं भवेत् इति गृ. र., ३२ ; यस्याप्सु प्लवते वीर्यं ह्रादि-मूत्रं इति या. वी., ११७ ; ह्रादि मूत्रं च इति या. अप., ८५ ; रेतो-स्योत्प्लवते नाऽप्सु ह्रादिमूत्रमिति मुद्रितनारदीये.

6 विपरीतस्तु षण्डकः इति गृ. र., ३२ ; या. अप., ८५

7 पण्डो दृष्टः इति गृ. र., ३२ ; पण्डः शास्त्रे दृष्टो इति या. अप., ८६

8 तथा तेषां इति गृ. र., ३२

9 निसर्गषण्डो वद्ध्क्षुश्च पक्षपण्डस्तथैव च इति गृ. र., ३२ ; बीजौ च शालीनः, या. अप., ८६ ; वध्रिश्च इति मुद्रितनारदीये.

10 अभिशापाद्गुरो रोषात् इति गृ. र., ३२ ; अभिशापाद्गुरो रोगात् ; या. अप., ८६, मुद्रित नारदीये ( पृ. १७४ )

ईर्ष्याषण्डश्च[1] सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तमोघबीजौ[2] च शालीनोऽन्यापतिस्तथा ॥
तत्राद्यावप्रतीकारौ[3] पक्षाख्यो मासमाचरेत् ।
अनुक्रमात् त्रयस्याऽस्य कालः संवत्सरः स्मृतः ॥
ईर्ष्याषण्डादयो[4] येऽन्ये चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत् [5]क्षतयोन्योऽपि च स्त्रियः ॥
आक्षिप्तमोघबीजाभ्यां[6] कृतेऽपि पतिकर्मणि ।
पतिरन्यः [7]स्मृतो नार्या वत्सरार्द्धं प्रतीक्षते ॥
शालीनस्याऽपि धृष्टस्त्रीसंयोगाद्भ्रश्यति[8] ध्वजः ।
तं[9] हीनवेगवन्तं स्त्री लालनाभिरुपाचरेत् ॥
अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति ।
लभेत साऽन्यं भर्तारमेतत्कार्यं प्रजापतेः ॥

1 पण्डश्च इति गृ. र., ३२ ; या. अप., ८६

2 वीर्यौ च शालीनः इति गृ. र., ३२ ; निसर्गषण्डो वध्रश्च पक्षपण्डः, या. अप., ८६ ; अक्षिप्तो योघबीजश्च इति मुद्रितनारदीये

3 तत्राद्यावप्रतीकारौ पक्षाख्यं इति. गृ.र., ३२; या.अप., ८६, मुद्रितनारदीये च

4 पण्डादयो इति गृ. र., ३२ ; या. अप., ८६,

5 क्षतयोन्यापि च स्त्रिया इति गृ. र., ३२ ; या. अप., ८६, मुद्रितनारदीये च

6 वीर्याभ्यां कृतेऽपि इति गृ. रत्ना., ३२ ; या अप., ८६,

7 ततो........प्रतीक्ष्य तु इति या. अप., ८६,

8 पतति ध्वजः इति गृ. र., ३२ ; भ्रश्यति द्वि ( ध्व ) जः इति मुद्रित नारदीये

9 तं हीनवेगं भर्तारं स्त्री सर्वार्थैः इति गृ. र., ३२ ; तं हीनविषयं तु स्त्री वर्षं क्षिप्त्वाऽन्यमाश्रयेत् इति या. अप., ८६ ; तं हीनवेगं अन्य स्त्री न । बालाद्याभिरुपाचरेत् इति मुद्रितनारदीये

अपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं बीजिनो नराः।
क्षेत्रं बीजवते देयं नाऽबीजी क्षेत्रमर्हति ॥

'सुबद्धं' सुश्लिष्टम्। 'जत्रुः' ग्रीवास्कन्धयोः सन्धिः। 'घाटा' ग्रीवायाः पश्चाद्भागः। 'निसर्गषण्ढः' लिङ्गवृषणहीन एवोत्पन्नः। 'बद्धः'[1] गालिताण्डः। 'पक्षषण्ढो' यस्य पक्षान्तरिता रतिशक्तिः। 'गुरोरभिशापात्' एकः, 'देवक्रोधात्' देवनिन्दाजानितात् क्रोधात्। 'ईर्ष्याषण्ढः' स्वस्त्रीविषये ईर्ष्यया स्तम्भितरेताः। 'सेव्यः' स्त्रिया बहुप्रकारं सेव्यमानोऽपि गतरिरंसोऽजातरिरंसः। [2]'वातरेतो' यस्य रतान्ते लिङ्गेन वातनिःसरणमात्रम्। 'मुखेभगः' यः परमुख एव भगकार्य्यं करोति। 'आक्षिप्तरेताः'[3] विसर्गसमये यस्य रेतः प्रत्यक् प्रवर्तते। 'मोघबीजः' यस्य गर्भाधानसमर्थं रेतो न भवति। 'शालीनः' [4]यस्य धृष्टस्त्रीसन्निधानात् लिङ्गपातः। 'अन्यापतिः' यस्य स्वभार्याया व्यतिरिक्तायामेव योषिति पुंस्त्वम्। 'मासमाचरेत्' मासं यावत् [5]प्रतीक्षेत। एतेभ्यः पूर्वज्ञातेभ्यो न कन्या देया। यदि वा ऽज्ञानाद्द्यात्तदा चिकित्स्येषु चिकित्सां यावत्प्रतीक्षेत, अचिकित्स्येषु तु [ [6]तदा दत्ताप्याच्छिद्य ] अन्यस्मै देयेति ॥

1 वद्ध्रुः गलिताण्डादिकः इति गृ. र., ३२

2 वातरेताः यस्य रतान्ते लिङ्गे वातनिस्सरणमात्रं इति गृ. र., ३३

3 आक्षिप्तरेताः इति गृ. र., ३३

4 यस्य धृष्टस्त्रीसन्निधानात् लिङ्गपातः, गृ. र., ३३

5 प्रतीक्षेत। एभ्यः पूर्वज्ञातदोषेभ्यः इति गृ. र., ३३

6 दत्त्वापप्याच्छिद्य, इति उदयपुरमातृकायाम्

## अथ दारानुकल्पः

तत्र मनुः[1]

सवर्णाग्रे[2] द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥
शूद्रस्य[3] भार्या शूद्रैव सा च स्वा च विशः स्मृतः ।
ते च स्वा चैव राज्ञस्तु[4] ताश्च स्वा चाऽग्रजन्मनः ॥

अयमर्थः—सजातीयकन्याप्राप्तौ सत्यां सैव प्रशस्ता प्रथमकल्पे । तदलाभे च सकामस्य क्रमेण इमाः क्षत्रविट्-शूद्रकन्यका विवाह्याः । तत्राऽपि पूर्वपूर्वाभावे उत्तरोत्तरा विवाह्याः । निष्कामस्तु यद्याश्रमेऽसमर्थः स्नातकव्रतैरेव वर्त्तेत ।

तथा च पैठीनसिः

अलाभे[5] कन्यायाः स्नातकव्रतं चरेत् । अपि वा क्षत्रियायां पुत्रमुत्पादयेत् । वैश्यायां शूद्रायां वेत्यन्य इति ।

यमः

भार्याः [6]स्वाऽन्याश्च सर्वेषां धर्मः प्राथमकल्पिकः ।

1 ३. १२
2 सवर्णाश्च इति गृ. र., ३४
3 शूद्रैव भार्या शूद्रस्य इति गृ. र., ३४ ; या. अप., या. वी., ८६, ११८
4 राज्ञः स्युः इति गृ. र., ३४ ; या. अप., ८८
5 अलाभे कन्यकायाश्च स्नातकव्रतमाचरेत् इति गृ. र., ३४
6 स्वजात्यां सर्वेषां धर्मः प्रथमकल्पकः इति गृ. र., ३४

आनुपूर्व्येण भार्याः स्युश्चतस्रो ब्राह्मणस्य तु ॥
क्षत्रियस्याऽऽनुपूर्व्येण [1]तिस्रो ज्ञेया वराः स्त्रियः ।
वैश्यस्य [2]चाऽवरे धर्म्ये द्वे भार्ये [3]चाऽब्रवीन्मनुः ॥
शूद्रः [4]स्वजातिं विन्देत तास्वपत्यं समं भवेत् ।

समत्वं च पुत्रोत्पत्तिनिमित्तपैतृकऋणापाकरणाभिप्रायम्।

अत्र साजात्यानन्तरं नारदः[5]

ब्राह्मणस्याऽऽनुलोम्येन [6]स्त्रियोऽन्यास्तिस्र एव तु ।
शूद्रायाः प्रातिलोम्येन तथाऽन्ये पतयस्त्रयः[7] ॥
द्वे भार्ये क्षत्रियस्याऽन्ये वैश्यस्यैका प्रकीर्तिता ।
वैश्याया द्वौ पती ज्ञेयावेकोऽन्यः [8]क्षत्रियः पतिः ॥

'अन्या' अन्यजातीया वैश्यस्य एकाऽन्येति शेषः । वैश्याया द्वौ पती ज्ञेयावन्याविति शेषः ।

वसिष्ठः[9]

तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्वेण, द्वे राजन्यस्य ।

1 गम्यास्तिस्रोऽवराः स्त्रियः इति गृ. र., ३४
2 अवरधर्मे इति गृ. र., ३४
3 इत्यब्रवीन्मुनिः इति गृ. र., ३४
4 स्वजातीः इति गृ. रत्ना., ३४
5 १२. ५–६
6 तिस्रोऽन्याः स्त्रिय एव तु इति गृ. र., ३५
7 अन्ये पतयस्त्रयः इति. गृ. र., ३५
8 क्षत्रियापतिः इति गृ. रत्ना., ३५ मुद्रितनारदीये च
9 १. २४

एकैका वैश्यशूद्रयोः। [1]शूद्रामप्येके मन्त्रवर्जं, तत्र न तथा कुर्यादतो हि ध्रुवः कुलापकर्षः प्रेत्य चाऽस्वर्गः।

याज्ञवल्क्यः[2]

यदुच्यते[3] द्विजातीनां शूद्राद्दारोपसङ्ग्रहः।
नैतन्मम मतं यस्मात्तत्राऽस्माज्जायते[4] स्वयम्॥

विष्णुः[5]

द्विजस्य भार्या शूद्रा तु धर्मार्थं न भवेत् क्वचित्।
रत्यर्थमेव सा तस्य [6]रागान्धस्य प्रकीर्तिता॥

'रत्यर्थमेवे'ति। न तु सहधर्मचारिणी भवतीत्यर्थः।

मनुः[7]

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते॥

श्राद्धादिधर्मकार्यार्थमिति शेषः।

1 शूद्रामप्येके मन्त्रवर्जं तद्वत्।
तथा—न कुर्याद्यतो हि ध्रुवः कुलापकर्षः प्रेत्य चास्वर्गः, इति गृ. र., ३५
2 १. ५६.
3 कुलं नश्येद्विजातीनां शूद्रभार्योपसङ्गतम्।
न तन्मम मतं यस्मात् तत्र नो जायते सुतः॥ इति गृ. र., पाठः
4 तत्रात्मा इति या. अप., या. वी., ८७, ११८
5 २६. ५
6 रागार्थस्य इति गृ. रत्ना., ३५
7 ३. १४

मनुविष्णू[1]

हीनजातिस्त्रियं[2] मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव [3]वहन्त्याशु ससन्तानानि शूद्रताम् ॥

मनुः[4]

शूद्रावेदी [5]पतत्यत्रेः उतथ्यतनयस्य च ।
गौतमस्य[6] सुतोत्पत्त्या तदपत्यतया भृगोः ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

'उतथ्यतनयस्य' गौतमस्य [7]मतमित्यध्याहारः सर्वत्र ।

शङ्खः

आपद्यपि न कर्तव्या शूद्रा भार्या [8]द्विजेन तु ।

1 मनुः, ३, १५ ; वि., २५, ६
2 जातिं, या. अप., ८७
3 नयन्त्याशु सन्तानानि च इति गृ. र, ३६ ; या. अप., ८७
4 ३, १६–१७
5 शूद्रावेदी पतत्यत्रेः इति गृ. र., ३६ ; या. अप., ८८
6 शौनकस्य इति गृ. र., ३६ ; या. अप., ८८, मुद्रित मनुस्मृतौ च ; यतः उतथ्यतनयः गौतमः
7 अन्यथा भविष्ये—

"शूद्रामारोप्य शय्यान्तु पतितोऽत्रि र्बभूव ह ।
उतथ्यः पुत्रजननात् पतितत्त्वमवाप्तवान् ॥
पुत्रस्य पुत्रमासाद्य शौनकश्शूद्रतां गतः ।
भृग्वादयोप्येवमेव पतितत्वमवाप्नुयुः ॥"

अत्र वैमत्यानि व्याख्यान्तराणि मनुटीकासङ्ग्रहे, पृ. २३४–२३६ द्रष्टव्यानि ।

8 द्विजन्मना इति गृ. र., ३६

यस्मात्तस्यां[1] प्रसूतस्य निष्कृतिर्न विधीयते ॥
तपस्वी [2]यज्ञशीलश्च सर्वधर्मभृतां वरः ।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे ॥
नीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः[3] ।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितस्तु ते ॥
सपिण्डीकरणं कार्य्यं कुलजस्य तथा ध्रुवम् ।
श्राद्धद्वादशकं[4] कृत्वा श्राद्धे प्राप्ते त्रयोदशे ॥
सपिण्डीकरणानर्हो[5] न च शूद्रस्तथा ध्रुवः[6] ।
तस्मात्सर्वप्रयत्नेन शूद्रां भार्यां विवर्जयेत् ॥

यमः

ब्राह्मणो वृषलीं गत्वा [7]त्र्यहं भवति सूतकी ।
अथाऽस्यां गर्भमाधत्ते ब्राह्मण्यादेव हीयते ॥
न ब्रह्महा ब्रह्महा वै ब्रह्महा वृषलीपतिः ।
यस्तत्र जायते गर्भः स तेन [8]ब्रह्महा भवेत् ॥

1 तस्यां तस्य प्रसूतस्य निष्कृतिर्नोपपद्यते इति गृ. र., ३६ ; या. वी., ११८ च
2 धर्मशीलश्च धर्मकर्मभृतां इति गृ. र., ३७
3 इत आरभ्य सार्धः श्लोकः गृ. रत्ना., न दृश्यते
4 श्लोकार्धं गृ. रत्नाकरे न दृश्यते
5 करणे नार्हो इति गृ., ३७
6 ध्रुवं इति गृ. र., ३७
7 सत्यं इति गृ, र., ३७
8 ब्राह्मणो हतः इति गृ. रत्ना., ३७

हारीतः[1]

ब्राह्मणो वृषलीं गत्वा सद्यो गच्छेदधोगतिम् ।
अथास्यां गर्भमाधत्ते पतत्याशु न संशयः ॥

ब्रह्महा न भवत्यन्यो ब्रह्महा वृषलीपतिः ।
यस्तस्यामाहितो गर्भः स तेन ब्राह्मणो हतः ॥

उशनाः

निष्कृतिः स्यात् सुरापस्य हत्वा वा ब्रह्मवादिनम् ।
वृषल्यभिप्रजातस्य[2] निष्कृतिर्नोपपद्यते ॥

मनुयमहारीताः[3]

वृषलीपीतफेनस्य[4] निश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न[5] विधीयते ॥

'पीतफेनस्य' पीतमुखासवस्य ।

उशनाः पतति वृषलीपतिरित्याचक्षते । न पततीत्येके । ब्राह्मणकल्पविहिताश्चतस्र आनुपूर्व्येण भार्या भवन्तीति वसिष्ठ आह । पतति न पततीति संशयः । वृषल्या पततीति हारीतः । [6]सुतजननात्पततीति शौनकः ।

1 हारीतोक्तं श्लोकद्वयं गृ. रत्नाकरे न दृश्यते
2 प्रयातस्य इति गृ. र., ३७
3 म., ३, १९.
4 फेनपीतस्य इति गृ. र., ३७
5 नोपपद्यते, इति गृ. रत्ना., ३७
6 जननात् पततीति इति गृ. र., ३७

तदपत्यैः पततीति गौतमः[1] ।

हारीतः

अधोऽवर्णेषु[2] प्रजायमानः पतति न पततीति संशयः । न क्षत्रियविशोर्यज्ञसंयोगाद्वृषल्यां यः प्रजायते स पतति गमनादधस्तरां [3]सवर्णक्षये सर्वानेव जनयन्न [4]दुष्यति ।

अत्राऽयं प्रकरणार्थः—द्विजातीनां सजातीयकन्याया अलाभे उत्तरोत्तरविजातीया अपि क्रमेण विवाह्याः । तथा अधिवेदननिमित्ते सति पूर्वभार्यामरणे च सति सवर्णाया अलाभे सति उत्तरोत्तरा विवाह्याः ।

तदुक्तं ब्रह्मपुराणे

क्षत्रविट्शूद्रकन्यास्तु[5] न विवाह्या द्विजातिभिः ।
विवाह्या[6] ब्राह्मणी पश्चाद्विवाह्याः क्वचिदेव तु ॥

'क्वचिदेवे'ति क्वचिदधिवेदननिमित्ते दारमरणे वा सति । शूद्रायां त्वयं विशेषः—यदीतरासु प्रजाया असम्भवे प्रजोत्पत्तिमात्रार्थं साऽपि विवाह्या । वर्णक्षये वा

1 अत्र भृगोरेव तदपत्यैः पततित्यस्य पूर्वमुक्तत्वात् भृगुरिति पाठः साधुस्स्यात् ।

2 अथावर्णेषु प्रजायै न पततीति गृ. र., ३८

3 सवर्णे इति गृ. र., ३७

4 दृष्यति इति गृ. रत्ना., ३८

5 ताः इति गृ. र , ३८

6 विवाह्य ब्राह्मणी इति गृ. र., ३८

सर्वानेव जनयन् न दुष्यतीति हारीतवचनात्। सहधर्मचारिणी तु तदापि सा न भवतीति; 'धर्मार्थं न भवेदि'ति विष्णुवचनात्। शूद्राविवाहनिषेधस्तु [1]इतरासां लाभे। यस्तु शूद्राविवाहे पुत्रपौत्रजनने च निन्दार्थवादः सोऽन्येवंविधविवाहविषयः। निन्दाविशेषश्रवणं तु दोषभूयस्त्वप्रतिपादनार्थम्।

इति दारानुकल्पपर्व

## अथ [2]कन्यावरयोः क्रमनिर्णयः

तत्र विष्णुपुराणे

वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम्।

मनुयमौ[3]

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥

महाभारते

त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम्।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्॥

1 इतरालाभे, इति गृ. रत्ना., ३८

2 कन्यावरवयःक्रमः इति गृ. र., ३९

3 मनुः इति गृ. र., ३९ ( मनु., ७, ७४ )

तदयमेषां वचनानामर्थः—अष्टवर्षपर्य्यन्ता कन्या त्रिगुणवयसैव विवाहिता। उपरि तु द्वादशवर्षपर्यन्ता न्यूनत्रिगुणवयसा वा। द्वादशवर्षोपरि षोडशवर्षपर्य्यन्ता सार्धद्विगुणत्रिगुणकिञ्चिन्न्यूनत्रिगुणवयसा विवाहिता प्रशस्ततरा भवति। अल्पवयस्कमात्रेण विवाहिताऽपि पत्नी भवति । न तु सम्यक् प्रजार्थं भवति। धर्म्मेऽपि सीदति सति सत्वरोऽपि यवीयसीत्वमात्रादरेण विवाहं कुर्य्यादिति ।

## अथ कन्यादातृनिरूपणम्

तत्र याज्ञवल्क्यः[1]

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

विष्णुः[2]

पिता पितामहो भ्राता सकुल्यो मातामहो [3]माता चेति कन्याप्रदाः । [3]पूर्वपूर्वाभावे प्रकृतिस्थः परः पर इति ।

1 १, ६३

2 २४, ३८–३९

3 मातृत्वे सत्वेऽपि मातामहस्य दानाधिकारो यद्यपि यथाश्रुतः प्रतीयते, तथापि व्यवहारानुसारात् सकुल्यान्तरस्य विष्णुवाक्यस्थपूर्वशब्दे प्रतिपाद्यतया मातुरभावे मातामहाधिकार इति गृ. रत्नाकरस्य भावः । पूर्वाभावे प्रकृतिस्थः परः परः इति गृ रत्ना., ४० ; या. अप., ९२, मुद्रितविष्णुस्मृतौ च

'प्रकृतिस्थः' पातित्योन्मादादिदोषरहितः ।

कात्यायनः

स्वयमेवौरसीं दद्यात्पिताऽभावे स्वबान्धवाः ।
मातामहस्ततोऽन्यां [1]हि माता वा धर्मजां सुताम् ॥

'बान्धवाः' अत्र स्मृत्यन्तरोक्ताः कन्याप्रदानाधिकारिणः पितामहादयो विवक्षिताः । 'अन्यां' अनौरसीं । 'धर्मजां' नियोगोत्पादिताम् ।

तथा

दीर्घप्रवासमुक्तेषु[2] पोगण्डेषु च बन्धुषु ।
माता तु समये दद्यादौरसीमपि कन्यकाम् ॥

'पोगण्डो' व्यवहारासमर्थः । 'समये' कन्यादानोचिते काले ॥

## अथ कन्यास्वयंवरः

तत्र नारदः[3]

यदा तु [4]नैव कश्चित् स्यात् कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं परीक्ष्य वरयेत् स्वयम् ॥

1 तु माता वा धर्मजां, या. वी., १२७ ; तु माता या धर्मजां सुतां इति गृ. र., ४०

2 युक्तेषु पोगण्डेषु, इति गृ. रत्ना., ४१ ; अर्धप्रवास इति या. वी., १२७

3 १२, २२–२३

4 कश्चिन्नैव....आश्रयेत्....वरं तस्य इति गृ. र., ४१, मुद्रित पुस्तके च

सवर्णमनुरूपं च [1]कुलरूपवयःश्रुतैः ।
सह धर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥

'ततः' तस्माद्वरात् ।

याज्ञवल्क्यः[2]

गम्यं [3]त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम् ।
'गम्यं' कुलशीलादिभिर्गमनार्हम् ।

मनुः[4]

त्रीणि वर्षाण्युपासीत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
अदीयमाना भर्तारमधिगच्छेत्स्वयं [5]तथा ।
नैनः किञ्चिदवाप्नोति [6] न च यं साऽधिगच्छति ॥
अलङ्कारं नाऽऽददीत पितृदत्तं स्वयंवरा ।
मातृतो[7] भ्रातृदत्तं वा [8]स्तेयं स्याद्यदि तं हरेत् ॥
पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥

1 शीलवय इति. गृ. र., ४१, मुद्रित नारदीये च
2 १, ६४
3 चावेक्ष्य पुरुषं इति गृ. रत्ना., ४१
4 ९, ९०–९३
5 तु या नैन इति गृ. र., ४२
6 न च यं इति गृ. र., ४२
7 मातृकं इति गृ. र., ४२
8 स्तेना स्याद्यदि तं हरेत् इति गृ. र., ४२

'एनः' बन्धकीत्वनिबन्धनम् ।

बौधायनः[1]

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत्[2] ।

विष्णुः[3]

ऋतुत्रय[4]मुपास्यैव कन्या कुर्यात् स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया [5]हरंस्तां न च दुष्यति ॥

गौतमः[6]

त्रीन् [7]कुमार्यृतूनतीत्य स्वयं युज्येताऽनिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् । प्रदानं प्रागृतोः अप्रयच्छन् दोषी । प्राक् वाससः प्रतिपत्तेरित्येके ।

1 ४, १, १३.

2 अविद्यमानं सदृशं गुह्णहीनमपि व्रजेत् इति या. अप., ९३

3 २४, ४०–४१

4 अपास्यैव गृ. र., ४२ ; या. अप., अतीत्यैव इति या. वी., १२८ ; उपास्यैव इति मुद्रित नारदीये

5 हरेत् तां तु बृहस्पतिः इति गृ. र., ४२ ; न विदुष्यति इति मुद्रित नारदीये

6 ( २. ९. २० ); गौतम इति न दृश्यते गृ. रत्ना., ४२

7 कुमार्यृतुमती···पित्र्यानलङ्कारान् । प्रदानं प्रागृतोरप्रयच्छन् दोषी, प्राग्वाससः प्रतिपत्तेरित्येके इति गृ. र., ४२

यमः

कन्या द्वादश वर्षाणि याऽप्रदत्ता [1]वसेद् गृहे।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥

एवं [2]चोपनतां पत्नीं नावमन्येत् कदाचन ।
तां[3] कन्यां बन्धकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥

इदञ्च वर्षत्रयप्रतीक्षणं पित्रादीनां केनचित् कारणेन यत्नवतामपि दानासम्पत्तौ ऋतुत्रयप्रतीक्षणं यथोक्तवर-सम्पत्तावपि पित्रादीनामुपेक्षायां, [4]"तुल्यैः सकामामपि याच्यमाना" मित्यादिवसिष्ठवचनात्।

तथा [5]

कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत्।
न[6] ते दद्युश्च तां सर्व्वे ते स्युर्भ्रूणहभिः समाः ॥

'भ्रूणो'ऽत्र गर्भः।

वसिष्ठः[7]

पितुः प्रमादात्तु यदीह कन्या

1 गृहे वसेत् इति गृ. र., ४३

2 चोपनता पत्नी नावमान्या कदाचन। न च तां बन्धकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत् इति गृ. रत्ना., ४३

3 मनुरिति दृश्यते मूल पुस्तके। रत्नाकरे यमवचनमिति।

4 तुल्यैः सकामामभियाच्यमानां इति गृ र., ४३

5 इदं नारदवाक्यमिति रत्नाकरे दृश्यते ( पृ. ४३ ) नारदीये च, १५, २५

6 न चेद्दद्युस्तु तां भर्त्रे ते स्युर्भ्रूणहभिः समाः इति गृ. र., ४३; न चेत् प्रदद्युस्तां भर्त्रे ते स्युर्ब्रह्महभिः समाः इति या. अप., ९३ ; ते चेन्न-दद्युः तां भर्त्रे इति मुद्रितनारदीये ( पृ. १७६ )

7 १७, ६९

वयःप्रमाणं समतीत्य [1]तिष्ठेत् ।
सा हन्ति दातारमदीयमाना[2]
कालातिरिक्ता गुरुदक्षिणेव ॥

'कालातिरिक्ता' अतिक्रान्तदानकाला यथागुरोर्दक्षिणा अदीयमाना दातारं हन्ति [3]पापोत्पत्तिनिमित्तं भवति तथेत्यर्थः ।

तथा[4]

प्रयच्छेन्नग्निकां कन्यां [5]ऋतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठत्यां दोषः पितरमृच्छति ॥

यावत्तु कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामपि[6] याच्यमानाम् ।
भ्रूणानि तावन्ति हतानि [7]तासां
मातापितृभ्यामिति धर्मवादः ॥

'तुल्यैः' कुलादिना ।

बौधायनः[8]

दद्याद्गुणवते कन्यां नग्निकां धर्मचारिणीम् ।

1 दीयते गृ. र., ४३ मुद्रित वासिष्ठे च

2 उदीक्षमाणा इति गृ. रत्ना , ४३ मुद्रित वासिष्ठे च

3 पापवन्तं करोति तथेत्यर्थ इति गृ. र., ४३

4 १७, ७०–७१

5 भिया इति गृ. र., ४३

6 अभियाच्यमानां इति गृ. र., ४४ मुद्रित वासिष्ठे च

7 ताभ्यां मातापितृभ्यामिति गृ. र., ४४, मुद्रित वासिष्ठे च

8 ४. १. १२

अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

'गुणहीनाय' कुलीनशीलरूपवत्वादिभिर्गुणै रहितायापि तथापि(?) ।

तथा

त्रीणि [1]वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।
स तुल्यं ब्रह्महत्याया दोषमृच्छत्यसंशयम् ॥

'ऋच्छति' प्राप्नोति ।

न याचते चेदेवं [2]स्याद्याचते चेत् पृथक् पृथक् ।
एकैकस्मिन्[3] ऋतौ दोषं पातकं मनुरब्रवीत् ॥

अयमर्थः—यदि कश्चिदपि कन्यां न याचते, तदा वर्ष-त्रयेण भ्रूणहत्या । अथ तुल्यरूपाय याचमानाय न ददाति, तदा प्रत्यृतु ब्रह्महत्या । पातकं चात्र भ्रूणहत्यादोष एवेति ।

अत्रिकश्यपौ[4]

पितुर्गेहे तु या कन्या रजः [5]पश्येदसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्रद्धेयमपाङ्क्तेयं तं विद्यात् वृषलीपतिम् ॥

1 वर्षाण्यृतुमतीं कन्यां यो इति गृ. र., ४४

2 तावदेव याचते इति गृ. र., ४४

3 एकैकस्मिन्नृतौ इति गृ. रत्ना., ४४

4 काश्यपः इति या. अप., ९३ ; अत्रि काश्यपौ गृ. र., ४४

5 पश्यत्यसंस्कृता इति गृ. र., ४४

पैठीनसिः

यावन्नोद्भिद्यतः[1] स्तनौ तावदेव देया। अथ ऋतुमती भवति [2]दाता प्रतिग्रहीता च नरकं [3]प्राप्नोति। पिता पितामहश्चेति विष्ठायां जायते कृमिः। तस्मान्नग्निका दातव्या।

अङ्गिराः

अनवाप्तरजा गौरी [4]प्राप्ते रजसि रोहिणी।
अव्यञ्जनकुचा श्यामा कुचहीना तु नग्निका॥

'अव्यञ्जनकुचे'ति। अविद्यमानौ व्यञ्जनकुचौ यस्याः सा तथा। अनुद्भिन्नरोमस्तनेत्यर्थः।

तथा

व्यञ्जनेषूपयुक्तेषु[5] सोमो भुंक्ते तु कन्यकाम्।
पयोधरे तु गन्धर्वो [6]वह्निर्भुङ्क्ते रजस्वलाम्॥
तस्मादव्यञ्जनोपेतामरजस्कपयोधराम्।
अनुपभुक्तां[7] सोमाद्यैर्दद्याद्दुहितरं पिता॥

'व्यञ्जनानि' उद्भूतव्यञ्जनानि लोमानि।

1 यावन्नोद्भिद्यतः इति गृ. र., ४५
2 तदा दाता इति गृ. र., ४५
3 आप्नोति इति गृ. र., ४५
4 गुप्ते इति गृ. र., ४५
5 उपजातेषु इति गृ. र., ४५
6 अग्निः इति गृ. र., ४५
7 नोपभुक्तां तु इति गृ. रत्ना., ४५

संवर्त्तः

रोमकाले तु सम्प्राप्ते सोमो भुञ्जीत कन्यकाम् ।
रजःकाले[1] तु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलाम् ॥
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

कश्यपः

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते ॥
भुञ्जीत[2] व्यञ्जने सोमो गन्धर्वास्तु पयोधरे ।
वलिमार्गागमे वायू रजस्यग्निः प्रतिष्ठितः ॥
तस्मादव्यञ्जनोपेतामरजस्कपयोधराम् ।
नोपभुक्तां तु सोमाद्यैर्दद्याद्दुहितरं पिता ॥
व्यञ्जनेषु[3] कुलं हन्यात् पितॄन् हन्यात्पयोधरे ।
हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका ॥

भविष्यपुराणे

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकुचा कन्या कुचहीना तु नग्निका ॥

1 ऋतुकाले तु गन्धर्वा वह्निस्तु ऋतुदर्शने इति गृ. रत्ना., ४६

2 भुञ्जीत व्यञ्जनं सोमो गन्धर्वास्तु पयोधरौ ।
कुन्तलस्याऽगमे वायू रजस्यग्निः प्रकीर्तितः ॥ इति गृ. र., ४६

3 अत्रिः—व्यञ्जने तु कुलं हन्यात् पितॄन् हन्यात् पयोधरे । हन्यादिष्टं च इति गृ. रत्ना., ४६

सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका ।
द्वादशे तु भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥

सप्तवर्षैव गौरी च मुख्या[1] ।

'अनवाप्तरजा गौरी'त्येतदप्येतत्परम् ।

विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ।

इति संवर्त्तवचनमपि सप्तमस्यैव गर्भाष्टमत्वात्तत्परमेव । 'नग्निका तु मुख्या, प्रग्वाससः प्रतिपत्ते'रिति गौतमवचनात् परिधानानभिज्ञा । दशवर्षा कुचहीना च सा विवाहे दोषाभावप्रतिपादनार्थं परिभाषिता । प्रशस्यते तु पूर्वोक्तैव ।

अतोऽप्रवृत्ते[2] रजसि कन्यां दद्यात् पिता सकृत् ।
महदेनः स्पृशेदेनमन्यथैष विधिः सताम् ॥

रजःप्रवृत्तेः पूर्वं देयेति 'सतां विधिः' धर्मः । 'अन्यथा' रजःप्रवृत्तौ दानादेनं दातारं महत्पापं स्पृशेदित्यर्थः ।

1 अत्र सप्तवर्षैव गौरी स्यादित्यस्य 'अनवाप्तरजा गौरी' त्यङ्गिरोवाक्यस्यापि सामान्यवाक्यतया एतद्विशेषपरत्वम् । एवञ्च विवाहे अष्टवर्षायाः "शस्यते बुधैरि"ति संवर्त्तवाक्यस्याप्येकमूलत्वात् गर्भाष्टमादावत्रैव तात्पर्यम् इति गृ. र., ४७

2 अतोऽप्रवृत्ते रजसि कन्यां दद्यात्स्वयं पिता ।
महदेनः स्पृशेदेनमन्यथैकविधिः सताम् ॥ इति गृ र., ४७ पाठः

मनुकात्यायनबृहस्पतयः[1]

सकृदंशो[2] निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥

यथा 'अंशो' दायभागः 'सकृन्निपतति' क्रियते, यथा च गवादिद्रव्यं प्रयच्छन् ददानीति सकृदाह, एवं कन्या-दानेऽपि ।

नारदः[3]

ब्राह्मादिषु[4] विवाहेषु पञ्चस्वेष विधिः स्मृतः ।
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥

अयमर्थः[5] 'ब्राह्मादिषु' सगन्धर्वेषु 'एष' सकृद्दानरूपप्र-कारः । आसुरराक्षसपैशाचेषु तु विवाहिताऽप्याच्छिद्या-ऽन्यस्मै देयेत्यर्थः ।

1 मनुः, ९, ४७ ; मनुनारदकात्यायनबृहस्पतयः इति गृ. रत्ना., ४७ ; मनुनारदबृहस्पतिकात्यायनैः इति या. वी., १२२ ; सतां सकृदिति कुल्लूक पाठः

2 इदं वाक्यं दाय–कन्यादान–ददानीति वचनानां सर्वेषामपि सकृत् कर्त-व्यताबोधकं, इह तु खण्डमादायास्य प्राकरणीयत्वमिति परमार्थः । लक्ष्मीधरस्तु—दृष्टान्ते दायददानीतिवचने, कन्यादानं तु दार्ष्टान्तिकमि-त्याह इति गृ. र., ४८

3 १२, २९–३०

4 ब्राह्मादिषु विवाहेषु पञ्चस्वेषु इति या. वी., १२९ ; तु वै दानं इति गृ. रत्ना., ४८

5 रत्नाकरस्तु—एष विधिः सकृत्कन्यादानविधिरित्यर्थः । स च नासुर-राक्षसपैशाचेषु, विवाहिताया अपि गुणवद्वरलाभे पुनर्विवाहो न दोषाय इति पृ., ४८

तथा

कन्यायां प्राप्तशुल्कायां श्रेयांश्चेद्दूर आव्रजेत् ।
धर्मार्थकामसंयुक्तं वाक्यं तत्राऽनृतं भवेत् ॥

'शुल्कं' मूल्यम्, आसुरविवाहविषयमेतत्; विवाहत्रयोपलक्षणं वैतत्, शुल्कस्य सर्वत्राऽसम्भवात्। 'धर्मार्थकामसंयुक्तं वाक्यं' इयं कन्या तुभ्यं मया दातव्येति । प्रतिश्रव इति पाठान्तरम्। 'धर्मे चाऽर्थे च कामे च नातिचरितव्यमि'त्येवमेतत्।

याज्ञवल्क्यः[1]

सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
दत्तामपि हरेत् पूर्वं श्रेयांश्चेद्दूर आव्रजेत् ॥

तथा

दत्तां कन्यां हरन् [2]दण्ड्यः व्ययं दद्याच्च सोदयम् ॥

'श्रेयान्' वक्ष्यमाणवरदोषरहितः। 'सोदयं' सलाभम्।

मनुः[3]

न[4] दत्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः ।

1 १, ६५ ; पूर्वाच्छ्रेयांश्चेद्दूर आव्रजेत्, इति या. अप., पूर्वाच्छ्रेयान् इति या. वी., १२९

2 २, १४६; दत्त्वा इति मिताक्षरापरार्कपाठौ; दण्ड्यो व्ययं दत्वा तु इति गृ. रत्ना., ४८

3 ९, ७१ ; ९, ९९

4 हि इति गृ. र., ४९

दत्वा पुनः प्रयच्छंस्तु प्राप्नोति पुरुषानृतम् ॥
एवं[1] च न परे चक्रुर्नाऽपरे जातु साधवः ।
यदन्यस्याऽभ्यनुज्ञाय[2] पुनरन्यस्य दीयते ॥

'पुरुषानृतं' च पुरुषविषये अनृतवचनेन यत्पापम् ।
'शतमश्वानृते हन्ति सहस्रं पुरुषानृते'[3]
इत्यत्रोक्तम् । 'अभ्यनुज्ञाय' दातुं प्रतिज्ञाय ।

कश्यपः

पिता वा यदि वा माता भ्राता वा यदि [4]देवरः ।
कन्यानृतकरा मूढा यां गतिं यान्ति तां शृणु ॥
अनिवर्ती यथा श्येनो गच्छत्येव यथाऽनिलः ।
एवं नरकमायान्ति कन्यानृतकरा नराः ॥

'इतरो'ऽत्र दानाधिकारी । 'कन्यानृतकराः' कन्यादानविषये असत्यवादिनः ।

कात्यायनः

अनेकेभ्योऽपि दत्तायामनूढायां [5]तु यत्र वै ।
वरागमश्च सर्वेषां लभेताऽऽदिवरस्तु ताम् ॥
पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत [6]यः ।

1 एतत्तु इति मु. मनौ
2 यदन्यस्य प्रतिज्ञाय इति मु. मनौ.
3 मनु., ८, ९८; मश्वानृते हन्ति इति गृ. र., ४९
4 वेतरः इति गृ. रत्ना., ४९
5 च यत्र वै इति गृ. र, ४९
6 सः इति नागपुरमातृकायां गृ. र., ४९ च

अथ[1] गच्छेदनूढाया दत्तं पूर्वं वरो हरेत् ॥

अनेकेभ्यो धनग्रहणपूर्वकं दातुं [2]प्रतिज्ञाय तस्यामनूढायां यत्र बहूनां वराणां आगमः तत्र सर्वेषां आद्यो यः प्रथमो वरः स तां कन्यां लभेत । अन्ये तु वरं दत्तं मलयं(?) लभेरन्नित्यर्थः ।

नारदः

प्रतिगृह्य [3]च यः कन्यां नरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य [4]सा चाऽन्यं वरयेद्वरम् ॥

'प्रतिगृह्य' वाग्दत्तां स्वीकृत्य ।

कात्यायनः

प्रदाय [5]शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु [6]देयाऽन्यस्मै विधानतः ॥
अथ प्रवृत्तिरागच्छेत् प्रतीच्छेत समात्रयम् ।
अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छतः ॥
पूर्वं दत्ता तु या कन्या अन्येनोढा यदा भवेत् ।

1 तथा गच्छेदनूढाया धनं दत्तं वरो हरेत् इति गृ. रत्ना., ४९

2 'कं दातुम्' इत्यारभ्य 'लभेरन्नि'ति पर्यन्तं उदयपुरमातृकायां नासीत्, नागपुरमातृकात उद्धृतम्

3 १२, २४; तु यः कन्यां वरो या. अप., ९४

4 कन्याऽन्यं इति गृ. र., ५०; या. अप., ९४ मुद्रितनारदीये च

5 गच्छेच्छुल्कं यः इति या. अप., ९५

6 देयान्यस्मै इत्यारभ्य पूर्वं दत्तात्विति पर्यन्तं उदयपुरमातृकायां त्रुटितम्, नागपुरमातृकातः सङ्कलितम्

संस्कृताऽपि प्रदेया स्याद्यस्मै पूर्वं प्रतिश्रुता[1] ॥
अन्यदत्ता तु या कन्या वरेणोढा यदा भवेत् ।
कालेन विधिना तां तु संस्कृतां[2] लभते भृगुः ॥

'स्त्रीधनं' [3]मुद्रिकादि । 'प्रवृत्तिः' क्षेमवार्त्ता । इदं च विवाहिताया अपि पूर्ववराय पुनर्दानमनन्तरोक्तप्रतीक्षणकालादर्वाग्बोद्धव्यम्[4] ।

यमः

वाचा दत्ता तु या कन्या यदि तस्या वरो मृतः ।
न च मन्त्रोपपन्ना या कन्यका पितुरेव सा ॥

अत्र मन्त्रोपपत्तिः [5]पाणिग्रहणमेव संस्कारः ।

वसिष्ठः[6]

अद्भिर्वाचा [7]च दत्तायां म्रियेतोर्द्ध्वं वरो यदि ।

1 धार्यमावर्षमेकं तु देयाऽन्यस्मै विधानतः ।
अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम् ॥
अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छतः ।
पूर्वं दत्ता तु या कन्या अन्येनोढा यदा भवेत् ॥
इति गृ. रत्ना., ५०

2 संस्कर्ता इति नागपुरकोशपाठः

3 बुद्धिकादि इति उदयपुरकोशे

4 मुद्रिकादि । प्रवृत्तिरागमप्रयोजिका वार्त्ता । एतच्च ऋतुत्रयाभ्यन्तरे मासत्रयाभ्यन्तरे वा व्यञ्जनादिशङ्काविरहे सतीति ध्येयम् इति गृ. र., ५०

5 पाणिग्रहणार्थमेव इति ना. को. पाठः

6 १७, ७२

7 च दत्तायां म्रियेतादौ वरो यदि इति या. अप., ९५

न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥

मनुः[1]

कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः
देवराय प्रदातव्या यदि [2]कन्या तु मन्यते ॥

नियोगविध्यनन्तरं मनुः[3]

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यधिगम्यैनां [4]शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताऽऽप्रसवात् सकृत्सकृदृतावृतौ ॥

'यथाविधि' यथागृह्यशास्त्रम् । 'शुचिव्रतत्वं' [5]वागादि-नियमः ।

अथ नारदः[6]

प्रतिगृह्य तु [7]यः कन्यामदुष्टामुत्सृजेन्नरः ।
विनेयः सोऽप्यकामोऽपि कन्यां तामेव चोद्वहेत् ॥
कन्यादोषेऽफलं दानं दातुः षण्णवतिर्दमः[8] ।

1 ९, ९७
2 कन्याऽनुमन्यते इति गृ. र., ५१
3 ९, ६९
4 सस्यत्यात्या इति नागपुरकोशे
5 रागादिनियमः इति नागपुरकोशे
6 १२, ३५
7 च इति गृ. र,. ५२
8 मुद्रितनारदीये श्लोकद्वयमिदं नास्ति

शुल्कप्रदानस्य च [1]तथा कन्यायाश्च निवर्तनम् ॥
गूहयित्वाऽऽत्मनो दोषान् अर्थतो द्विगुणोऽत्ययः[2] ।
वरस्य दत्तनाशश्च भवेत् स्त्री च [3]निवर्तते ॥
'अत्ययः' दण्डः । 'दत्तनाशो' दत्तशुल्कस्य नाशः ।

अत्र कात्यायनः

वरो[4] दोषमनाख्याय पाणिं गृह्णाति यो नरः ।
याचनं[5] वा प्रकुर्वीत [6]तद्दत्तं नाऽऽप्नुयात् सुतः ॥
कन्यादोषेऽप्ययं धर्मो दाता दण्ड्यो वरस्तथा ।
दद्यादृगृहीतं दाता च न त्वेवाऽभिप्रजातयोः ॥

'दाता दण्ड्यो वरस्तथे'ति कन्यादोषेऽनाख्याते दाता दण्ड्यः, वरदोषे वरो दण्ड्य इत्यर्थः । 'अभिप्रजातयोः' प्रस्तुतयोः ।

सुमन्तुः[7]

कन्या कुत्सिताऽन्यजातिकर्मशीलव्याध्युपहता परि-

1 तु तथा इति गृ. र., ५२
2 गूहयित्वात्मनो दोषान् ददतो द्विगुणोऽत्ययः इति गृ. र., ५२; गूहयित्वात्मनो दोषं विन्दते द्विगुणो दमः इति या. वी., १३०
3 विवर्तते इति या. वी., १३०
4 वरदोषं इति गृ. र., ५२
5 याचनां·······तु सः इति या. वी., १३०
6 तद्दण्डं इति गृ. र., ५२; नागपुरमातृकायाञ्च
7 सुमन्तुवचनत्वेन गृ. रत्नाकरे न दृश्यते । परन्तु तादृशवाक्यस्य व्याख्या तु दृश्यते ; गृ. रत्ना., ५३; सुमन्तुः—कन्या कुत्सिताऽन्यजातिकर्म-

णीताऽपि अक्षतयोनिश्चेत्परित्यक्तव्या । क्षतयोनिस्तु भर्तव्या । वरोऽप्येभिरेव दोषैर्युक्तः परित्यक्तव्यो भवति ।

'कुत्सिता' लक्षणादिहीना । 'अन्यजातिः' वरापेक्षया । 'कर्मोपहता' पातकदुष्टा । 'शीलोपहता' दुःशीला । 'व्याध्युपहता' कुष्ठादियुक्ता ।

नारदकात्यायनौ

नाऽदुष्टां दूषयेत् कन्यां नाऽदुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं [1]त्यजतोस्तयोः ॥

'दोषे' कुष्ठादौ । 'दोषः' पापम् ।

मनुः[2]

विधिवत् [3]प्रतिगृह्याऽपि त्यजेत् कन्यां विगर्हिताम् ।
व्याधितां [4]विप्रदुष्टां वा छद्मना चोपपादिताम् ॥

'विधिवत्' उदकादिपूर्विकाम् । 'विगर्हितां' दुर्लक्षणाम् । 'विप्रदुष्टां' अन्यगतभावाम् । 'छद्मना' अन्यकन्योपदर्शनपूर्वकान्यकन्यादानादिप्रकारेण ।

शीला व्याध्युपहता परिणीता यद्यक्षतयोनिः स्यात् परित्यक्तव्या इति या. अप., ९५

1 त्यजतस्तयोः इति गृ. र., ५३

2 ९, ७२

3 परिगृह्य......अनिन्दितां इति या. अप., ९५

4 विप्रदुष्टां व्याधियुक्तां छद्मना प्रतिपादिताम् इति गृ. र., ५३; परिदुष्टाम् इति नागपुरकोशे

तथा[1]

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाऽकन्यासु क्वचिन्नृणां लुप्तमन्त्रक्रिया हि ताः ॥
उन्मत्ता[2] या न कुष्ठिन्या न च या स्पृष्टमैथुना ।
पूर्वदोषानविख्याप्य[3] प्रदाता दण्डमर्हति ॥

'प्रतिष्ठिताः' विनियुक्ताः संस्काराद्यैः । 'अकन्यासु' दोषवतीषु ॥

## अथ स्त्रीपुरुषसम्बन्धः

तत्र नारदः[4]

स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते ।
वरणाद्ग्रहणं पाणेः सम्बन्धो हि द्विलक्षणः ॥

'सम्बन्धात्' पाणिग्रहणलक्षणात् । 'वरणं' "सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात्" [5]इत्यापस्तम्बगृह्योक्तम् । 'द्विलक्षणः' द्विप्रकारः ।

तथा

तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।

1 ८, २२६
2 सोन्मत्ता या प्रतिष्ठाख्याऽन्या च या स्पृष्टमैथुना इति गृ. र., ५३; मुद्रितमानवे न दृष्टम्
3 अनाख्याय इति गृ. र., ५३
4 १२, २-३
5 २, ४, १

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ॥

'अनियतं' तयोः भार्यात्वनियमापादकम्। 'दोषदर्शनात्' क्लीबादिदोषाणां कन्याप्रत्यावृत्तेः[1] शास्त्रे दर्शनात्। 'पाणिग्रहणिका मन्त्राः' विवाहप्रयोगाङ्गभूताः [2]"गृह्णामि ते सौभगत्वाय हस्त"मित्यादयः।

मनुः[3]

मङ्गलार्थं स्वस्त्ययनं [4]यज्ञश्चासां प्रजापतेः।
प्रपूज्यन्ते विवाहेषु प्रदानं स्वाम्यकारणम् ॥

'स्वस्त्ययनं' "स्वस्ति भवन्तो ब्रुवन्त्वि"त्यादि। "दशाऽस्यां पुत्रानाधेहि पतिमेकादशं [5]कृधी"त्यादि च। 'प्रजापतेर्यज्ञः' प्रजापतिदेवताकं कर्म। 'विवाहेषु' विवाहे यत् क्रियते मङ्गलार्थं अशुभलक्षणदोषनिरासार्थम्। 'प्रदानं स्वाम्यकारकमि'ति। [6]प्रदानेनैव कन्यावरयोः स्वस्वामिसम्बन्धो जायते। पितुश्च स्वाम्यं निवर्तते।

1 प्रत्यावृत्तिहेतोः इति गृ. रत्ना., ५४ ; प्रत्यावृत्तिहेतूनां इति नागपुरकोशे

2 आपस्तम्बीयमन्त्रपाठे प्रथमप्रश्नतृतीयखण्डे "गृभ्णामि ते सुप्रजास्त्वाय हस्तम्" इति दृश्यते

3 ५, १५२

4 यज्ञस्तासां प्रजापतेः। प्रयुज्यते विवाहे तु इति गृ. र., ५५

5 कृधीत्यस्य कुरु इति नागपुरकोशे

6 मूले स्वाम्यकारणमिति ; व्याख्याने स्वाम्यकारकं इति च दृश्यते। मूलवाक्यं नागपुरकोशे नास्ति

अत्र मनुकात्यायनौ[1]

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥

'निष्ठा' परिसमाप्तिः। समाप्तिश्चाऽत्र भार्यात्वनिष्पादकत्वरूपा । 'सप्तमे पदे' सप्तमं पदं प्राप्तवत्यां कन्यायामित्यर्थः ।

अत्र यमः

नोदकेन [2]न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥

'उदकेन' उदकपूर्वदानेन । 'वाचा' वाग्दानेन ।

हारीतः

आसनाभिवादनोत्थानार्घ्यातिथ्यानि धर्मसाधनानि साधूनामेतेषां [3]प्रदानं कन्याया अतिक्रमो न विद्यते, अन्यत्र याथातथ्यात् । क्लीबपतितप्रोषितप्रव्रजितप्रमीतेषु मीमांसन्ते नोदकेन न वाचेति प्रजापतिः । स्नात्वा चेत्प्रतिगृह्णीयात् तस्य दद्यादित्येके मन्यन्ते । तत्राऽकृत्स्नविधानात् संख्यायोगात् । पाणिग्रहणमन्त्रैरपरे । तदप्याख्यानामधोवर्णेषु[4] त्रिषु शरप्रतोदयष्टिदशान्तग्रहणात्

1 मनुः, ८, २२७

2 न वाचा वा कन्यायाः पतिरिष्यते इति गृ. रत्ना., ५५

3 प्रदाने कन्यायाः इति गृ. र., ५५ ; प्रदाने कन्यायामिति नागपुरकोशपाठः

4 क्षत्रियादिषु शरयष्टिदशान्तग्रहणसिद्धम् इति गृ. र., ५६

सिद्धम्। तत्राऽपि न पाणिग्रहणेन जायात्वं, कृत्स्नं हि जानीयात् सप्तमे पदे जायापतित्वम्।

'आसने'त्यस्याऽयमर्थः—कन्यावरणार्थमागतानामर्घ्यादिप्रदाने। 'कन्याया अतिक्रमः' कन्यात्वस्य निवृत्तिः, वरान्तरदानानर्हत्वं न भवति। 'अन्यत्र याथातथ्यादि'ति। याथातथ्यात्कन्यादानविषयसत्यवचनादन्यत्र। अन्यत्र क्लीबादिषु सत्यवचनेऽपि कृते अतिक्रमो नाऽस्तीत्युक्तम् 'क्लीबे'त्यादिना। एतेषु च उदकपूर्वदाने, वाग्दाने च कन्यात्वनिवृत्तिः। यत्तु—'अद्भिरेव द्विजाग्र्याणामि'त्यादि, तद्दानोपक्रममात्रमिति प्रजापतेर्मतम्। अन्ये तु विधिपूर्वकप्रतिग्रहेण दाननिष्पत्तिरिति मन्यन्त इत्याह—'स्नात्वे'त्यादि। तदपि दूषयति—'तत्रे'त्यादि। 'अकृत्स्नविधानात्' विधेरसम्पूर्णत्वात्। अत्र हेतुः—'सङ्ख्यायोगादि'ति। स चोक्तो नारदेन [ १२, २ ] 'वरणाद्ग्रहणं पाणेः स विवाहो द्विलक्षणः' इति। एवमप्यकृत्स्न इत्याह—'पाणिग्रहणे'त्यादि।

'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्'

इति मनौ [८, २२७] नियतशब्दप्रयोगात्पाणिग्रहणानन्तरं विवाहसम्पत्तिरित्यपरे। 'तदप्याद्यानामि'त्यादि। आद्यानां ब्राह्मणानां, 'अधोवर्णेषु' क्षत्रियादिषु यदि प्रतोदः। एतेषु पाणिग्रहणाभावे शङ्का न कार्या। पाणिग्रहणं कार्य्यं, शरादिग्रहणस्य विधानात् सिद्धं पाणिग्रहणम्। एवमपि जायापतित्वं न सम्पूर्णं, यथा सम्पूर्णं भवति तदिदानीमाह—'कृत्स्नं ही'त्यादि। एतेन वरेण कन्यायाः सप्तमपदपर्य्यन्तनयनं मन्त्रवत्पाण्यादिग्रहणविशिष्टं द्विजातीनां

प्रधानं विवाहकर्म। एतदेव च जायात्वापादकम्। शूद्रस्य एतदेवाऽमन्त्रकम्।

मनुः[1]

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥

शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने॥

यमः

पाणिग्रहणसंस्कारः [2]सवर्णासु विधीयते।
विवर्णासु यथा दृष्टं तथा वक्ष्याम्यनुक्रमम्[3]॥

वैश्या प्रतोदं गृह्णाति गृह्णाति क्षत्रिया शरम्।
दशां गृह्णाति[4] वै शूद्रा करान्[5] वै वरवर्णिनी॥
[ 'दशा' वस्त्रप्रान्तः। 'करार्थे' पाणिग्रहणकार्ये।[6] ]

अग्निपरिक्रमो ब्राह्मणस्योक्तः। राजन्यवैश्ययोराचार्यपरिक्रम इति। 'परिक्रमः' प्रदक्षिणीकरणम्।

[ मनुः[7] ]

अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते।

1 ३, ४३–४४
2 सवर्णासूपदिश्यते इति गृ. र., ५७
3 'अनुग्रह' मिति नागपुरकोशे
4 शूद्रा च कराद्वै वरवर्णिनी इति गृ. रत्ना., ५७
5 'करार्थे' इति नागपुरकोशे
6 [ ] नागपुरकोशादुद्धृतम्
7 मनुवचनमिति रत्नाकरः पृ. ५७ नागपुरकोशश्च ; मनुः, ३, ३५

इतरेषां[1] तु वर्णानामितरेतरकाम्यया ॥

'इतरेतरकाम्यया' कन्यावरयोः परस्परानुरागेण ।

पैठीनसिः[2]

साङ्गुष्ठं ब्राह्मण्याः पाणिं गृह्णीयात् । क्षत्रियायाः सशरम् । सप्रतोदं वैश्यायाः । शूद्राया [ वस्त्रदशाम् ]

बह्वृचगृह्यपरिशिष्टम्

कन्यां वरयमाणानामेष धर्मो विधीयते ।
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ॥
उभयस्याऽपि पक्षस्य पितापुत्रीमनुक्रमेत् ।
कन्यां ददति ये तत्र पिता पुत्री तथैव च ॥

'उभयस्याऽपि' पक्षस्य [3]मातृपक्षस्य पितृपक्षस्य च । 'अनुक्रमेत्' तृतीयपुरुषादारभ्य क्रमेण कीर्तयेत् । 'कन्यां ददती'ति । न केवलं यः कन्यां प्रार्थयिता स उभयपक्षस्य पितापुत्रीमनुक्रमेत्, किन्तु येऽपि कन्यां ददति कन्यादातारस्तेऽपि तथैव उभयपक्षस्य पितापुत्रीमनुक्रमेरन्नित्यर्थः ॥

1 इतरेतरवर्णानां, साङ्गुष्ठं शरं, वैश्यायाः प्रतोदं शूद्राया वस्त्रदशामिति गृ. र., ५७

2 इदं पैठीनसिवाक्यं 'पाणिग्रहणकार्यं' इत्यनन्तरमेव(उ.पृ.६८)नागपुरकोशे दृश्यते

3 "मातृपक्षस्य पितृपक्षस्य च अनुक्रमेत् तृतीयपुरुषादारभ्य पैतापुत्रीमनुक्रमेण कीर्तयेत् । अस्यैव विवरणं कन्यां ददतीति—न केवलं यः कन्याप्रार्थयिता स तूभयपक्षस्य पुत्रीमनुक्रमेत्, किन्तु योऽपि कन्यां ददाति कन्यादाता सोऽपि उभयपक्षस्य पैतापुत्रीमनुक्रमेत्" इत्येतदन्तं लक्ष्मीधरस्तु इत्यारभ्य गृ. रत्नाकरे पृ. ५८ लिखितम्, उभयस्यापि पक्षस्य तृतीयपुरुषादारभ्य पैतापुत्रीमनुक्रमात् कीर्तयेत् । अस्यैव विवरणं कन्यां ददातीति बोद्धव्यं, तेन कन्यादात्रैव कुलद्वयोच्चारणं पुरुषत्रयपर्यन्तं कर्तव्यम् इति गृ. रत्नाकरः, पृ. ५८

२

# अथ विवाहभेदाः

तत्र मनुः[1]

चतुर्णामपि वर्णानां [2]प्रेत्य चेह हिताहितान् ।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥
'स्त्रीविवाहानि'ति[3] स्त्रियाः संस्कार्य्यत्वाभिधानम् ।

नारदः[4]

अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्तिताः ।
ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथैव च ॥
आर्षश्चैवाऽथ दैवश्च गान्धर्वश्चाऽऽसुरस्तथा ।
राक्षसोऽनन्तरस्तस्मात्पैशाचश्चाऽष्टमोऽधमः[5] ॥
एषान्तु धर्म्याश्चत्वारो ब्राह्माद्याः समुदाहृताः ।
साधारणः स्याद्गान्धर्वस्त्रयो धर्म्यास्तथाऽपरे ॥

1 ३, २०

2 प्रत्येकं च इति गृ. रत्ना , ५९

3 स्त्रीसंस्कारार्थाः 'स्त्रीविवाहाः' । कः पुनरयं विवाहो नाम । उपायतः प्राप्तायाः कन्यायाः दारकरणार्थः संस्कारः सेतिकर्तव्यताकः सप्तर्षि-दर्शनपर्यन्तः पाणिग्रहणलक्षणः इति मेधातिथिः पृ. २१७
स्त्रीपदं स्त्रीत्वेन प्रसक्तासंस्कार्यत्वनिवारणार्थं संस्कार्यत्वार्थम् इति कल्प-तरुकारः इति गृ. रत्नाकरः पृ. ५९

4 २१, ३८–३९, ४४

5 अष्टमस्स्मृत इति मुद्रितनारदीये ( पृ. १७८ )

'साधारणः' नोत्कृष्टो नापकृष्टः ।

नारदक्रमेण विवाहानन्तरं गौतमः[1]

चत्वारो धर्म्याः प्रथमाः, षडित्येके ।

हारीतः

अथाऽष्टौ विवाहाः सम्भवन्ति । ब्राह्मो दैवो गान्धर्व आसुरो राक्षसः पैशाचो मानुषः क्षात्रश्चेति । तेषां पूर्वे सप्तोभयतः । तेषां विन्देताऽलाभे मानुषम् ।

'तेषां पूर्वे' इति । तेषां मध्ये पूर्वे आद्यास्त्रयो विवाहाः । 'उभयतो' मातृपितृवंशजान् सप्त सप्त तारयन्ति इति शेषः । 'तेषां' त्रयाणाम् । 'अलाभे मानुषं' लभेत ।

पुनर्हारीतः

एतेषामेकतमेनोढां धर्मपत्नीं प्राहुः ।

अत्र च यद्यपि सर्ववर्णानां सर्वविवाहानर्हता, तथाऽपि यस्य यो विशेषेण विहितस्तेन तस्य धर्मपत्नी भवति ।

वसिष्ठः[2]

षड्विवाहाः[3]—ब्राह्मो देव आर्षो गान्धर्वः क्षात्रो मानुषश्चेति ।

ब्राह्मार्षदैवगान्धर्वासुरराक्षसविवाहानुक्त्वा आपस्तम्बः

1 १, ४, १२

2 १, २८

3 षड्विवाहा ब्राह्मो दैवश्चार्षो इति गृ. रत्ना., ६०

तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान्[1] ।

मनुर्यमश्च आहे[2]

ब्राह्मो दैवस्तथैवार्षः[3] प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाऽष्टमोऽधमः ॥
यो यस्य धर्म्यो वर्णस्य गुणदोषौ च[4] यस्य यौ ।
तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥
षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव[5] विद्याद् धर्म्यानराक्षसान् ॥
चतुरो ब्राह्मणस्याऽऽद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं[6] वैश्यशूद्रयोः ।
पञ्चानां तु त्रयो धर्म्या [7]द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चाऽऽसुरश्चैव[8] न कर्तव्यौ कदाचन ॥
पृथक्पृथग्वा मिश्रौ[9] वा विवाहौ [10]पूर्वचोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥

1 ३, २१.
2 ३, २१–२६
3 तथा चार्षः इति गृ. र., ६०
4 तु इति गृ. र., ६१
5 शूद्रयोश्च तानेव इति गृ. रत्ना., ६१ ; शूद्रयोस्तु इति या. अप., या. वी.,
6 एकं मानुषं इति गृ. र., ६१
7 द्वावधर्म्यौ इति गृ. र., ६१ ; या. वी., १२५
8 पैशाच आसुरश्चैव इति या. वी., १२५
9 विमिश्रौ तु इति नानपुरमातृके
10 पूर्वदेशितौ इति गृ. रत्ना., ६१

'प्रसवे' अपत्ये। 'गुणागुणान्' गुणदोषान्। 'आनुपूर्व्या' उद्दिष्टक्रमेण । 'प्रशस्तान्' विशिष्टादृष्टजनकान्। 'अवरान्' आसुरगान्धर्वपैशाचान् अधस्तनान्[1]। 'पृथक्पृथक्' एकैकशः । 'मिश्रौ' उभयलक्षणसङ्कीर्णौ। यथा कन्यावरयोरन्योन्यानुरागे च सत्येव पित्रा कन्यायामदीयमानायां प्रसह्यहरणेन विवाहो गान्धर्वराक्षसयोः सङ्कीर्णत्वम्।

पैठीनसिः

ब्राह्मप्राजापत्यार्षदैवा ब्राह्मणस्य, गान्धर्व आसुरो राजन्यस्य, राक्षसो वैश्यस्य, पैशाचः शूद्रस्य, सर्वेषामार्षं प्रमाणम्[2]।

'आर्षं' वेदवाक्यम्।

नारदक्रमेण विवाहाभिधानानन्तरं देवलः[3]

एते विवाहाश्चत्वारो धर्म्यास्तोयप्रदानिकाः।
अशुल्का ब्राह्मणार्हाश्च[4] तारयन्ति द्वयोः कुलम्॥

गान्धर्वादिचतुष्टयानन्तरं[5] देवलः

एतान्सशुल्कान्सामान्यान्विवाहांश्चतुरो विदुः।
केवलं क्षत्रियस्यैव [6]प्रशस्तत्वाच्च राक्षसः॥

1 अधर्मान् इति नागपुरकोशे

2 आर्षं प्रमाणं इति गृ. र., ६१ नागपुरकोशे च

3 एतद्वाक्यं नागरपुरकोशे नास्ति

4 अशुल्का ब्राह्मणार्षा इति या. वी., पृ. १२२

5 ब्राह्मादिचतुष्टयानन्तरमिति गृ, र., ६२

6 वीर्यवत्त्वाद्धि इति गृ र., ६१

तथैव बौधायनः[1]

तेषां चत्वारः पूर्वं ब्राह्मणस्य तेष्वपि पूर्वः पूर्वः श्रेयान्। इतरेषामुत्तरोत्तरः पापीयान्। तत्राऽपि षष्ठसप्तमौ क्षत्रधर्मानुगतौ तत्पूर्वकत्वात् क्षत्रस्य। पञ्चमाष्टमौ वैश्यशूद्रयोः। अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति। कर्षणशुश्रूषाधिकृतत्वात्। गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुभवत्वात्[2]। यथायुक्तो विवाहस्तथायुक्ता प्रजा भवतीति विज्ञायते।

'चत्वारः' प्रशस्ता इति शेषः। 'पूर्वपूर्व'स्त्वतिशयेन प्रशस्त इत्यर्थः। 'इतरेषां' गान्धर्वादीनां उत्तरोऽप्रशस्तः। 'षष्ठसप्तमौ' आसुरराक्षसौ, 'क्षत्रधर्मानुगतौ' क्षत्रियधर्मानुसारिणौ, तद्धर्मश्च धर्मप्रदानबलसम्पत्तिरूपः। स च पूर्वभूतोऽर्थः क्षत्रियस्याऽस्तीति विवाहद्वयसम्भवस्तस्य। 'पञ्चमाष्टमौ' गान्धर्वपैशाचौ वैश्यशूद्रयोः। 'अयन्त्रितकलत्राः' असङ्कोचितस्त्रीकाः। कलत्रमत्र स्त्रीमात्राणाम्। एतेन तयोः कन्या गान्धर्वपैशाचविवाहयोग्या भवन्ति। असङ्कोचितकलत्रत्वं च तयोः कर्षणशुश्रूषाधिकृतत्वात्। स्नेहानुगतत्वात्। सर्वेषां वर्णानां 'यथायुक्तः' येन गुणेन दोषेण वा सम्बन्धः। 'तथायुक्ता' तद्गुणदोषवती।

1 १, २०, १०–१५ ; १, २१, १

2 गतत्वात् इति गृ. र., ६१

मनुः[1]

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्॥

अत्रेयं व्यवस्था नारदोक्ता—प्राजापत्यार्षदैवब्राह्माः ब्राह्मणस्य प्रशस्ताः। गान्धर्वस्तु तस्यैव धर्माविरोधी। आसुरस्तु यद्यपि तस्यैव मनुना धर्म्य उक्तः, तथापि गान्धर्वात् न्यूनः अत्यन्तापदि कार्यः।

पैशाचश्चाऽऽसुरैश्चैव न कर्तव्यौ कथञ्चन

इति मनुनैवोक्तेः[2]। राक्षसपैशाचौ तु ब्राह्मणेन कदाचिदपि न कर्तव्यौ। 'षडानुपूर्व्या विप्रस्ये'त्यभिधानात्। यत्तु बौधायनेनाऽऽर्षस्य दैवात् श्रेष्ठत्वमुक्तं, तत्सहधर्मचारित्वमात्रेण[3] प्रजायाम्। तत्र मनुना दैवस्य श्रैष्ठ्याभिधानात्। हारीतोक्तं तु गान्धर्वश्रेष्ठत्वं सर्वान् प्रति [4]'स्वयंवरगान्धर्वाभिप्रायम्। [5]'स्वयं कन्या वरयेत् स गान्धर्व' इति गान्धर्वाभिधानात्। [6]यस्तत्र पैठीनसिहारीतमहाभारतेषु राक्षसासुरक्षात्रपैशाचशब्दैर्बलादाहृतकन्याहरणाद्विवाहः प्रश-

1 ३, ४२

2 मनुवचनादिति नागपुरकोशे

3 मात्रेण न तु प्रजायां इति गृ. र., ६३ ; मूलग्रन्थपाठः नागपुरकोशेन अनुगृहीतः

4 'स्वयंवरा गान्धर्वाभिप्रायं कन्या वरयते' इति नागपुरकोशे

5 स्वयं कन्यां वरयेद्गान्धर्वे इति गृ. र., ६३; नागन्धर्व इति गान्धर्वाभिधानात् इति ना. को

6 यत्तु पैठीनसियमहारीतमहाभारतेषु इति गृ. र., ६४

स्त इत्युक्तं[1], स क्षत्रियस्यैव। ब्राह्मदैवौ तु ब्राह्मणस्यैव नेतरेषाम्। महाभारते ब्राह्मविवाहमभिधाय

ब्राह्मणानां सतामेष [2]प्रोक्तो धर्मो युधिष्ठिर।

इत्यभिधानात्[3]। दैवस्य[4] ऋत्विक्सम्प्रदानकत्वात्। क्षत्रियादीनां[5] आर्त्विज्यासम्भवात्। पैशाचस्तु वैश्य-शूद्रयोः।

यत्तु वैश्यस्य राक्षसश्रैष्ठ्याभिधानं, तदासुराभिप्रायम्। 'शुल्केन पाणिं त्वाददतो[6] राक्षस' इति पैठीनसिवचनात्।

आर्षप्राजापत्यगान्धर्वाणां तु सर्वसाधारण्यं, अनिन्दि-तत्वात् योग्यत्वात्। सङ्करजातानां तु ब्राह्मदैवव्यति-रिक्तास्तत्तद्वर्णसम्बन्धेनेतरे विवाहाः इति।

## अथ ब्राह्मलक्षणम्[7]

तत्र मनुः[8]

आच्छाद्य [9]चाऽर्हयित्वा च श्रुतशीलवते स्वयम्।

1 प्रशस्त उक्तः इति नागपुरकोशे

2 सदा इति गृ. र., ६४ ; उक्तो इति नागपुरकोशे

3 वचनात् इति ना. को

4 दैवस्य च इति ना. को

5 क्षत्रियादीनां च इति ना. को

6 शुल्केन पदं ददतो राक्षसः इति गृ. रत्ना., ६४

7 ब्राह्मलक्षणं इति गृ. र., ६५, नागपुरकोशश्च; उदयपुरपुस्तके ब्राह्मण-लक्षणं इति दृश्यते

8 ३, २७

9 चार्चयित्वा इति गृ. र., ६५

आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥

'आच्छाद्य' वस्त्रयुगं परिधाप्य ।

देवलः

ततो विनीतां कल्याणीं [1]कन्यां कुलवयोन्विताम् ।
अलङ्कृत्याऽर्हते[2] दद्याद्विवाहो ब्राह्म उच्यते ॥

'कल्याणीं' उक्तकन्यादोषरहिताम् । 'अर्हते' उक्तवरलक्षणयुक्ताय ।

व्यासः

आच्छाद्याऽलङ्कृतां [3]कृत्वा त्रिःपरिक्रम्य पावकम् ।
नामगोत्रे समुद्दिश्य दद्याद्ब्राह्मो विधिस्त्वयम् ॥

संवर्त्तः

अलङ्कृत्य त्वलङ्कारैर्वराय सदृशाय [4]च ।
ब्राह्मेण तु विवाहेन कन्यां दद्यात्सुपूजिताम्[5] ॥

'सुपूजितां' पुष्पचन्दनादिसम्मानिताम् ।

यमः

अद्भिर्या दीयते कन्या [6]ब्रह्मदेयेति तां विदुः ।

1 कुलरूप इति गृ. र., ६५ ; कन्यां सुवल्यान्विताम् इति ना. को. पाठः

2 अलङ्कृत्यार्हते इति गृ. र., ६५ ; या अप., ८८; ना. कोशे च

3 कन्यां इति या. वी., १२१

4 वै इति गृ. र., ६५

5 सुलक्षणाम् इति ना. को. "ब्रह्मदायेति" संज्ञा श्राद्धे पङ्क्तिपावनत्वव्यवहारार्थम् । तस्यां जातः पुनात्युभयत्र मातापितृकुले पुरुषानेकविंशतिम्" इति अपरार्कः

6 दायेति इति या. अप., ८८

'ब्रह्मदेये' ति संज्ञा श्राद्धे । ततो जातस्य पङ्क्तिपावनत्व-व्यवहारार्थम् ।

हारीतः

अनिन्दन्नन्यैरवितर्कयन् विधिवद्वस्त्रयुगं दत्वा सह-धर्मश्चर्य्यतामिति ब्राह्मः ।

'अनिन्दन्' दोषाभिधानमकुर्वन् । 'अन्यैरवितर्कयन्' अन्यैः सह दोषमनाशङ्कमानः । 'विधिवत्' मधुपर्कादि-पूर्वकम् ।

आपस्तम्बः[1]

ब्राह्मे विवाहे [2]बन्धुशीलश्रुतारोग्याणि बुध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणाऽलङ्कृत्य ।

'सहत्वकर्मभ्य' इत्यादि । सहत्वेन[3] सहभावित्वेनेष्टा धानादिकर्मस्वधिक्रियते, [4]तादर्थ्येन इत्थंभूतं प्रतिपादनं कुर्यादित्यर्थः ।

बौधायनः

श्रुतशीले[5] विज्ञाय ब्रह्मचारिणेऽर्थिने देयेति[6] स ब्राह्मः ।

1 २, ११, १७

2 'शीललक्षणसम्पन्नश्रुतारोग्याणि' इति हरदत्तभाष्यपाठः

3 सहभावेन इति नाग. को

4 तादात्म्येन इति नाग. को

5 १, २०, २; श्रुतिशीले इति मु. पु. पाठः ( पृ. ९७ )

6 दीयत इति गृ. र., ६६ ; कन्या दीयते इति गोविन्दस्वामिपाठः

'ब्रह्मचारिणे' असञ्जातस्त्रीसम्पर्काय[1] । 'अर्थिने' इच्छते ।

शङ्खलिखितौ

तत्र सवर्णः सवर्णाय विदितो विदिताय नग्निकां दद्यात्स ब्राह्मः ।

'विदितः' कुलादिभिः ।

पैठीनसिः

तस्मान्नग्निकां [2]कन्यां सहिरण्यां दद्यात् अयं ब्राह्मो विवाह इति ।

श्रेष्ठवरानुवृत्तौ ब्रह्मपुराणे[3]

सदृशाय[4] कदा कन्यां दद्ध्वं श्रद्धयाऽन्विताः ।
अलङ्कृत्य यथाशक्त्या [5]पूरयित्वा धनेन च ॥

'अलङ्कृत्य' वरमलङ्कृत्य । 'धनेन' गोहिरण्यादिना । 'पूरयित्वा यथाशक्त्ये'त्युभयत्र योज्यम् ।

ब्राह्मानुवृत्तौ संवर्तः

स कन्यायाः प्रदानेन श्रेयो विन्दति पुष्कलम् ।

1 स्त्रीसङ्गमाय इति गृ. र., ६६

2 नग्निकां सहिरण्यां दद्यादयं स ब्राह्मो विवाह इति गृ. र., ६७; कन्यां सहिरण्यां दद्यादयं ब्राह्मो विवाहः इति या. वी., १२१

3 श्रेष्ठवरमधिकृत्य ब्रह्मपुराणे इति गृ. र., ६७

4 तादृशाय तदा इति गृ. र., ६७; ईदृशाय यदा इति ना. को. पाठः

5 पूजयित्वा धनेन वा इति गृ. र., ६७; पूरयित्वा इति या. वी. (पृ. १२१)

सद्भिरित्युच्यते साधुः[1] कीर्त्तिं चाऽऽप्नोति पुष्कलाम् ॥

'इति' करणः साधुशब्दात्परो द्रष्टव्यः[2] ।

तथा

ज्योतिष्टोमातिरात्राणां[3] शतं शतगुणीकृतम् ।
प्राप्नोति पुरुषीं दत्वा होममन्त्रैस्तु संस्कृताम् ॥

'पुरुषीं' कन्याम् । अत्र गृह्येषु दानानन्तरं होमविधानादर्थाद्दत्वा[4] होममन्त्रैः संस्कृतामित्यवधातव्यम्[5] ।

कश्यपः

अनुडुहां [6]सहस्राणां दशानां धुर्यवाहिनाम् ।
सुपात्रे विधिवद्दानं कन्यादानं च तत्समम् ॥
यस्तु सत्येन धर्मेण पिता स्पर्शयते सुताम्[7] ।
स प्रेत्य लभते स्थानं यथा दक्षः प्रजापतिः ॥

'सत्येन' छद्मादिरहितेन । 'स्पर्शयते' वरेण संयोजयति ।

1 कीर्त्तिमाप्नोति इति गृ. रत्ना., ६७
2 बोद्धव्यः इति ना. को. पाठः
3 ज्योतिष्टोमत्रिरात्राणामिति गृ. र., ६७
4 अत्र दत्वा होममन्त्रैः संस्कृतामिति शाब्दक्रमो न ग्राह्यो दानानन्तरं गृहेत्यत्र होमविधानात् इति गृ. र., ६७
5 अवगन्तव्यम् इति नाग. को. पाठः
6 सहस्राणि''''धूर्य इति गृ. रत्ना., ६७
7 "धर्मस्य सत्यता शुल्कादिराहित्यम् । 'स्पर्शयते' ददाति" इति चण्डेश्वरस्य व्याख्यानम् ( गृ. र., ६८ )

आदित्यपुराणे

श्रुत्वा कन्याप्रदानं तु पितरः सपितामहाः ।
मुक्ता[1] वै सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥

देवलः

तिस्रः कन्या विधिवद्दत्वा
[ यथान्यायं पालयित्वा निवेद्य च ।
न पिता नरकं याति नारी वा स्त्रीप्रसूतिनी ॥

'स्त्रीप्रसूतिनी' कन्याप्रसूतिनी ।

स्मृतिः

नाग्निहोत्रादिभिस्तत्स्यात् ब्रह्मतो ब्राह्मणस्य वा ।
यत्कन्यां विधिवद्दत्वा[2]] फलं प्राप्नोति मानवः ॥

ब्राह्मानुवृत्तौ संवर्त्तः

तां च दत्वा पिता कन्यां भूषणाच्छादनासनैः ।
पूजयन्स्वर्गमाप्नोति नित्यमुत्सववृद्धिषु ॥

इति ब्राह्मलक्षणम्

1 विमुक्ताः इति गृ. र., ६८ ; युक्ता इति नाग. को. पाठः
2 [ ] उदयपुरमातृकायां न दृष्टम् । नागपुरकोशादुद्धृतम् , गृ. रत्नाकराच्च ( पृ. ६८ )

## अथ दैवलक्षणम्

तत्र मनुः[1]

यज्ञे तु वितते सम्यक् ऋत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥

'सम्यक्' यथार्थमस्खलितमिति यावत् । कर्म कुर्वते ऋत्विजे ।

देवलः

अन्तर्वेदि[2] समानीय कन्यां कनकमण्डिताम् ।
ऋत्विजे [3]तु ददात्येष[4] विवाहो दैवसंज्ञकः ॥

यमः

स[5] ऋत्विजमलङ्कृत्य विवाहो दैव उच्यते ।

हारीतः

वेद्यन्ते मिथुने[6] दत्वा स दैवः ।

'वेद्यन्ते' वेद्या एकदेशो गोमिथुनं वराय देयं, स्वीयमेव वराय दत्वा न तु वरादुपात्तमार्षत्वप्रसङ्गात् ।

1 ३, २८
2 अन्तर्वेदीं इति गृ. रत्ना., ६९; नाग. कोशे च
3 च इति गृ. र., ६९
4 'ददात्येनाम्' इति नाग. को. पाठः
5 नाग. कोशे 'स' नास्ति
6 गोमिथुनं इति गृ. र., ६९ ; "मैथुनं कृत्वा" (?) इति नागपुरकोशपाठः

बौधायनः[1]

दक्षिणासु नीयमानास्वन्तर्वेदि ऋत्विजे स दैवः ।

दानार्थं दक्षिणासु नीयमानासु ऋत्विजे यद्दानमित्यर्थः ।

आदित्यपुराणे

दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति ।
कृत्वा द्वारं तु विपुलं भानुसोपानमुत्तमम् ॥
आदित्यलोकादूर्द्ध्वं तु गमनं प्रतिपद्यते ॥

## अथार्षलक्षणम्

तत्र मनुः[2]

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो [3]धर्मोऽयमुच्यते ॥

'धर्मत' इत्यानृशंस्यार्थं न तु शुल्कबुद्ध्या । गोमिथुनग्रहणं च कन्यादातुः स्वयमधिकदानासमर्थस्य कन्योपकाराधिक्यमिच्छतो वेदितव्यम्[4] ।

देवलः

प्रदानं यत्तु कन्यायाः सह गोमिथुनेन च ।

1 १, २०, ५; कन्यादानार्थं दक्षिणास्वानीयमानासु अन्तर्वेदि यदृत्विजे स दैवः इति गृ. रत्ना., ६९; मुद्रितबौधायनपाठ एव मूलमातृकायामस्ति

2 ३, २९

3 आर्षोऽयं धर्म उच्यते इति गृ. रत्ना., ७०; या. वी., १२२

4 धर्मत इत्यनेन दक्षिणात्वेनादाय इति गृ. रत्नाकरः ।
धर्मतः इत्यानृशंस्यार्थं, न तु शुल्कबुध्या इति कल्पतरुः गृ. र., पृ. ७०

शस्ताय[1] वाऽसगोत्राय तमार्षमृषयो विदुः ॥

'सह गोमिथुनेने'ति[2] । वरादुपात्तेन सह गोमिथुनेन सहितमित्यर्थः । 'शस्ताय' यथोक्तवरलक्षणोपेताय ।

शङ्खलिखितौ

गोमिथुनेन वस्त्रयुगलेन[3] चार्षः, सर्वैष्वलङ्कारः स्त्रीधनं च देयमिति ।

'स्त्रीधन'मिति अलङ्काराधिकमन्यदपि किञ्चित् ।

बौधायनः

पूर्वे लाजाहूतीर्दत्वा[4] गोभ्यां आर्षः ।

पूर्वे चतसृणां मध्ये द्वे आद्ये । 'गोभ्यामि'ति । गोमिथुनेन सह देयेत्यनुषङ्गः ॥

## अथ प्राजापत्यलक्षणम्

तत्र मनुः[5]

सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च ।

1 शस्ताय चाऽसगोत्राय तमार्षमृषयो, इति या. वी., १२२

2 इदं व्याख्यानं गृ. रत्नाकरे ( पृ. ७० ) उद्धृतम्, "एकं द्वे वेति शक्त्याऽशक्त्या वरापेक्षया विकल्पः" इति व्याख्यातञ्च गोमिथुनं दक्षिणात्वेन वराय देयमिति केचित् । 'कन्याधनार्थं तस्यै देयमिति कल्पतरुः' इति या. वी., १२२

3 युगलेनार्षः सर्वेऽलङ्काराः गृ. रत्ना., ७०

4 १, २०, ४ ; हुत्वा गोभ्यां स आर्षः इति गृ. र., पृ. ७० ; "पूर्वा लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दत्त्वा ग्रहणमार्षः" इति गोविन्दस्वामिपाठः ( मु. पु., ९८ )

5 ३, ३० ; गृ. र., पृ. ७१

कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥

कन्यादाने सह अन्योन्याव्यभिचारेण उभौ चरतां धर्ममित्यनेन वाक्येन समयं कृत्वा यः कन्यादानं स प्राजापत्यः ।

देवलः

[1]सहधर्मक्रियाहेतोर्दानं समयबन्धनात् ।
अलङ्कृत्यैव कन्याया विवाहः स प्रजापतेः[2] ॥

'समयबन्धनं' सहोभौ चरतामिति सङ्केतकरणम् ।

गौतमः[3]

संयोगमन्त्रः प्राजापत्ये "सहधर्मश्चर्यता"मिति ।

विष्णुः[4]

प्रार्थितप्रदानं प्राजापत्यः ।

प्रार्थिताय[5] प्रदानं 'प्रार्थितप्रदानम्' ॥

1 सर्व इति गृ. रत्ना., पृ. ७१ ; या. वी. १२३ मुद्रितपाठमनुसरति

2 प्रजापते इति या. वी., १२३

3 १. ४. ५.

4 २४, २२ ; विष्णुः—
प्रार्थितप्रदानं प्राजापत्यः । प्रार्थिताय प्रदानं, प्रार्थितश्च सहोभौ चरतां धर्ममिति इति गृ. र., पृ. ७१ ; 'प्रार्थितप्रदानेन' इति मुद्रितविष्णुस्मृतौ ( पृ. ७७ ), नागपुरकोशे च

5 'प्रार्थितेन प्रदानं प्रार्थितप्रदानम्' इति नागपुरकोशपाठः

## अथाऽऽसुरलक्षणम्

तत्र मनुः[1]

ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते॥

'आप्रदानं' आदानं ग्रहणामिति यावत्। 'स्वाच्छन्द्यात्' स्वेच्छया। न तु कन्यापितुः पारतन्त्र्येण।

देवलः

शुल्कं प्रदाय कन्यायाः सुप्रदानं[2] विधानतः।
वित्तहेतुर्विवाहोऽयमासुरः षष्ठ उच्यते॥

वित्तं हेतुर्यस्य स तथा।

पैठीनसिः

शुल्केन[3] पणित्वा ददत आसुरः।

'पणित्वा' विक्रीय[4]।

हारीतः

दम्भच्छद्मभ्यां[5] परैस्तर्किताय यद्दीयते प्रतिपद्य वा स आसुरः।

1 ३, ३१; 'ज्ञातिभ्यः कन्यकायाश्च धनं दत्वा धनग्रहणलुब्धाद्दातुः स्वाच्छन्द्याद्याद्वराय। यत् कन्यायाः 'आप्रदानं' ग्रहणं क्रियते' इति गृ. रत्ना., ७२

2 प्रत्यादानं विधानतः इति गृ. र., ७२; प्रत्यादानं इह ग्रहणमेव इति च

3 शुल्केन परिणीत्वा ददतो राक्षस इति गृ. र., ७२

4 परिणीत्वा विक्रीय राक्षसशब्दः इति गृ. र., पृ. ७२; "शुल्केन परिणीत्वा दभ्यहेतोराक्षसः। 'परिणीत्वा', विक्रीय" इति ना. को. पाठः

5 दम्भच्छद्मभ्यां परैस्तर्किताय दीयते इति गृ. रत्ना., पृ. ७३

'परैः' अन्यैः। 'दम्भच्छद्मभ्यां' दाम्भिकत्वेन छाद्मिकत्वेन वाऽन्यैः ज्ञाताय वराय स्वयमेवाऽदाम्भिकत्वं छाद्मिकत्वं च प्रतिपाद्य ज्ञात्वा यत्र दानं स आसुरः।

पुनर्हारीतः

शुल्केन मानुषः[1]

इदं चाऽऽसुरस्यैव संज्ञान्तरम्।

वसिष्ठः[2]

पणित्वा[3] धनक्रीती स मानुषः तस्माद्दुहितृमतेऽधिरथं शतं देयमिति ह क्रयो विज्ञायते।

'धनक्रीती'त्यत्र भवतीति शेषः। 'अतिरथं' रथाधिकं[4] गोशतं देयमित्यर्थः। 'इति ह' शब्देन या पराय[5] क्रीता सत्येता अन्यैश्चरतीति ह चातुर्मास्येष्विह क्रयप्रदानार्थं श्रुत्युपन्यासः।

कश्यपः

क्रीता द्रव्येण या नारी न सा पत्नी विधीयते।

1 शुल्कैः शौर्येण मानुषः इति गृ. र., पृ. ७२

2 १. ३५–३६

3 पठित्वा इति गृ. र., पृ. ७२

4 अधिरथं रथाधिकं शतमिति गोशतं, इति ह शब्देन क्रयबोधिका श्रुतिर्द्योत्यते। सा च या पत्युः क्रीता सत्यन्यथा अन्यैश्चरतीत्याह चातुर्मास्ये। क्षित्यधिकारक्रयदर्शनार्थं श्रुत्युपन्यासः इति गृ. र, ७३

5 "पत्युः क्रीता सा तथान्यैश्चरतीति ह चातुर्मास्ये क्षितिक्रयप्रदर्शनाय श्रुत्युपन्यासः" नागपुरकोशः पठति

न सा दैवे न सा[1] पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥

आपस्तम्बः

दानं[2] विक्रयधर्मश्चाऽपत्यस्य न विद्यते ।

मनुः[3]

न[4] कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णन् हि[5] शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी[6] ॥

आददीत न शूद्रोऽपि शुल्कं दुहितरं ददन्[7] ।
शुल्कं हि[8] गृह्णन् कुरुते छन्नं दुहितृविक्रयम् ॥

यमः[9]

नानुशुश्रुम [10]जात्वेतत् पूर्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञेन मूल्येन पापं दुहितृविक्रयम् ॥

1 वा पैत्रे इति गृ. र., पृ. ७३ ; वा पैत्र्ये इति नाग. को. पाठः

2 दानविक्रयधर्मश्च इति गृ. र., ७३ ; न विधीयते इति या. वी., पृ. १२४ ; 'क्रयधर्मश्च' इति हरदत्तपाठः

3 ३. ५१

4 श्लोकद्वयं आपस्तम्बीयत्वेनैव या–वीरमित्रोदये दृश्यते नागपुरकोशे च ।

5 शुष्कं च इति गृ. रत्ना., ७३ ; या. वी., १२४

6 गव्यविक्रयीति या. वी , १२४

7 ददत् इति गृ. र., ७३ ; या. वी., १२४

8 गृह्णन् च इति गृ. र., ७३ ; शुल्कं न गृह्णन् इति ना. को. पाठः

9 इतः प्रभृति यमवचनत्वेनोपन्यस्तं श्लोकत्रयं गृ. रत्नाकरे मनुवचनत्वेनैव दृश्यते । परन्तु मनौ ( ९, ९९ ; ३, ५३ ; ३५२ ) दृश्यन्ते

10 'न त्वेतद्वमजातित्वे तत्पूर्वेष्वपि जन्मसु' इत्यारभ्य श्लोकद्वयमपि आपस्तम्बीयत्वेनोल्लिखितं या. वी., १२४

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
स्वल्पोऽप्येवंविधो[1] वाऽपि तावानेव स विक्रयः ॥

स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।
नारीयानानि वस्त्रं वा ते पापा यान्त्यधो गतिम् ॥

आर्षासुरयोर्धनग्रहणमुक्तम् । तत्र चाऽयं निषेधः श्रूयते–न च धनग्रहणं विना आर्षासुरयोस्सम्भवः। तत्रेयं व्यवस्था–आत्मार्थं धनग्रहणे[2] दोषः। [3]कन्यार्थं तु धनग्रहणे विक्रयदोषः। 'स्त्रीधनानि' इति प्रसङ्गादभिधानम्। 'उपजीवन्ति' उपभुञ्जते। एतेन कन्यार्हणार्थदत्तधनोपजीविनामपि तद्बान्धवानां दोषभागिता[4], तस्माद्गृहीतं स्वयं नोपजीव्यम्[5] ।

कश्यपः

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः ।
आत्मविक्रयिणः[6] पापा महाकिल्बिषकारकाः ॥
पतन्ति [7]नरके घोरे घ्नन्ति चाऽऽसप्तमं कुलम् ।

1 अप्ययं महान् वाऽपि इति गृ. रत्ना., ७३ ; अल्पोऽप्ययं महान् वापि, इति या. वी., १२४, मु. मनौ च ( ३, ५१–५२ ) नागपुरकोशे च

2 धनग्रहणेऽपि न विक्रयदोषः इति ना. पाठः

3 कन्यार्थं धनग्रहणेऽपि न विक्रयदोषः इति नागपुरकोशः पठति

4 एतेन कन्यार्हणार्थदत्तधनोऽपि स्वत्त्वसत्त्वार्थत्वाद्दोषभागिनां इति नागपुरकोशः पठति

5 नोपयोज्यं इति गृ. र., ७४, नागपुरकोशे च

6 स्वात्मविक्रयिणः, इति गृ. रत्ना., ७४

7 निरये इति गृ. र., ७४ ; या. वी., १२४

गमनागमने चैव [1]सर्वशुल्को विधीयते ॥

'गमनागमने' कन्याप्रार्थनार्थं कन्यापितुर्गमनागमने।

मनुः[2]

यासां नाऽऽददते शुल्कं ज्ञातयो न स विक्रयः।
अर्हणं [3]तत्कुमारीणामानृशंस्यं [4]च केवलम् ॥

'आनृशस्यं' अनुकम्पा।

आपस्तम्बः

विवाहे दुहितृमते[5] दानं काम्यं धर्मार्थं श्रूयते। तस्माद्दुहितृमते अधिरथं शतं देयं तस्मिन्मिथुनी कुर्यादिति। तस्य क्रयशब्दः संस्तुतिमात्रं धर्माद्धि पञ्चधा।

अयमर्थः—दानं क्रयश्चाऽपत्यस्य न विद्यत इत्युक्तम्। तत्कतमार्षविवाहे गोमिथुनादिग्रहणमित्याशङ्क्याह—'विवाह'इत्यादि। विवाहे यत् कन्यापित्रे दानं तत् काम्यम्। नाऽत्र ऋषितुल्यपुत्रोत्पत्तिविषयता। 'यथायुक्तो विवाहस्तथायुक्ता प्रजा भवती'ति वचनात्। 'तन्मिथुनीकुर्यात्' इति। [6]तद्दत्तं रथाधिकं गोशतं मिथुनीकुर्य्यादिति। जा-

1 सर्वं शुल्को इति गृ. र., ७४; सर्वशुल्कोऽभिधीयते इति ना. को. पाठः
2 ३, ५४
3 तु इति गृ. र., पृ. ७४
4 प्रयोजनं इति या. वी., १२४
5 विवाहे दुहितृमते....अधिरथं शतं देयं तस्मिन् मिथुनाया कुर्यादिति। तस्यां क्रयशब्दः संस्तुतिमात्रं, धर्माद्धि सम्बन्धः इति गृ. रत्ना., ७४; या. वी. १२४; न तन् मिथुनं कुर्यादिति ना. पाठः
6 उदयपुरकोशपाठः (?) आहृतोऽत्र।

यापतित्वमापादयेदित्यर्थः । मिथुनशब्दान्मिथोऽर्थान्तरस्याऽविभक्तेः[1] छान्दसोऽयादेशः ।

यस्तु तस्यामार्षविवाहोढायां स्मृत्यन्तरे क्रयशब्दः, स[2] शब्दमात्रं, न वास्तवस्तत्र क्रयः । अत्र हेतुः 'धर्माद्धि सम्बन्ध' इति । धर्मनिमित्तो ह्यशौल्क इति ॥

## अथ गान्धर्वलक्षणम्

तत्र मनुः[3]

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः[4] ॥

'अन्योन्यसंयोगः' कन्यावरयोः समयबन्धः । 'मैथुन्यः' मिथुनस्य कर्म मैथुन्यं तस्मै हितः ।

देवलः

विविक्ते स्वयमन्योन्यं स्त्रीपुंसोर्यः समागमः ।
प्रीतिहेतुः स गान्धर्वो विवाहः पञ्चमो मतः ॥

गौतमः[5]

अलङ्कृत्य[6] इच्छन्त्या स्वयं संयोगो गान्धर्वः ।

1 मिथुनात्परस्य इति गृ. र., ७५
2 स न मुख्यार्थः इति गृ. र., ७५
3 ३, ३२
4 मैथुनात्कामसम्भवः इति नाग. को. पाठः
5 १, ४, ७.
6 अलङ्कृत्येच्छया स्वयं संयोगो गान्धर्वः इति गृ. र., ७६

'अलङ्कृत्य' आत्मानमिति शेषः।

विष्णुः[1]

द्वयोः सकामयोर्मातृपितृदानरहितो गान्धर्वः[2]।

मातृपितृनैरपेक्ष्येण आत्मानमलङ्कृत्येति शेषः। 'मातृपितृदानरहित' इति स्वयंवरगान्धर्वविषयम्।

हारीतः

स्वयं कन्या वरयेत्स[3] गान्धर्वः।

वसिष्ठः[4]

सकामां काममानः सदृशीं यो निरुन्ध्यात् स गान्धर्वः।

आश्वलायनः[5]

मिथः समयं [6]कृत्वोपयच्छेत् स गान्धर्वः॥

## अथ राक्षसलक्षणम्

तत्र मनुः[7]

हत्वा छित्त्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात्।

1 २४, २३

2 योगो गान्धर्वः इति गृ. रत्ना., पृ. ७६ मुद्रितविष्णुस्मृतौ च

3 वरयते इति गृ. र., ७६

4 १. ३३

5 शौनकः—इति या. अप., पृ. ९० ; आश्व., १, ४, २६

6 उपयच्छेत इति या. अप., पृ. ९०

7 ३, ३३

प्रसह्य कन्यां हरतो राक्षसो विधिरुच्यते ॥

'हत्वा' ताडयित्वा[1]। कन्यासम्बन्धिन इति शेषः। 'क्रोशन्तीं' भयात् स्वजनमाह्वयन्तीम्।

देवलः

विक्रमेण प्रसह्य स्यात् कुमारीहरणं पुनः।
वीर्यहेतुर्विवाहः स राक्षसः सप्तमो मतः ॥

'प्रसह्य' अभिभूय।

आश्वलायनः

हत्वा [2]भित्वा च शीर्षाणि रुदन्तीं रुदद्भ्यो हरेत् स राक्षसः।

'रुदद्भ्यः' कन्यासम्बन्धिभ्य इति शेषः।

हारीतः

राजाश्रयेण वधदण्डाभिघातभयविशेषाद्राक्षसः।

राजानमाश्रित्य यद्वधदण्डादिभयमुत्पाद्य कन्याहरणं स राक्षस इत्यर्थः।

वसिष्ठः[3]

यस्मिन् बलेन हरन्ति स क्षात्रः।

1 छेदादन्यहिंसापरो हत्वा इति शब्दः, ता उषित्वा इति लक्ष्मीधरः इति गृ. र., ७७

2 छित्वा इति गृ. र., ७७ ; शौनकः—भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यश्च हरेत् स राक्षसः इति या. अप., पृ. ९१ ; आश्व. गृ., १, ४, ३२

3 यस्मिन् बलेन प्रमथ्य हरेत् स क्षात्रः इति गृ. रत्ना., ७७

हारीतः

अलङ्कृतामभिजयन् क्षात्रः ।

विवाहार्थमलङ्कृतां कन्यामुद्दिश्य युद्धे विजयमानस्य कन्याप्राप्तिः स क्षात्र इत्यर्थः ॥

## अथ पैशाचलक्षणम्

तत्र मनुः[1]

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः [2]प्रथितोऽष्टमः ॥

'रहः' एकान्ते । 'उपगच्छति' आलिङ्गनादि करोति न तु उपभुङ्क्ते[3] एव । क्षतयोनित्वे पाणिग्रहणसंस्काराभावप्रसङ्गात् ।

देवलः

सुप्तान्मत्ताच्च कन्यायाः हरति[4] व्यसनादपि ।
प्रमादहेतुः पैशाचः विवाहोऽष्टम उच्यते ॥

1 ३, ३४

2 कथितः इति गृ. र., ७८ ; या. अप., चाष्टमोऽधमः पृ. ९० ; या. वी., १२७

3 उपभङ्क्ते । एनं हि उभये सिद्धे पाणिग्रहणसंस्काराभावप्रसङ्गात् इति ना. पाठः

4 सुप्तात् मत्ताच्च कन्याया रोहणं इति. गृ. र., ७८

'सुप्तात्' स्वप्नात्। 'मत्तात्' मद्यपानेन मत्तत्वात्। 'व्यसनात्' राजाद्युपद्रवात्। [कन्यावतां इति शेषः। "सुप्तानां प्रमत्तानां उपाहरेत् पैशाच" इत्याश्वलायनवचनात्।]*

याज्ञवल्क्यः[1]

पैशाचः[2] कन्यकाच्छलात्।

'कन्यकाच्छलात्' कन्याप्रतारणात्।

हारीतः

स्त्रीपानमद्यभोगसम्प्रयोगात्पैशाचः।

कन्यापित्रादीनां स्त्रियां पाने मद्ये भोगे च गीतनृत्यादौ सम्प्रयोगादासक्तेः।

अथ [3]वसिष्ठबौधायनौ

बलात् चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा॥

एतच्च मन्त्रसंस्कारात् पूर्वं कन्याप्रत्याहरणं, कुलशीलादिवरान्तरप्राप्तौ बोद्धव्यम्।

* [ ] ना. को.

1 १, ६१

2 कन्यकां इति या. अप., पृ. ९०

3 वसि. १७. ७३ ; बो., ४, १, १७

यमः

वरश्चेत् कुलशीलाभ्यां न[1] युज्येत कथञ्चन ।
न मन्त्राः कारणं तत्र न च कन्यानृतं भवेत् ॥
समाक्षिप्य[2] हृतां कन्यां बलादकृतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत् ॥

'कन्यानृतं' कन्यादानान्यथाकरणपापम् । 'समाक्षिप्य' आच्छिद्य ।

शातातपः

हीनस्य कुलशीलाभ्यां हरन् कन्यां न दोषभाक् ।
न मन्त्राः कारणं तस्य न च कन्यानृतं भवेत् ॥
समाक्षिप्य बलात्कन्यां पापादक्षतयोनिकाम् ।
कुलशीलवते दद्यादिति शातातपोऽब्रवीत् ॥
उद्वाहिता[3] तु या कन्या सम्प्राप्ता न च मैथुनम् ।
भर्तारं पुनरभ्येति यथा कन्या तथैव सा ॥

'पापात्' पुरुषात् अरूपवतः[4] ।

अत्र कात्यायनः

स वा यद्यन्यजातीयः पतितः [5]क्लीब एव वा ।

1 प्रसह्येत् इति गृ. र. ७९

2 समाक्षिप्यानृतां कन्यां बलादक्षत इति गृ. र., ७९ ना. को. च

3 विवाहिता इति गृ. र., ७९

4 'पापात्' पापवतः पुरुषात् इति ना. को.

5 क्रूरः इति गृ. रत्ना., ७९

विकर्मस्थः[1] सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
क्लीबो वा यदि वा भर्ता विसृष्टः पुंस्त्वकारणैः ।
ऊढाऽपि देया साऽन्यस्मै सप्रावरणभूषणा ॥

गन्धर्वादिविवाहचतुष्टयानन्तरं देवलः

प्राप्तेषूर्ध्वं विवाहेषु विधिर्वैवाहिकः स्मृतः ।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाऽग्निसाक्षिकः ॥

'वैवाहिको विधिः' विवाहाङ्गभूतो लाजहोमादिः ।

बह्वृचपरिशिष्टम्[2]

ब्राह्मेष्वार्षेषु दैवेषु प्राजापत्येषु याज्ञिकैः ।
पूर्वं होमविधिः प्रोक्तः पश्चात्परिणयः स्मृतः ॥
गान्धर्वासुरपैशाचा[3] विवाहो राक्षसश्च यः ।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥

## अथ विवाहगुणागुणौ

तत्र मनुः[4]

ये यस्यैषां विवाहानां मनुना कीर्तिता गुणाः ।
सर्वं शृणुत तं[5] विप्राः सम्यक्कीर्तयतो मम ॥

1 सदोषो वा इति गृ. र., पृ. ८०
2 परिशिष्टः इति गृ. र., पृ. ८०
3 पैशाचविवाहा इति या. वी., १२५
4 ३, ३६
5 तद्विप्रा इति गृ. र., ८१

दश [1]पूर्वान् परान् वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः [2]पितॄन् ॥

दैवोढजासुतश्चैव सप्त सप्त परावरान् ।
आर्षोढजासुतस्त्रींस्त्रीन् षट् षट् कायोढजासुतः ॥

दश शब्दः पूर्वापरशब्दाभ्यां प्रत्येकमभिसम्बध्यते, 'एकविंशक' मित्यभिधानात् । 'ब्राह्मी' ब्राह्मविवाहोढा । 'एनसः' पापात् । 'पितॄनि'ति पुत्रादयोऽप्यजहत्स्वार्थलक्षणया वृत्त्या पितृशब्देनोपादीयन्ते । 'दैवोढजासुतः' दैवेन विवाहेनोढा दैवोढा, तस्यां जाता दैवोढजा तस्याः सुतश्च । "ङ्यापोः संज्ञाच्छन्दसोर्बहुलं" [3]इति [4]ह्रस्वत्वम् । क्वचित्पाठः 'दैवोढायाः सुत' इति ।

प्राजापत्यविवाहमुक्त्वा याज्ञवल्क्यः[5]

स कायः पावयेत्तज्जः षट् षड्वंश्यान् सहात्मना[6] ।

गौतमः[7]

पुनन्ति साधवः पुत्रास्त्रिपुरुषमार्षाद्दश दैवाद्दशैव प्राजापत्यात् ।

1 पूर्वापरान् इति गृ. र., ८१

2 मोचयेद् इति गृ. र., पृ. ८१

3 पा. सू., ६, ३, ६२

4 ह्रस्वत्वं दैवोढासुत इति गृ. र., ८१

5 १, ६०

6 स कायः पावयेत् तज्जः षड्वंश्यान् सह चाऽऽत्मना इति या. अप., ८९

7 १, ४, २४

आश्वलायनः[1]

द्वादशाऽवरान् द्वादश परान् पुनात्युभयतः। दशाऽवरान् दश परान् पुनात्युभयतः। अष्टाऽवरान् अष्ट परान् पुनात्युभयतः। सप्ताऽवरान् सप्त परान् पुनात्युभयतः।

'अवरान्' अधस्तनान् स्ववंश्यान्। एतच्च वाक्यचतुष्टयं [2]ब्राह्मदैवप्राजापत्यार्षविषयं यथाक्रमं, तदनन्तरमभिधानात्।

शङ्खलिखितौ

सप्ताद्यन्तयोरात्मानं च प्राजापत्यः। पञ्चाऽऽर्षः। त्रीन्दैवो[3], नोत्तरेषु क्रियाप्राधान्यम्।

पुनातीत्यनुवृत्तौ विष्णुः[4]

प्राजापत्यपुत्रश्चतुरः।

ब्राह्मादिविवाहचतुष्टयाभिधानानन्तरं देवलः

चतुर्ष्वेतेषु[5] दत्तायामुत्पन्नास्तनयास्त्रियाम्।
दातुः प्रतिग्रहीतुश्च पुनन्त्यासप्तमं कुलम्॥

1 १, ४, २२; २४; २६; २८

2 ब्राह्मदैवार्षप्राजापत्येषु यथासंख्यं सम्बध्यते, तथैवाभिनाधात् इति गृ. र., पृ. ८२

3 नव दैवः इति गृ. र., ८२ दैवोत्तरा क्रिया इति ना. को.

4 २४, ३२ प्राजापत्यश्चतुरः इति मु. पु.

5 चतुर्ष्वेतेषु दत्तायामुत्पन्नस्तनयः इति गृ. र., पृ. ८२ ना. को. च

मनुयमौ[1]

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवाऽनुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः ॥

रूपवन्तो गुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥

इतरेष्वनुविष्टेषु[2] नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥

विवाहानुवृत्तौ आश्वलायनः[3]

अत ऊर्द्ध्वं अक्षारलवणाशिनौ ब्रह्मचारिणावनलङ्कुर्वाणौ अधःशायिनौ स्याताम् , त्रिरात्रं द्वादशरात्रं संवत्सरं वा ।

ब्रह्मपुराणे

कृते विवाहे वर्षं तु वस्तव्यं ब्रह्मचारिणा ।
यद्यष्टवर्षा कन्या स्यात् [4]तथाऽत्र त्रिगुणः पुमान् ॥

'त्रिगुणः' चतुर्दशवर्षः[5] ।

1 मनु., ३. ३९; अथ यमः, इति गृ. र., ८२

2 इतरेष्ववशिष्टेषु इति गृ. रत्ना., पृ. ८३

3 १, ६, ११

4 तथा तत्रिगुणः इति गृ. र., पृ. ८३

5 चतुर्विंशतिवार्षिकः इति गृ. रत्ना., पृ. ८३ ना. पाठौ च आदरणीयौ

तथा

अथवा द्वादशाऽहानि त्रिंशद्वर्षेण सर्वदा ।
यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता ॥
द्वात्रिंशद्वर्षपूर्णेन यदि षोडशवार्षिकी ।
लब्धा तदा तु षड्रात्रं वस्तव्यं संयतेन तु ॥
विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम् ।
अत ऊर्द्ध्वमहोरात्रं वस्तव्यमपि[1] संयतैः ॥

इति श्रीभट्टहृदयधरात्मजमहासन्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
गृहस्थकाण्डे विवाहभेदाः ॥

1 मिति संयतैः इति गृ. रत्ना., पृ. ८३

## ३

# अथाऽधिवेदनम्

तत्र मनुः[1]

मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत्।
व्याधिताऽप्यधिवेत्तव्या हिंस्राऽर्थघ्नी[2] च सर्वदा ॥

'मद्यपा' अत्र द्विजातिस्त्री बोद्धव्या। 'असत्यवृत्ता' असाध्वाचारा। 'प्रतिकूला' भर्तुरनिष्टकारिणी। 'व्याधिता' गृहकृत्यासामर्थ्यापादकव्याधियुक्ता। हिंस्रा' पुत्रदास्यादिताडनशीला। 'अर्थघ्नी' उपेक्षादिना अर्थविनाशकारिणी। 'सर्वदे'त्यस्याऽसत्यवृत्तादिभिरन्वयः।

याज्ञवल्क्यः[3]

सुरापी व्याधिता धूर्त्ता वन्ध्याऽर्थघ्न्यप्रियंवदा[4]।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥
अधिविन्ना[5] तु भर्तव्या महदेनोऽन्यथा भवेत्।

1 ९, ८०

2 चाधिवेत्तव्या हिंस्राऽर्थघ्नी च इति गृ. रत्ना., पृ. ८४

3 १, ७३

4 वन्ध्या चैवाप्रियंवदा इति गृ. र., ८४

5 अधिवेद्या इति गृ. र., ८४

'धूर्ता' वञ्चनप्रधाना। 'स्त्रीप्रसूः' स्त्रीमात्रजननी।

शङ्खलिखितौ

अप्रियशीलां पुरुषद्वेषिणीं अनुकूलां वाऽधिविन्देत्॥

'अप्रियशीला' भर्तुरप्रीतिकरशीलवती। 'पुरुषद्वेषिणी' पतिं या द्वेष्टि।

मनुः[1]

वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥

अत्र अधिवेत्तव्येति शेषः।

देवलः[2]

आकाङ्क्षेताऽष्ट वर्षाणि भर्ताऽतिप्रसवां स्त्रियम्।
दश[3] वन्ध्यां च विन्ध्यां च द्वादश स्त्रीप्रसूतिनीम्[4]॥
ततो विन्देत विधिना पुत्रार्थी धर्मतः स्त्रियम्।
पुत्रलाभात् परं लोके नास्त्यतिप्रसवा हि ताः॥

1 मनुः—वन्ध्याष्टमेऽधिवेत्तव्या, या. अप., १००; या. वी., १३६; मनु., ९. ८१

2 देवलः—आकाङ्क्षेत·······प्रसवस्त्रियाः इति गृ. रत्ना., पृ. ८५ ना. कोशे च; उदय. कोशे देवलवचनत्वेन नोक्तम्।

3 दश विन्ध्यां वन्ध्यां च इति गृ. र., ८५; दश वन्ध्यां च इति ना. कोशपाठः

4 एकामुद्वाह्य कामार्थमन्यां लब्धुं य इच्छति इति गृ. रत्ना., पृ. ८५

एकासुध्नु (?) परुषभाषणशीला ।

हारीतः

अप्रजा नवमे वर्षे दशमे [1]तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

एकामुद्वाह्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वाऽर्थैः [2]पूर्वोढामपरां वहेत् ॥

एका शूद्रस्य वैश्यस्य द्वे तिस्रः क्षत्रियस्य च ।
चतस्रो ब्राह्मणस्य स्युर्भार्या राज्ञो यथेच्छतः ॥

'अतिप्रसवा' प्रसवः पुष्पं रजस्तद्योग्यकालेऽप्यतिक्रान्तं यथा। 'विन्ध्या' छिद्रादियुक्ता[3]। 'प्रसवा' अपत्यानि। 'समर्थः' तत्तोषणार्थार्थदान इति शेषः। अष्टवर्षादिकालप्रतीक्षाविकल्पो वयःशक्त्यपेक्षया व्यवस्थितो बोद्धव्यः। येषु तु अधिवेदननिमित्तेषु न कालविशेषः श्रूयते तेषु यावता कालेन तद्दोषनिश्चयो भवति, तावन्तं कालं प्रतीक्षेत। यथा दीर्घरोगेऽधिविन्देत । पूर्वस्त्रीविवाहादुपरि स्त्र्यन्तरविवाहं कुर्यात् ।

मनुः[4]

या रोगिणी स्याद्दुहिता[5] सम्पन्ना चैव शीलतः ।

1 च मृतप्रजा इति गृ. र., पृ. ८५

2 तु पूर्वोढां इति गृ. र., पृ. ८५

3 'निन्द्या' श्वित्रादियुक्ता इति नागपुरकोशपाठः

4 ९, ८२ ; 'स्यात्तु हिता' ( पत्युः अनुकूला ) इति कुल्लूकः ।

5 हिता सम्पन्ना चैव सन्ततम् इति गृ. रत्ना., पृ. ८६ ; या. अप., १००

सानुज्ञाप्याऽधिवेत्तव्या [1]नावमान्या च कर्हिचित् ॥

याज्ञवल्क्यः[2]

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥

'आधिवेदनिकं' अधिवेदनप्रयोजनमलङ्करणादि यावदेकस्या दीयते, तावदेवाऽधिविन्नाया अपि दातव्यमित्यर्थः ।

मनुः[3]

अधिविन्ना तु या नारी निर्गच्छेद्दूषिता[4] गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥

नारदः[5]

अनुकूलामवाग्दुष्टां [6]रक्षां साध्वीं प्रजावतीम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

इत्यधिवेदनपर्व ॥

1 नावमन्येत् तु इति गृ. र., ८६; नावज्ञेया कथञ्चन या. अप., १००
2 २, १४८
3 ९, ८३
4 दुःखिता इति या. वी., १३७
5 १२, ९७
6 दक्षां इति गृ. र., ८६, मुद्रित नारदीये ( पृ. १८६ ) च

# अथ परिवेदनविधिः

तत्र [1]मनुशातातपौ यमबौधायनौ च द्वितीये

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥
परिवित्तिः परिवेत्ता यया च परिविद्यते।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥

'याजक'श्चाऽत्र विवाहाङ्गभूते होमे आधानेषु च ऋत्विक्।

अत्र[2] [ हारीतः ]

ज्येष्ठे अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति परिविन्नो ज्येष्ठः। [3]परिवेदिनी कन्या परिदायिनी परिकर्ता याजकः सर्वे ते पतिताः।

'अनिर्विष्टे' अकृतविवाहे। निष्ठानिर्देशादनिष्पन्ने ज्येष्ठविवाहे वर्तमानेऽपि कनिष्ठस्य विवाहे नाऽधिकारः।

1 मनु., ३. १७२ ; बौ., २, १, ३९

2 हारीतः—ज्येष्ठ तु अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति। परिविन्नो ज्येष्ठः इति गृ. रत्ना., ८७ , नागपुरकोशे च

3 परिवेदनीया कन्या, परिदायी दाता, परिवेत्ता याजकः, सर्वे ते पतिताः इति गृ. र., ८७

तस्मात्सह विवाहोऽपि न कार्यः । 'भ्रातृ' पदेन सोदर्य एवोच्यते । सापत्न्यादौ एककारणत्वगुणयोगादपि भ्रातृशब्दप्रयोगोपपत्तेर्नाऽभिधाशक्तिकल्पना । एतन्न्यायार्थवादिनी च [1]'पितृव्यपुत्रान्' इत्यादि शातातपस्मृतिः[2]

छन्दोगपरिशिष्टे कात्यायनः

दाराधिगमनाधाने यः कुर्यादग्रजाग्रतः[3] ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥
परिवित्तिपरिवेत्तारौ नरकं गच्छतो ध्रुवम् ।
आचीर्णप्रायश्चित्तौ तौ पादोनफलभागिनौ ॥

पातकफलस्य नरकस्य पादोनफलभागिनावित्यर्थः ।

तथा

धनवार्धुषिकं राजसेवकं कर्षकं तथा ।
प्रोषितं च परीक्षेत* वर्षत्रयमपि त्वरन् ॥
प्रोषितं[4] यद्यश्च एवास्त्वब्दादिति समाचरेत्(?) ।
आगते तु [5]ततस्तस्मिन् पादं वा[6] शुद्धये चरेत् ॥

1 पितृव्यपुत्रान् सापत्न्यान् परमातृसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ इति गृ. रत्ना., ८७

2 यमशातातपयोः स्मृतिः इति गृ. र., ८७

3 अग्रिमस्थितौ इति गृ. र., ८७; अग्रजे स्थिते इति ना. को. पाठः

* प्रतीक्षेत इति ना. को. पाठः

4 प्रोषितं यद्यश्रृण्वानमब्दादूर्ध्वं समाचरेत् इति गृ. रत्ना., पृ. ८८

5 पुनः इति गृ. र., ८८

6 तत् इति गृ. र., ८८

'अपि त्वरन्' इति । त्वरन्नपीति योज्यम् । यदि धन-वार्धुषिकादिदेशान्तरे वर्तमानं शृणुयात्तदा विवाहे 'त्वरन्' त्वरमाणोऽपि वर्षत्रयं प्रतीक्षेत । यदि तु तं प्रोषितादृष्ट एवाब्दं प्रतीक्ष्य विवाहमाचरति, तदा आगते तस्मिन्* परिवेदनप्रायश्चित्तपादं कुर्यात् ।

गौतमः[1]

नष्टे[2] भ्रातरि ज्यायसि षड्वार्षिकं क्षपणं, श्रूयमाणेऽभिगमनं, प्रव्रजिते तु निवृत्तिः, प्रसङ्गात्तद्द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु षडित्येके ।

ज्येष्ठे सोदरेऽकृतविवाहे अनाहिताग्नौ च प्रोषिते । कनीयानेवं द्वादशाष्टवर्षकं* । षड्वर्षप्रतीक्षणं कुर्यादश्रूयमाणे ज्येष्ठे विवाहाग्न्याधाने कारयितुमभिसुसगमनम् । प्रव्रजिते च तस्मिन् गमननिवृत्तिः । ब्राह्मणस्य विद्यार्जनार्थं

* तस्मिन् कनिष्ठः इति ना. को.

1 २, ९, १४

2 नष्टे प्रोषिते भ्रातरि ज्यायसि ज्येष्ठे अकृतविवाहे अनाहिताग्नौ च यवीयान् कन्याग्न्युपयमे स्वविवाहाग्न्याधाने षड्वर्षप्रतीक्षणं कुर्यादश्रूयमाणे । श्रूयमाणे तु ज्येष्ठे प्रोषिते भ्रातरि विवाहाग्न्याधाने तं कारयितुं यवीयसा कार्यम् । प्रव्रजिते कृतसन्न्यासे तु तस्मिन् ज्येष्ठे तु प्रसङ्गान्निवृत्तिः कार्या । ब्राह्मणस्य विद्यासम्बन्धान्न्यायतो युक्तः । अत्रैव यदष्टवर्षप्रतीक्षणं वर्षं वा केषाञ्चिन्मतम् । अत्यन्ताश्रूयमाणत्वाभ्यामन्वयः शक्त्यपेक्षया विकल्पः इति गृ. र., पृ. ८९

* ना. को. पाठोऽत्र आदृतः । उदयपुरपुस्तके "कनीयानेवं शब्दाभिदिष्टम्" इति आसीत् ।

गतस्य द्वादशवर्षप्रतीक्षणम्। षड्वर्षप्रतीक्षणं वा एकेषां मतम् । वर्षस्य सर्वसंख्यायाः प्रतीक्षणे वयःशक्त्यपेक्षया विकल्पः।

वसिष्ठः

अष्टौ दश[1] द्वादशवर्षाणि ज्येष्ठे भ्रातरमविनिष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति।

तत्र श्लोकौ भवतः

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥
उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा।
राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम् ॥

'आमयावी' रोगातिशयवान्[2]। "सर्वत्रामयस्योपसङ्ख्यानं" इति दीर्घः । अतिरोगिणं प्रति छन्दोगपरिशिष्टवचनात्। मत्वर्थीयस्य च इनिप्रत्ययस्याऽतिशायनेऽपि स्मरणात्।

शातातपः

क्लीबे देशान्तरगते पतिते भिक्षुकेऽपि च[3]।
योगशास्त्राभियुक्ते च न[4] दोषः परिविन्दतः ॥

1 द्वादशवर्षाणि ज्येष्ठभ्रातरमप्रतीक्षमाणः प्रायश्चित्ती भवति इति गृ. रत्ना., पृ. ८९

2 अतिसार रोगीति गृ. र., पृ. ८९

3 वा इति गृ. र., ८९

4 न दोषः परिवेदने इति गृ. र., ८९

खञ्जवामनकुब्जेषु गद्गदेषु जडेषु च ।
जात्यन्धबधिरे मूके न दोषः परिवेदने ॥

पितृव्यपुत्रान्[1] सापत्न्यान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

'गद्गदो' अस्पष्टवाक् । 'जडः' पुनः पुनरध्याप्यमानोऽपि ग्रहणासमर्थः । परनारीषु (?) दत्तकृत्तिमादयो भ्रातरः । योगशास्त्राभियोगेन विरक्तं लक्ष्यते ।

छन्दोगपरिशिष्टे कात्यायनः

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वैश्याभिशस्त[2] पतितशूद्रतुल्यातिरोगिणः ॥

जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धान् कुदर्यांश्च[3] कृषिशक्तान् नृपस्य च ॥

धनवृद्धिप्रशस्तांश्च[4] कामतः कारिणस्तथा ।
कुलटोन्मत्तचौरांश्च परिविन्दन्न[5] दुष्यति ।

'एकवृषणः' एकाण्डः षण्डविशेषः । 'शूद्रतुल्याः' गोरक्षणादिकर्मपराः ।

1 इदं गृ. रत्नाकरे न दृश्यते

2 अभिषक्त इति गृ. र., पृ. ९० ; अभियुक्त इति ना. को. पाठः

3 वृद्धानभार्यांश्च कृषिसक्तान् इति गृ. रत्ना., पृ. ९० कदर्यांश्च कृष्णशक्तान् परस्य च इति ना. को. पाठः

4 प्रसक्तांश्च इति गृ. र., पृ. ९०

5 दूष्यति इति गृ. र., ९०

गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

इति [1]मनु वचनात् । 'कुण्ठकः' पाणिरहितः । 'आचार्यान् नृपस्ये'ति नृपस्य आचरणीयानित्यर्थः ।

अत्रेयं व्यवस्था—द्वादशवर्षप्रतीक्षणवचनं कनिष्ठस्य धर्मः । धनविद्यार्थे प्रोषिते पुनः पुनः श्रूयमाणे ज्येष्ठे दशाष्टवर्षप्रतीक्षणं तु वयःसामर्थ्यापेक्षया देशान्तरस्थ-वार्ताश्रवणात्तया वा । षड्वर्षप्रतीक्षणं तु गौतमीयं धर्म-धनविद्यार्थप्रोषिते सर्वथा अश्रूयमाणे । वर्षत्रयप्रतीक्षणं तु धर्मधनयोरुक्तत्वात् पारिशेष्यात् कामासक्ते प्रोषिते राजसेवके, कृष्यासक्ते च ज्येष्ठे अतित्वरमाणस्य कनिष्ठस्य ।

अत्र चाऽग्निहोत्राधानवदावसथ्याधानेऽपि ज्येष्ठेनाकृते कनिष्ठेन क्रियमाणे परिवेत्तृत्वं भवत्येव, कात्यायनेनाधानशब्देनाधानमात्रोपादानात्[2] । 'कान्याग्न्युपयमेष्वि'ति गौतमेनाग्निमात्रस्वीकारोपादानात्समाचाराच्च[3] ।

हारीतः

सोदर्याणां तु सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविन्द्यन्ते नाऽग्निहोत्रेण चेज्यया ॥

आधानापेक्षया दारपरिवेदने दोषाधिक्यप्रतिपादनपरमेतत्, न तु पर्याधाने दोषाभावार्थम् ।

1 ८, १०२

2 आवसथ्याधानाग्निहोत्राधानहोमयोरुभयोरप्युपादानात् इति गृ. र., ९१

3 गौतमवचनस्याप्युभयसाधारणत्वात् समाचाराद्वा इति गृ. र., ९१

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

इति मनुना[1] तत्राऽपि दोषप्रतिपादनात्। पर्य्याधाने च पृथक् प्रायश्चित्ताभिधानात्। एतेनैव सप्ताग्नयः[2] परिविन्दन्ति इत्यपि व्याख्यातम् ।

तथा चापस्तम्बेन 'अभिनिर्मुक्ताभ्युदितकुनखीश्यावदन्ताग्राविधिश्रुदिधिषु पतिपर्य्याहितपरीष्टपरिवित्तिपरिवेदनेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेदो गरीया'निति वदता पर्य्याधानापेक्षया दारपरिवेदनस्याधिकदोषत्वमुक्तम्। एवमेवावसथ्याधानेऽपि गौतमेन 'यवीयान् कन्याभ्युपगमे' ष्विति अविशेषेणाऽग्निमात्रोपादानात् ।

शातातपः

नाऽग्नयः परिविन्दन्ति न वेदा[3] न तपांसि च ।
न[4] च श्राद्धं कनिष्ठस्य विफला या च कन्यका ॥

इति हृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ गृहकल्पकाण्डे परिवेदनपर्व ॥

1 ३, १७१

2 नाग्नयः इति गृ. र., ९२

3 यज्ञाः इति गृ र., पृ. ९२

4 न श्राद्धं च कनिष्ठस्य विकला या च कन्यका इति गृ. रत्ना., पृ. ९२

५

# अथाऽऽवसथ्याधानम्

तत्र छन्दोगपरिशिष्टे कात्यायनः

यस्य दत्ता भवेत्कन्या वाचा सपदि केनचित्।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा[1] ॥

'सपदि' तत्काले। 'अन्त्यां समिधं' समावर्तनकालीनाम्। एतदुक्तं भवति—यत्कृते ब्रह्मचर्यावस्थायामेव कन्यापित्रा कन्या दातुं प्रतिज्ञाता भवति, स तस्मिन्नेव कालेऽग्निमाधाय तस्मिन्नग्नौ समावर्तनाद्युदीच्यमग्निसाध्यं कर्म कुर्यात्। स आधास्यन्नन्त्यां समिधमादधीतैवेत्यव्यवधानेन वाक्यं योजनीयम्।

तथा च गोभिलगृह्यम्[2]

यदैवाऽन्यां समिधमभ्यादधाति[3] जायायाः पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत्स एवाऽस्य गृह्योऽग्निर्भवति।

1 चान्यथा इति गृ. र., पृ. ९२

2 गोभिलः—स तदैवान्त्यां समिधं, इति गृ. रत्ना., पृ. ९३

3 अभ्यादधीत, जायाया वा पाणिं जिघृक्षन् इति गृ. र., पृ. ९३

तथा

अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति ।
न तथा तन्त्रलोपोऽस्य तेनैवाऽन्यां समुद्वहेत् ॥

'तन्त्र' शब्देनाऽत्र प्रक्रमादावसथ्याधानानुष्ठानमुपात्तम् । 'तेनैव' अर्थादाहितेनाऽग्निना ।

तथा

अथ चेन्न लभेताऽन्यां याचमानोऽपि कन्यकाम् ।
तमग्निमात्मसात्कृत्वा क्षिप्रं[1] स्यादुत्तराश्रमी ॥

'आत्मसात्कृत्वा' आत्ममयं कृत्वा मन्त्रेणात्मन्यारोप्येति यावत् ।

पारस्करः

आवसथ्याधानं दारकाले दायाद्यकाल एकेषाम् ।

'दायाद्यकाले' दायभागादानकाले[2] ॥

पैठीनसिः

वैवाहिकमग्निमिन्धीत[3] सायं प्रति यथाकालं समिधोऽभ्यादध्यात् । "अग्नये[4] प्रजापतयेऽनुमतये" इति सायं "सूर्याय प्रजापतयेऽनुमतये" इति प्रातःकाले ।

1 प्रव्रज्यादुत्तराश्रमं इति गृ. रत्ना., पृ. ९३

2 दायविभागोत्तरकाले इति गृ. र., ९३

3 अग्निं समिन्धीत इति गृ. र., ९४

4 अग्नये प्रजापतये अनुमतये इति सायं, सूर्याय प्रजापतये अनुमतये ।

## हारितः

औद्वाहिकग्रहणात् गृह्यविधानाच्च गृहस्थः। तस्माद् गृहोषित इति। [1]गृहपतियजनाद् गार्हस्थ्यधर्म्माः प्रवर्त्तन्ते।

दारानाहृत्याऽग्नीनाधायेत्युक्ता पञ्च यज्ञा अन्ये च धर्माः श्रौताधानोत्तरकालमनुष्ठेयत्वेनोक्ताः। तानि श्रौताधानात् प्रागपि भवन्तीत्यनेनोच्यते। अतस्ते गृहस्थस्याऽनुष्ठेयाः। स चौद्वाहिकग्रहणात् गृह्यविधानाच्च गृहस्थः। 'औद्वाहिको' वैवाहिकोऽग्निः। गृह्यविधानं गृह्योक्तकर्मकर्तृकत्वेन विधानं, तस्मात् तदनन्तरोक्तकारणद्वयात् 'गृहोषित' इति गृहस्थः सन् ततः प्रभृति पाकयज्ञैर्यजते। तत एवाऽऽरभ्य गार्हस्थ्यधर्माः प्रवर्तन्ते।

## मनुविश्वामित्रौ[2]

वैवाहिकेऽग्नौ कुर्वीत गृह्यकर्म[3] यथाविधि।

अग्नये स्विष्टिकृते च सूर्याय प्रजापतये अनुमतये इति गृ. र., पृ. ९४; "अग्नये प्रजापतये अनुमतये इति प्रातः, उभयत्र अग्नये स्विष्टकृते च। अग्नये सूर्याय प्रजापतये अनुमतये इत्यत्र प्रातरिति सम्बद्ध्यते। अग्नये स्विष्टकृते इति। 'उभयत्र' सायं प्रातः काले" ॥ इति नागपुर कोशः पठति ॥

1 गृहपतियाजमाना गार्हस्थ्यधर्माः प्रतिपद्यन्ते। दारानागृह्य अग्नीनाधायेत्यभिधाय पञ्च यज्ञा अन्ये च धर्माः श्रौताधानोत्तरकालं कार्यत्वेनोक्ताः। तत् श्रौताधानादपि पूर्वं स्मार्ताग्न्याधानं पुरस्कृत्य भवन्तीत्यनेन वाक्येनाऽभिधीयते यज्ञस्तद् गृहस्थकार्यम् इति गृ. रत्ना., ९४

2 मनु., ३. ६७; विश्वामित्रः इति गृ. र., ९४

3 गृह्यं कर्म इति गृ. र., ९४

पञ्चयज्ञविधानं च पक्तिरन्वाहिकीं[1] गृही ॥

'वैवाहिके' विवाहकालपरिगृहीते । 'गृह्यकर्म' पाकयज्ञादि । 'पक्तिः' पाकः । 'अन्वाहिकी' प्रत्यहं या क्रियते ।

बौधायनः

भार्योद्वाहादिरग्निस्तस्मिन्[2] कर्मकरणं प्रागग्न्याधेयादिति ।

आपस्तम्बाद्यनुसारेण सर्वाधानपक्षे लौकिके गृह्यकर्मप्राप्त्यर्थम् ।

याज्ञवल्क्यः[3]

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते[4] चाऽपि स्मार्तं वैतानिकाग्निषु ॥

'वैतानिकः' वितानो यज्ञस्तत्प्रयोजनः ॥

1 प्रक्तिं चान्वाहिकीं गृहे, इति या. वी., १७६, पक्तिवानाह्निकीं इति गृ. र., ९४

2 यग्निस्तस्मिन् कर्मकरणं, इति गृ. रत्ना., ९४

3 १, ९७; श्रौतम् इति नागपुरकोशे, मिताक्षरायाञ्च पाठः

4 कालाहिते वापि श्रौतं वैतानिकाग्निषु इति गृ. र., पृ. ९५; या. अप., १२१ या. वी.,

## ६

# अथाऽग्निहोत्राधानादि

तत्र वसिष्ठः[1]

अवश्यं ब्राह्मणोऽग्नीनादधीत दर्शपूर्णमासाग्रहणेष्टि-चातुर्मास्यपशुसोमैश्च यजेत । नैयमिकं ह्येतत् ऋण-संस्तुतञ्च[2] ।

'नैयमिकं' नियमे भवं नित्यमित्यर्थः । 'ऋणसंस्तुतं' ऋणापाकरणरूपेण कीर्तितं "जायमानो वै ब्राह्मणः" इत्यादिना ।

शङ्खलिखितौ

दारानाहृत्याऽग्न्याधेयपुनराधेयाग्निहोत्रदर्शपौर्णमास-दाक्षायणचातुर्मास्यपशुसौत्रामण्यन्तैः हविर्यज्ञैः सप्तभि-र्यजेत् ।

'पुनराधेयः' आधानप्रकारविशेषः । 'दाक्षायणः' पञ्च-दशवर्षावधितया दर्शपूर्णमासयोरेव प्रतिपर्वावृत्याऽनुष्ठा-नेन प्रकारविशेषो याज्ञिकप्रसिद्धः ।

1 ११. ४५–४७ ; 'अरण्यं ब्राह्मणो' इति ना. कोशपाठः

2 अग्नीनादधीत । दर्शपौर्णमास्याग्रयणेष्टिचातुर्मास्यपशुहोमैश्च यजेत । वैयसिकं ह्येतत् ऋणसंस्तुतं च इति गृ. रत्ना., पृ. ९५

पैठीनसिः

अग्निर्वै[1] देवता मनुष्याणां तस्मादग्निमादधीत अग्निमुखाः हि देवताः[2]। हव्यं वहति देवानां कव्यं पितॄणां सायं प्रातर्बलिहरणम् । दर्शपूर्णमासौ नवेष्टिः[3] अष्टका पशुबन्धः पितृयज्ञ इति पाकयज्ञाः ।

'हव्यं वहति देवानां' इत्यत्राऽग्निरिति शेषः। 'कव्यं' इत्यत्र वहतीति शेषः ।

हारीतः

पाकयज्ञान् यजेन्नित्यं हविर्यज्ञांश्च नित्यशः ।
सौम्यांश्च विधिपूर्वेण य इच्छेद्धर्ममव्ययम् ॥

'सौम्यः'अष्टम्यामनुष्ठानम् ? ।

[4]पक्षादिकरणममावास्यादि श्राद्धम् । [5]श्रवणकर्म आग्रयणी क्रिया। आश्वयुजीकर्म चैत्रीविधानमग्न्याधानमग्निहोत्रं, दर्शपूर्णमासश्चातुर्मास्यकर्म पशुबन्धः[6] सौत्रामणीकरणमग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रं अप्तोर्याम इति सोमयागाननुतिष्ठेत् ।

1 मुखमग्निर्देवानां इति गृ. रत्ना., ९६

2 देवाः इति गृ. र., पृ. ९६

3 वेष्टिरष्टकापशुबन्धः पिण्डपितृयज्ञ इति गृ. र., पृ. ९६

4 आपस्तम्बः—पक्षादि इति गृ. र., पृ. ९६

5 श्रावणीकर्म इति गृ. र., ९६

6 कर्म चातुर्मास्यकर्म पशुबन्धनं इति गृ. रत्ना., ९६

'अमावास्या'दीत्यादिशब्देनाऽष्टकादिश्राद्धोपसङ्ग्रहः ।

देवलः

हुतः [1]प्रहुत अहुतः शूलगवो बलिहरणं प्रत्यवरोहण-मष्टकाहोम इति पाकयज्ञसंस्थाः सप्त । अग्निहोत्रमग्न्या-धेयं दर्शपूर्णमासौ[2] आग्रयणमयनयज्ञश्चातुर्मास्यानि सौत्रा-मणीति इमा हविर्यज्ञसंस्थाः सप्त । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी । वाजपेयोऽतिरात्रो अप्तोर्यामः इतीमाः सोमसंस्थाः सप्त । एकविंशतिविधो यज्ञश्चाऽध्वरवेदोक्तः[3]। वाजपेयाश्वमेधराजसूयपौण्डरीकगोसवादयो महायज्ञाः क्रतवः ।

एतावदिति कालमुद्दिश्य यज्ञोऽयं व्रतदानाद्यनुष्ठानं [4]सत्रं ( ? ) प्रक्रान्तेन पञ्चपदायज्ञान्दायज्ञप्रवृत्तिरिति यज्ञः 'कृतः'। देवोद्देशेन होमः 'प्रहुतः'। ब्राह्मणाय पाकाग्नि-दानम् 'अहुतः'। [5]वास्तुपालभूतेभ्यो बलिहरणम् । 'शूल-गवः' रुद्रदैवतः पुङ्गवयागः स्थालीपाकाङ्गकः। 'बलिहरणं' सर्पः ?[6] । 'प्रत्यवरोहरणं' मार्गशीर्ष्यां प्रत्यवरोहरण-मित्याद्युक्तास्तामिते स्थालीपाकस्य [7]जुहुयुरित्यद्याश्वला-यनोक्तम् । 'अयनयज्ञः' निरूढपशुयागः । 'एतावदिति

1 कृतः प्रकृतोऽकृतः गृ. र., ९६

2 वापनसवनयज्ञाः चातुर्मास्याः गृ. र., ९६

3 अयनयज्ञवाजपेय, इति गृ. र., ९६

4 सत्रे पकापकान्नेन पञ्चपदा यज्ञप्रवृत्तिरिति गृ. र., ९६

5 वास्तुपति गृ. र., ९७

6 सर्पाय मणिदानं गृ. र., ९७ ; सर्पबलिहरणम् इति नागपुरकोशपाठः

7 जुहुस्व गृ. र., १७

कालमुद्दिश्ये'ति। द्वादशरात्रादिसहस्रादिनपर्यन्तं सत्राङ्गं कालमुद्दिश्येत्यर्थः 'पञ्चपदा' पञ्चस्थालीपाकयज्ञसंस्थाः हविःसंस्थाः सोमसंस्थाः, महायज्ञाः सत्ररूपाः करोतीति यावत्।

बौधायनः[1]

अग्न्याधेयप्रभृत्यथेमान्यजस्राणि भवन्ति। यथै-तदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासाग्रयणमुदगयनदक्षिणा-यनयोः पशुश्चातुर्मास्यान्यृतुमुखे षड्ढोता वसन्ते ज्यो-तिष्टोमेन इत्येवं क्षेमप्रापणम्।

'अजस्राणि' स्वकाल आवश्यकानीत्यर्थः। 'षड्ढोता' ''वाग्धोता'' इत्यादिमन्त्रेण षडृतुमुखेष्वाहुतिः। क्षेम-प्रापणमकरणनिमित्तप्रत्यवायपरिहारः[2]।

मनुः[3]

अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा।
दर्शेन चार्द्धमासान्ते पूर्णमासेन चैव हि॥
सस्यान्ते नवसस्येष्ट्या तथर्त्तन्ते द्विजोऽध्वरैः।
पशुना त्वयनस्यान्ते समान्ते सौमिकैर्मखैः॥
नाऽनिष्ट्वा नवसस्येष्ट्या पशुना चाऽग्निमान् द्विजः।
नवान्नमद्यान्मासं वा दीर्घमायुर्जिजीविषुः॥

1 २, २, २३

2 परिहार इति गृ. र., ९७

3 ४, २५

नवेनाऽन्नेन चाऽनिष्ट्वा पशुहव्येन चाऽग्नयः ।
प्राणानेवाऽत्तुमिच्छन्ति [1]नवान्नामिषगर्हिताः ॥

'आद्यन्ते द्युनिशोरि'ति । सायंप्रातः सन्ध्ययोरित्यर्थः । 'ऋत्वन्ते' ऋतुक्षये । [2]चतुर्षु मासेषु अध्वरैश्चातुर्मास्ययागैः । 'पशुहव्येन' पशुहविषा ।

हारीतः

अग्निहोत्रे [3]च यज्ञाभिजितमश्नीयान्नाऽन्याभिजितमेनस्त्वग्दारुभिरिन्धनो वानस्पत्यमभिजयत्यद्भिराप: पय-आदिभिः । पय आज्यादि(?) । व्रीहियवाभ्यामोषधयः, पशूनां पशून् ।

'यज्ञाभिजितं' यज्ञेन कृत्वा पुरुषेणाऽभिजितं अभिजितादभ्यस्य एतस्वापात्(?) । नन्वेवं वृक्षफलादीनां महिषादिपयसः सविकारस्य, मृगाणां चाऽयज्ञियत्वात् भक्षणे

1 आमिषगर्धिकः गृ. र., ९८; गर्धिनः इति ना. कोशे

2 चतुर्षु चतुर्षु, इति गृ. र., ९८ ना. कोशे च

3 अग्निहोत्रवशयज्ञाभिजितमश्नीयात् नान्यमभिजितात्मनः त्वग्दारुभिः इन्धानो वानस्पत्यमभिजयत्यद्भिः पय आज्यादि । व्रीहियवाद्या ओषधयः, पशुना पशुयज्ञाभिजितं यज्ञेन हुत्वा पुरुषेण भक्ष्यतामापादितम्, तदन्यमभिजितं अभिजितां मध्ये यज्ञाभिजितं, अन्यमभिजितं नाऽऽश्नीयात् इति गृ. र., ९८ अग्निहोत्रं वायुजितमश्नीयात्तानभिजिताशनस्यैक त्वाद्दारुभिरिन्धानो वानस्पत्यभभिजायात्यद्भिरापः पयस्वादिभिः । पयस्वेद्यादि व्रीहियवाभ्यां ओषधयः, पशून् । 'अयजुभिर्जतं' यज्ञेन कृत्वा पुरुषेणाभिजितं भिक्ष्यतामापादितम् । अभिजिताशनस्य एकत्वापातात् । नन्वेवमिति नागपुरकोशे ।

कथमदोषः? तत्राऽऽह—'दारुभि'रित्यादि। 'वानस्पत्यं' वनस्पतिभवं फलादि। 'अद्भिरि'ति। पाकादिकाले [1]प्रतिषेकोपयुक्ताभिः यज्ञोपयुक्तैर्द्रव्यैः। 'आदि' शब्देन दध्यादीनां ग्रहणम्। 'पशुना' छागादिना यज्ञोपयुक्तेन। न ग्राम्यानारण्यानभिजयतीति सम्बन्धः।

याज्ञवल्क्यः[2]

प्रतिसंवत्सरे[3] सोमः पशुः प्रत्ययनं तथा।
कर्तव्या आग्रयणेष्टिः [4]चातुर्मास्यानि चैव हि॥
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः।
हीनकल्पं न कुर्वीत सति द्रव्येऽफलप्रदम्॥

'वैश्वानरी' चानुकल्पः। 'सति द्रव्य' इति। विद्यमाने प्रथमकल्पसम्पादके धने, 'हीनकल्पं न कुर्वीत' इत्यत्र[5] हेतुः—'अफलप्रदमि'ति यत इति शेषः।

यजेत इत्यनुवृत्तौ विष्णुः

शरद्ग्रीष्मयोश्चाऽऽग्रयणेन। व्रीहियवयोः पाके च[6]।

1 अभिषेक इति गृ. रत्ना., ९७

2 १, १२५

3 संवत्सरं सोमः गृ. र., ९९; या. अप., १६६; या. वी. २१२; ना. को. च

4 चातुर्मास्येन इति गृ. र., ९९

5 न हेतुः इति ना. कोशपाठः।

6 विष्णुः ५३, ६–७; वा इति गृ. र., ९९ ना. को. च.

जाबालः

सायं प्रातः सदाऽभ्यस्तं वैतानं जुहुयाद्विजः[1] ।
दर्शेन चाऽर्द्धमासान्ते[2] पूर्णमासेन चैव हि ॥
सस्यपक्तौ[3] नवेष्ट्या तु चातुर्मास्यैर्ऋतोर्मुखे ।
अयनादौ [4]निरूढेन पशुना वत्सरेऽपि[5] वा ॥
समान्ते सोमयागेन त्विष्ट्वा[6] मुक्तो न संशयः ।

यमः[7]

यजेदप्यग्निहोत्रेण गृहमेधी दिवानिशम् ।
दर्शेन पूर्णमासेन यजेत पितृदेवताः ॥

हारीतः

नाऽग्निहोत्रात् परो धर्मो नाग्निहोत्रात् परं तपः ।
नाऽग्निहोत्रात् परं दानं नाग्निहोत्रात् परो दमः ॥
नाऽग्निहोत्रात् [8]परं श्रेयो नाऽग्निहोत्रात् परं यशः ।

1 नर इति या. वी., पृ. २१२ सायंप्रातरित्येतदर्धं श्लोकद्वयानन्तरं दृश्यते

2 मासेन गृ. र., ९९

3 शस्यपक्तौ नवेष्ट्या च, चातुर्मास्येष्वृतोर्मुखे इति गृ. र., ९९ चातुर्मास्यैस्त्वृतोर्मुखे या. वी., २१२

4 निगूढेन इति या. वी., २१२

5 वत्सरेण गृ. र., ९९; या. वी., २१२ ना. को. च.

6 दिष्टया युक्तः गृ. र., ९९; या. वी., २१२, त्विष्टया युक्तो इति ना. को.

7 यमवचनं गृ. रत्नाकरे. न दृश्यते

8 परा पूजा गृ. र., ९९

नाऽग्निहोत्रात् परा सिद्धिर्नाऽग्निहोत्रात् परा गतिः ॥
नाऽग्निहोत्रात् परं स्थानं नाऽग्निहोत्रात् परं व्रतम् ।
निर्द्वन्द्वा निर्नमस्कारा[1] यमुपासन् मनीषिणः ॥
सोऽयं[2] सूक्ष्मोऽग्निहोत्रेषु गूढोऽग्निरिव दारुषु ।
शुक्रियेषु रहस्येषु निषत्सूपनिषत्सु च ॥
अधीयते महात्मानः सोऽग्निहोत्रे प्रकाशते ॥

'शुक्रियेषु' प्रवर्ग्यकाण्डेषु । 'रहस्येषु' अघमर्षणादिसूक्तेषु । [ सूक्ष्मं परमात्मानं शुक्रियादिषु[3] पठन्ति । सोऽग्निहोत्रे प्रकाशत इत्यन्वयः[4] । ]

तथा

अग्निहोत्रादिभिः पूतो नियतो[5] विजितेन्द्रियः ।
सूक्ष्मात्सूक्ष्ममवाप्नोति गगने सुषिरं यथा ॥
सुहुतान्यग्निहोत्राणि नयन्ति परमां गतिम्[6] ।
अत्र स्वर्गश्च मोक्षश्च यथा यो गन्तुमिच्छति ॥

'सूक्ष्मात्सूक्ष्मं' परं ब्रह्म । 'गगने सुषिरं यथे'ति । महाकाशे सुषिरादानीयते (?) यथेत्यर्थः[7] ।

1 निर्गन्धाः निर्नमस्कारा इति ना. कोशः
2 सोमः सूक्ष्मो इति ना. कोशः
3 मुक्तिवादिषु इति ना. कोशः
4 कोष्ठकान्तर्गतो भागः गृ., रत्नाकरे न दृश्यते
5 नियतात्मा जितेन्द्रियः गृ. र., १००; नाग. कोशे च
6 पद्यमेकं गृ. रत्नाकरे नास्ति
7 यथा गगने महाकाशे सुषिरात्मकमाकाशं दृश्यत इत्यर्थं इति गृ. र., १००; ना. कोशे च

[ जाबालः ]

सन्तोषामृतमास्वाद्य तन्मना धर्मविन्नरः[1] ।
कामेन[2] चाऽग्निहोत्रस्य होता स्वर्ज्योतिराप्नुयात् ॥

अत्र पैठीनसिः

अग्निमेवोपासीत [3]नाऽन्यद्दैवतं, अग्निर्भूम्यामिति विज्ञायते। न प्रवसेत् यदि प्रवसेदुक्तमुपस्थानं[4] प्रवासितस्य प्राशितमग्न्याधेयं जुहुयात्।

नवेष्ट्यामेवमौपासनस्योक्तं कल्पसूत्रोक्तमुपस्थानम्। कर्तव्यमिति शेषः । 'प्राशितं' यजमानप्राशनीयो भागः । एवमावसथ्यसम्बन्धिन्यां नवेष्ट्यां प्रोषितस्य यजमानभागमग्नौ प्रक्षिपेत् ।

अङ्गिराः

लौकिकं वैदिकं वाऽपि यज्जुहोति यथाविधि ।
वैदिकात्[5] स्वर्गमाप्नोति लौकिकं स्वर्गसाधनम् ॥

'लौकिकं' स्मार्त्तम् । 'वैदिकं' श्रौतम् । 'स्वर्गमाप्नोति' [ मोक्षमाप्नोति ][6]

1 जाबालवाक्यमिदमिति गृ. र., १००; ना. कोशे च
2 अकामेनाग्निहोत्रस्य होता स्वर्ज्योतिराप्नुयात् इति गृ. रत्ना., १००
3 अग्निमेधेनोपासीत इति गृ. र., १००
4 अवस्थानम् इति उदयपुरकोशे
5 दैविकान् इति उदयपुरकोशे
6 [ ] अत्रान्तर्गतो भागः ना. कोशे.

देवलः

नाऽग्निहोत्रं समाधाय जीवितार्थमपि[1] त्यजेत् ।
सर्वे वेदास्तदर्था हि[2] लोके ब्राह्मणजन्म च ॥

मनुः[3]

न च[4] कन्या न युवतिर्नाऽल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य [5]नार्तो नासंस्कृतस्तथा ॥
नरकं हि[6] पतन्त्येते जुह्वतः स च यस्य यत् ।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥

'अल्पविद्यः' प्रतिनिधिप्रायश्चित्ताद्यनभिज्ञः । 'बालिशः' षोडशवर्षादर्वाचीनः । 'आर्त्तो' रोगादिपीडितः । 'असंस्कृतः' गर्भाधानादिसंस्काररहितः । 'यस्य' अग्निहोत्रिणः । तदग्निहोत्रमिति शेषः । 'वैतानकुशलः' अग्नित्रयसाध्यकर्मकरणकुशलः । कन्यादीनाञ्चाऽत्राग्निहोत्रे ऋत्विक्प्रतिनिधित्वेन प्राप्तानां प्रतिषेधः ।

छन्दोगपरिशिष्टे कात्यायनः

असमक्षं[7] तु दम्पत्योर्होतव्यं नर्त्विगादिना ।

1 देवनार्थं इति ना. को

2 सर्वे वेदास्तदर्था हि गृ. र., १०१

3 ११, ३६

4 नैव गृ. र., १०१ ना. को. च

5 नार्तो नासंस्कृतस्तथा इति गृ. रत्ना., १०१

6 नरके पतन्त्येते जुह्वतः गृ. र., १०१; ना. को. च

7 आसामक्ष्यं गृ. र., १०१; असमक्षन्तु ना. को.

द्वयोरप्यसमक्षे[1] हि भवेद्धुतमनर्थकम् ॥
विहायाऽग्निं[2] सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥
अरण्यात्ययनाशाग्निदाहे ह्यग्निं समाहितः[3] ।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते ॥

'सीमा' अग्न्याधानादिसीमा । पत्नीयजमानयोः सीमान्तरगतयोर्होमकालातिक्रमे पुनराधानमित्यर्थः । 'नाशः' अदर्शनम् । 'समाहितः' सम्यगग्निरक्षणयत्नवान् ।

अत्र शङ्खलिखितौ[4]

अवाप्य वृत्तिं धर्मेण नित्यस्नायी प्रियातिथिः ।
अग्निहोत्रपरस्सम्यक् गृहस्थो नाऽवसीदति ॥

[ हारीतः ]

अस्कन्नपाकयज्ञः[5] सर्वसूनाकृतेभ्यः पापेभ्यः पूतो भवति । यथा प्रजानामशनमेवमग्नेरग्निहोत्रमिति श्रुतिः । यथा अनश्नन्त्यः प्रजाः पापीयस्त्वमुपयान्ति, प्रमीयन्ते वा, एवं विच्छिन्नाग्निहोत्राग्नयः क्रतुनोपपन्नेनाऽप्यवसीयस्त्वं उपयान्ति प्रमीयन्त इति । तस्मा-

1 असमक्षं हि भवेत् त्रयं गृ. र., १०१
2 विवाहाग्नौ गृ. र., १०१
3 अरण्योः क्षयनाशेऽग्निदाहे ह्यग्निसमाहितः इति गृ. रत्ना., १०१
4 इदं शङ्खलिखितवचनं गृ. रत्नाकरे न दृश्यते
5 हारीतः—अक्षुण्णपाकयज्ञः गृ. र., १०२ ; अविच्छिन्न इति ना. को.

दूभृत्यै[1] वाऽग्नेरप्रजाः। पापीयस्त्वमुपयान्ति प्रमापयन्तीति चाऽग्निहोत्रमिति श्रुतिः।

आयुष्कृद्यजमानः[2] आयुरेव प्राणाग्निहोत्रं यथा तृप्ताः समर्था भवन्ति, एवमविच्छिन्नाग्निहोत्रादग्नयः तृप्ताः प्रीताः क्रतुषु सम्भवन्ति । जरामर्यायैव सत्राय दीक्षितो यो[3] दर्शपूर्णमासारम्भणीयं करोति, स पौर्णमासेन हविषौषधिसान्नाय्यपशुषु सम्भवित्वात् सोममामावास्येन दर्शेन यत्राप्याययति स सोमयाजी, तस्माद्दर्शसंस्थौ §दर्शपूर्णमासबुधत्य(?) प्रथममेव पूतोऽमृतत्वं गच्छन्त्यतिरेकादन्यैः। [4]स द्विविधो द्रव्येज्यान आत्मेज्यानश्च। योऽस्त्वेवमेव द्रव्यमिति फलमभिसन्धाय सोपधं वा यजेत सा द्रव्येज्या।

अथ[5] यः श्रुतिस्मृत्यात्मज्ञानवानमृतवद्धविर्भूताधि-

1 तस्माद्धृत्यै गुप्त्यै वा अग्नेरग्निहोत्रमिति श्रुतिः गृ. र., १०२

2 आयुष्कृतं यजमान आयुरेव प्राणाग्निहोत्रं यथा तृप्तिसमर्थो भवति, एवमविच्छिन्नाग्निहोत्राग्नयः तृप्ताः प्रीताः क्रतुषु सम्भवन्तीति। जरामर्त्यायैवं सत्राय दीक्षते इति गृ. र., १०२

3 यो दर्शपूर्णमासारम्भणीयं करोति स पौर्णमासेन हविषा ओषधीषु सान्ना (ज्य ? य्य) पशुषु सम्भवित्वात्। यः सोमं अमावास्येन दर्शेन यजन्नाप्याययति स सोमयाजी तस्माद्दर्शसंस्थो दर्शपूर्णमासावुपेत्य प्रथममेव पूतः अमृतत्वमुपगच्छति अतिरेकादन्यैः। इति गृ. र., १०२

§ दर्शपूर्णयासावुत्पत्य इति ना. को.

4 स द्विविधो द्रव्येज्यानं आत्मेज्यानश्च योऽस्त्येव द्रव्यमिति फलमभिसन्धाय सोपधं वा यजते स द्रव्येज्या इति गृ. रत्ना., १०२

5 अथ श्रुतिस्मृत्यात्मज्ञानवान् अमृतं हविर्भूताधिदैवतं अध्यात्मभूतं वैश्वानरं यजति स आत्मेज्या। तदप्येतदृचोक्तं वैश्वानरमतिथिभूतमाद-

दैवताध्यात्मभूतं वैश्वानरं यजति स आत्मेज्या। तदप्येतद्दृचोक्तम्—

"वैश्वानरमतिथिमाददानमन्तर्विधौ परमे व्योमन्यात्मन्यात्मानमभिसंविदानः। प्रतिसायमरतिर्याति विद्वान् सम्यग्वीरमतिथिं [1]रोचयन्ति इमाँल्लोकानमृताः सञ्चरेम" इति।

'अस्कन्नपाकयज्ञः' अस्खलितपाकयज्ञः। अस्कन्नपाकयज्ञ इति पूर्वोक्तानुवादोऽयं फलप्रदर्शनार्थः। 'यथा प्रजानामशनमि'त्यादिना 'श्रुति'रित्यन्तेन लौकिकाशनदृष्टान्तेनाऽग्निहोत्रस्याऽवश्यकर्तव्यतामाह। 'अनश्नन्त्यः' भोजनमकुर्वत्यः। 'पापीयस्त्वं' काश्यम्। 'क्रतुनोपपन्नेन' दर्शपूर्णमासादिना प्रसिद्धेन। 'अवसीयस्त्वं' अश्रेष्ठत्वम्। 'धृत्यै' स्वरूपावस्थानाय। 'गुप्त्यै' रक्षणाय।

'आयुष्कृद्यजमानः' इत्यादिना 'सम्भवन्ती'त्यनेन प्राणाग्निहोत्रदृष्टान्तेनाऽग्निहोमतृप्तानां उत्तरक्रतुषु सामर्थ्यं प्रदर्श्यते। 'आयुष्कृत्' प्राणाग्निहोत्रकृत्। आयुःशब्देन आयुर्वर्द्धनहेतुत्वात्प्राणादिदेवताकमग्निहोत्रं लक्ष्यते। 'तृप्ताः' समर्थाः। 'जरामर्याय' जरामरणावधितया। 'जरामर्यायैव'मित्यादिना 'अतिरेकादन्यै'रित्यन्तेन 'आरम्भणीये'त्युपक्रमेण प्रथममेव दर्शपूर्णमासौ प्राप्य पूतो भवति। अन्यैस्तु द्वितीयादिप्रयोगैर्जरामरणपर्य-

दानमन्तर्विधौ परमे ब्रह्मणि आत्मनि आत्मानमभिसंविदानः प्रतिसायमरतिर्याति विद्वान् गृ. र., १०२

1 सम्यक् वीरमतिथिं रोचयन्त इमाँल्लोकानमृतान् सञ्चरेम इति गृ. रत्ना., १०३

न्तैरतिरेकादनुष्ठानभूयस्त्वादमृतत्वमुपगच्छन्तीत्युक्तम् । औषध्यादिषु सोमस्य सम्भवित्वात् । सोमयागेन सोममाप्याययति । 'स द्विविध' इत्यादिना 'सश्नरेम' इत्यन्तेन याग एवाधिकारिविशेषेण फलविशेष उक्तः । 'सोपधं' नैमित्तिकाद्युपाधिसहितम् । 'श्रुत्यादी'त्यत्र ज्ञानशब्दः प्रत्येकं श्रुत्यादिभिः सम्बध्यते । 'अमृतं' ब्रह्म । 'हविर्भूतं' हविरात्मकम् । अधिदैवतात्मकम् । 'अध्यात्मभूतं' यजमानभूतम् । 'वैश्वानरं' [1]वैश्वानरतपनहेतुम् । एवं भावापत्तौ यद्यजनं साऽऽत्मेज्या । 'वैश्वानरमतिथि'मित्यादि वैश्वानरमतिथिरूपम् । 'आददानं' आदरेणोपचरन्तम् । 'अन्तर्विधौ' अन्तर्यजने । 'आत्मनि' परमात्मनि । 'आत्मानं' जीवात्मानम् । 'अभिसंविदानः' [2]ध्यानाभ्यासेनैकत्वेनोपलभमानः । 'अरतिः' अपगतबाह्यविषयरतिः । 'परमे व्योमनि' परमाकाशे परमार्थे वियति, परमात्मनीति यावत् । तदेकत्वं [3]प्राप्नोति ब्रह्मीभावमनुभवतीत्यर्थः । 'प्रतिसायं'प्रति सन्ध्यायां होमकाल इत्यर्थः । इदं नित्यकर्म कालोपकरणार्थम् ।

पुनर्हारीतः

अक्षराद् ब्रह्म भवति ततः कर्म ततः ऋतुः ततः पर्जन्यस्ततोऽन्नं[4] ततो भूतानि जज्ञिरे ।

1 विश्वानरनयनहेतुं, इति गृ. र., १०४; ना. को. च

2 ज्ञानाभ्यासेन इति ना. कोशे

3 तदैक्यम् इति ना. कोशे

4 ततो नित्यं इति गृ. र., १०४

यज्ञात्प्रजा विश्वतः सम्भवन्ति यज्ञो धारयति प्रजाः ।
यज्ञाद्भूतमिदं[1] सर्वं यज्ञो मेध इमास्तनूः ॥
यजमानस्य ये निन्दां प्रवदन्त्यबुधा जनाः ।
यज्ञापोढं[2] तु नैतस्य पापं गृह्णन्त्य [चेत] सः ॥
नाऽस्त्ययज्ञस्य लोको वै नाऽयज्ञो विन्दते सुखम्[3] ।
अनिष्टयज्ञोऽपूतात्मा भ्रश्यते [4]शुष्कपर्णवत् ॥

यज्ञेन लोका विमला विभान्ति
यज्ञेन देवा [5]अमृतत्वमाप्नुवन् ।
यज्ञेन पापैर्बहुभिर्विमुक्तैः[6]
प्राप्नोति लोकान् परमस्य विष्णोः ॥

'अक्षरात्' परमात्मनः। ब्रह्मविदो भवति प्रथमत उपलभ्यते, "निःश्वसितमिदं यदृग्वेद" इत्यादिश्रुतिदर्शनात्। 'ततो' वेदात्। 'कर्म' क्रिया। 'क्रतुः' यागः। 'विश्वतः' सर्वतः। 'तनूः' शरीराणि। 'यज्ञापोढं' यज्ञेनाऽपहृतम्।

वायुपुराणे

दर्शं च पौर्णमासं च ये यजन्ति द्विजातयः ।

1 यज्ञो भूतं सर्वं यज्ञो वेद इति गृ. रत्ना., १०४; ना. को., च
2 यज्ञापोढस्य ते तस्य पापं गृह्णन्त्यचेतसः इति गृ. र., १०४; ना. को., च
3 शुभमिति ना. को
4 भिन्नपत्रवत् इति गृ. र., १०४; च्छिन्नपर्णवत् इति ना. को.
5 यज्ञेनादराद् गृ. र., १०४; यज्ञेन दोषाः इति ना. को
6 विमुक्तः इति गृ. रत्ना., १०४; ना. को., च

न तेषां पुनरावृत्तिः ब्रह्मलोकात्कदाचन ॥

पुनर्हारीतः

दिव्यां गतिमवाप्नोति ।

*[ तथा ]

[1]अहरहरग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्येष्टिपशुबन्धप्रभृतिभिः विधिवत् वृत्त्यतिरेकादग्निष्टोमाद्यैः प्रवृत्तिः ।

'प्रवृत्तिः' अनुष्ठानमित्यर्थः ।

वसिष्ठः[2]

श्रद्धाशीलोऽस्पृहयालुः अलसोऽग्न्याधेयाय, नानाहिताग्निः स्यात् । अलञ्च [3]सोमाय नासोमयाजी ।

'अस्पृहयालुः' परवित्तानुपलोलुपः । 'अलं' समर्थः । सामर्थ्यं च धनविद्यादिसम्पत्तिः ।

मनुः[4]

यस्य[5] त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये[6] ।

* [ ] गृ. रत्नाकरे न दृश्यते

1 अहरहः गृ. र., १०५ ना. को. च

2 ८. ९–१०

3 सोमपानाय नासोमयाजी स्यात् इति गृ. रत्ना., १०५

4 ११. ७

5 यस्य गृ. र., १०५ ना. को., च

6 वृत्तयोः गृ. र., १०५ ; तृप्तये या. वी., २११

अधिकं वाऽपि विन्देत स सोमं पातुमर्हति ॥

अतस्त्वल्पीयसि[1] द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि [2]न तस्याऽऽप्नोति तत्फलम् ॥

'त्रैवार्षिकं' वर्षत्रयं येन वर्तनं भविष्यतीति । 'भृत्याः' अवश्यपोष्याः ।

याज्ञवल्क्यः[3]

त्रैवार्षिकाधिकान्नो यः स सोमं पिबति द्विजः ।
प्राक्सौमिकीः क्रियाः कुर्यात् यस्यान्नं वार्षिकं भवेत् ॥

'प्राक्सौमिकीः' सोमात्प्राक् तत्र भवाः चातुर्मास्यादिक्रियाः । एतच्च नित्यविषयमपि ; 'सोमं पिबती'त्यविशेषोपादानात् । [4]त्रैवार्षिकाधिकान् प्रत्यश्वानरी न(?)प्रतिसंवत्सरं सोममित्येवमुक्त्वा, तत्तदभावे वैश्वानरी याज्ञवल्क्येनाऽप्युक्ता यतः ।

मनुः[5]

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।

1 स्वल्पीयसि या. वी., २११

2 तस्य नाप्नोति इति या. वी., २११

3 १. १२४

4 ना. को. एवं पठति—प्रत्यब्दं सोमेनेति–प्रत्यब्दशब्देन विष्णुना नित्यस्याप्युपादानात् । तेनैव चाऽभावे 'इष्ट्या वैश्वानर्ये'ति वैश्वानर्या विधानात् । न च काम्यासम्भवे वैश्वानरी प्रतिसंवत्सरी सोममित्येवं उक्त्वा तदभावे वैश्वानरी याज्ञवल्कयेनाप्युक्ता यतः ।

5 ११. २७

क्लृप्तानां[1] पशुसोमानां निष्कृत्यर्थमसम्भवे ॥

'क्लृप्तानां' आवश्यकत्वेन बोधितानाम् । 'निष्कृतिः' तदकरणप्रत्यवायनिर्गमनम् । 'असम्भवे' पूर्वोक्तधनपश्वाद्यसम्भवे ।

तथा[2]

पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन ॥
इन्द्रियाणि यशः[3] स्वर्गमायुः कीर्तिं प्रजाः पशून् ।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाऽल्पधनो यजेत् ॥
प्राजापत्यमदत्वाऽश्वमग्न्याधेयस्य दक्षिणाम् ।
अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥

'ब्राह्मणो विभवे सति अन्यानि पुण्यानि' अत्यन्तधनसाध्यानि दानादीनि । 'अल्पधनै'रित्यल्पत्वं विहितद्वादशशतादिसंख्यापेक्षया । 'अश्वः प्राजापत्यः' स्वभावादेवाऽश्वस्य प्रजापतिदेवताकत्वात् । 'अनाहिताग्निर्भवति' आधानफलं न प्राप्नोतीत्यर्थः ।

1 क्लृप्तानां पशुसोमानां निष्कृतिः स्यादसम्भवे इति गृ. र., १०६ ; ना. को., च

2 ११, ५९

3 धियः काममर्थं गृ. र., १०७

राजधर्मेषु शङ्खलिखितौ

नाऽल्पसम्भारो यजेत नास्तीति संवत्सरवृत्तिरनिष्टं हि राष्ट्रे निपतत्यनिष्टं यज्ञसवनं यजमानं छादयति ।

'अनिष्टं' अनर्थस्यायजनम् । 'यज्ञसवनं'[1] यज्ञः स हि तं 'छादयति' पापेन सम्बध्नाति ।

पुनः शङ्खलिखितौ

ऋत्विक् मन्त्रसमायुक्तः [2]यस्त्वौषधिगुणान्वितः ।
यज्ञेन देवानाप्नोति यावन्नाप्नोति दक्षिणाम् ॥
प्रत्याश्रमं स्थिता वर्णाः कर्मभिर्व्यक्ततां गताः ।
नियमाचारधर्माणां[3] ब्राह्मणस्तत्र देशकः ॥
सम्पूज्यः सोऽर्चनीयश्च गुरुः संस्कारकर्मकृत् ।
अग्नयस्तन्मुखाः [4]सर्वे देवाश्चाऽग्निमुखाः स्मृताः ॥
ऋचो यजूंषि सामानि अथर्वाङ्गिरसानि च ।
तानि विप्रेष्वधीतानि ते यज्ञा आप्तदक्षिणाः ॥

सम्यग्वित्ताद्याप्ता दक्षिणा यैस्ते आप्तदक्षिणाः । अनेन च ब्राह्मणद्वारेण सम्पूर्णदक्षिणादानं प्रतिपाद्यते ।

1 यज्ञवसनं अवैधयज्ञः इति गृ. रत्ना., १०७
2 यस्त्वौषधि गृ. र., १०७
3 ब्राह्मणस्तत्र गृ. र., १०७
4 सर्वे वेदाः इति गृ. रत्ना., १०८

छन्दोगपरिशिष्टे कात्यायनः

नैकयाऽपि विना कार्यमाधानं[1] भार्यया द्विजः ।
अकृतं तद्विजानीयात्सर्वा [2]अन्वारभन्ति यत् ॥
वर्णज्येष्ठेन बह्वीभिः सवर्णाभिश्च यत्नतः[3] ।
कार्यमग्निच्युतेराभिः साध्वीभिर्मन्थनं पृथक् ॥
न[4] तु शूद्रां नियुञ्जीत न द्रोहद्वेष्यकारिणीम् ।
नाऽशासनस्थामन्येन पुंसा च सह सङ्गताम् ॥
ततः शक्ततरा पश्चादासामन्यतमैव या ।
उपेतानां चान्यतमा [5]मन्थेदग्निं निकामतः ॥

अर्था भवन्ति सहाधिकारं प्रतिपद्यन्ते । एतेनैतदुक्तम्—बहुपत्नीकेनैकस्या अपि पत्न्या असन्निधाने आधानं न कर्तव्यमिति । बह्वीषु अनेकवर्णासु सर्वज्येष्ठैवाऽग्निमन्थनं कुर्यात् । सर्वाभिरपि सवर्णाभिः साध्वीभिः पृथङ्मथनं कार्यम् । 'अग्निच्युतेः' यावदरणीभ्यामग्निनिस्सरणम् । 'अशासनस्थां' भर्तुराज्ञोल्लङ्घनकरीम् । 'ततो' मन्थनात् । 'आसां' भार्याणां मध्ये 'या शक्ततरा' सा अग्नेः परिचरणं कुर्यात् । 'शक्ततरा' अग्निशुश्रूषादिकरणक्षमा । 'उपेतानां' समीपस्थितानां मध्ये एका काचिद्यथेच्छातोऽग्निं परिचरेत् ।

1 साधनं गृ. र., १०८ ; भार्यया द्विजैः इति ना. को.
2 सर्वानर्थाः भवन्ति यत् इति ना. को.
3 जन्मतः इति ना. को.
4 नात्र शूद्रां नियुञ्जीत न द्वेषद्रोहकारिणीम् इति गृ. र., १०८; ना. को. च.
5 मन्थेताग्निं इति गृ. रत्ना., १०८

याज्ञवल्क्यः[1]

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद् [2]विधिवद्दारानग्निं चैवाऽविलङ्घयन् ॥

'वृत्तवतीं' यथोक्तस्वधर्माचारवतीम् । 'विधिवत्' यथोक्तविवाहप्रकारेण ।

स्त्रीधर्मानन्तरं मनुः[3]

एवं वृत्तां[4] सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥
भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥

'अन्त्यकर्मणि' दाहकर्मणि ।

छन्दोगपरिशिष्टे कात्यायनः

ज्येष्ठा[5] चेद्बहुभार्यस्य अभिचारेण गच्छति ।
पुनराधानमत्रैक इच्छन्ति न तु गौतमः ॥

1 १. ८९

2 वैवाहिकं स्वयम्, गृ. र., १०९; अग्नींश्चैवाविलम्बयन्, इति या. अप., ११४; या. वी., १५८

3 ५. १६७

4 चतुर्णां वर्णानां, इति गृ. र., १०९

5 ज्येष्ठा चेत् तु सभार्यस्य चाभिचारेण इति गृ. र., १०९; ज्येष्ठा इति ना. को.

दाहयित्वाऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम् ।
पात्रैश्चाऽथाग्निमादध्यात्कृतदारो विलम्बितः[1] ॥

'अभिचारः' व्यभिचारः । 'पूर्वसंस्थितां' पूर्वमृताम् । एतच्चाऽग्निहोत्रग्रहणं स्मार्ताग्नेरप्युपलक्षणार्थम् । अयमाचारः सवर्णज्येष्ठकनिष्ठपत्नीमात्रमरणविषयः । भार्यादिशब्दैरविशेषेण भार्यामात्रोपादानात् । न चाऽग्नये वाप्येते पत्न्यां मृतायाम् [ [2]आद्रि ] यन्त इत्यग्निकर्तौ[3] अविशेषेण ज्येष्ठपत्नीमात्रमरणे अग्नीनाशावाग्नित्वेनत्त्या ज्य[त्व]प्रतिपादनात् । (?)

यानि तु

मृतायामपि[4] भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिना हि[5] तत् कर्म यावज्जीवं समापयेत् ॥
यो दहेदग्निहोत्रेण स्वेन भार्यां कथञ्चन ।
सा स्त्री सम्पद्यते न स्त्री दाही तु न पुमान् भवेत्[6] ॥
द्वितीयायां[7] च भार्यायां दहेद्वैतानिकाग्निभिः ।

1 गोत्रैश्चाथाग्निमादद्यात् कृतदारो विपश्चितः इति गृ. र., १०९
2 आद्रियन्त इति कठश्रुतौ इति गृ. रत्ना., १०९
3 आद्रियन्त इत्यादिश्रुतौ इति ना. को.
4 विष्णुः—मृतायामपि इति या. वी., १५८
5 अपि तत्कर्म,–इति या. अप., अपि तत् कार्यं, इति या. वी.,
6 स स्त्री सम्पद्यते तेन भार्या चास्य पुमान् भवेत् इति या. वी., १५८
7 द्वितीयां चैव भार्यां च इति गृ. र., ११० ; या. वी., १५८

जीवन्त्यां[1] पूर्वभार्यायां सुरापानसमं हि तत् ॥
मृतायां तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत् ।
ब्रह्मोज्झं तं[2] विजानीयात् यश्च कामान् समुत्सृजेत् ॥

बर्हिस्तरणमन्त्रेण [3]पश्चादग्नेरनेकस्येति श्रुतानि वचनानि बर्हिस्तरणमित्यतोऽन्यानि (?) तावत्सन्दिग्धमूलानि असवर्णद्वितीयपत्नीमरण[मात्र]विषयाणि ॥

1 प्रथमायां च इति गृ. र., ११० ; तिष्ठन्त्यां प्रथमायां तु इति या. अप., ना. को. च.

2 ब्रह्मोज्झितं इति या. वी., ११६

3 बर्हिषस्तरणं मन्त्रैर्न पश्चात् चेदपत्नीकः इति गृ. रत्ना., ११० ना. को. च.

## ७

# अथ यजनयाजने

तत्र बौधायनः

अथाग्न्याधेये[1] "यद्देवा देवहेडनं यददीव्यन्नृणमहं बभूव आयुष्टे विश्वतो दधत्" इति पूर्णाहुतिं हुत्वाऽग्निहोत्रमारिप्समानो दशहोतारं कृत्वा, दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं, चातुर्मास्यमारप्स्यमानः पञ्चहोतारं कृत्वा, पशुबन्धे षड्ढोतारं सोमे सप्तहोतारमिति विज्ञायते। कर्मादिष्वेतैर्जुहुयात् पूतो देवलोकं समश्नुत इति हि ब्राह्मणम्।

उक्ताग्न्याधेयादिकर्मारम्भेषु दशहोत्रादयः "चित्तिः स्रुक्" इत्यादयो मन्त्रविशेषाः।

अत्राऽऽपस्तम्बः

पाणिग्रहणादधि गृहमेधिनोः [2]वृत्तङ्कालयोर्भोजनमतृप्तिश्चाऽन्नस्य, पर्वसु चोभयोरुपवासः औपवस्तमेव [3]कालान्तरे भोजने तृप्तिश्चाऽन्नस्य[4] यच्चैतयोः प्रियं स्यात्तदेतस्मि-

1 अथाग्न्याधेयो इति गृ. रत्ना., १११

2 मेधिनोः व्रतं, गृ. र., १११ ना. को., च

3 औपवस्तमेव एककालान्तरे गृ. र., १११

4 अन्नस्य यच्चैतयोः प्रियं स्यात्तस्मिन् अहनि गृ. र., १११

न्नहनि भुञ्जीयातामधश्च शयीयातां मैथुनवर्जम्[1]। श्वोभूते स्थालीपाकस्तस्योपचारः पार्वणेन व्याख्यातः। नित्यं लोक उपदिशति। यत्र क्वचनाऽग्निं उपसमाधास्यन्स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो लेखा लिखित्वाऽद्भिरवोक्ष्याऽ[2]-ग्निमुपसमिन्ध्यादुत्सिच्योदकमुत्तरेण[3] पूर्वेण वाऽन्यदुपदध्याददद्भिरशून्यानि स्युः।

'पाणिग्रहणादधि' पाणिग्रहणोपरि। 'गृहमेधिनोः' दम्पत्योः। 'कालयोः' सायम्प्रातश्च। 'अतृप्तिः' अत्यशननिवृत्तिः। 'अन्नस्ये'ति सुहितार्थयोगे करणे षष्ठी। 'पर्वसु' पौर्णमास्यमावास्ययोः। 'उभयोः' जायापत्योः। उपवासोऽत्राऽनशनं कृत्वोपवस्तव्यमेव। (?)औपरभश्वयग्राम्यारण्यं भुवन्त्यक्ता[4] गार्हपत्याहवनीयवसनं तदेव च भोजनं कालान्तरे, भोजनं त्वग्न्याधानानन्तरमेव सायम्प्रातः कालयोर्वा। किन्त्व 'पराह्णे व्रतोपायनीयमश्नीत' इत्यादि कात्यायनवचनात् 'तृप्तिश्चान्नस्ये'ति आपस्तम्बशाखिनाममावास्याविषयम्। (?) [5]पौर्णमास्यामेवोपवत्स्यन्तौ नातिसुहिताविति कल्पसूत्रवचनात्।

1 वर्जनं च गृ. र., १११

2 अभ्युक्ष्य इति ना. को.

3 उत्तरेण पूर्वेण वा अन्यदुपदध्यात्। नित्यमुपधानानि अद्भिरशून्यानि स्युरिति इति गृ. रत्ना., ११२; अष्टादश पङ्क्तयः ना. कोशे त्रुटिताः

4 द्रव्यं भुक्ता गृ. र., ११२

5 पौर्णमासात् या परस्यान्तौ इति अहितौ इति कल्पसूत्रोक्तेः गृ. र., ११२

यच्चैतयोः प्रियं स्यात् विहितानामाज्यदध्यादीनामन्यतमम्। एतस्मिन्नहनि[1] न तु पूर्वदिने। 'अधः' न पर्यङ्कादौ। 'श्वो भूते' प्रतिपदि। 'उपचारः' फलीकरणादिः। 'पार्वणेन' पर्वभवेन स्थालीपाकेन। 'उपसमिन्ध्यात्' दीपयेत्। 'उत्सिच्योदकं' यस्यां कस्यां दिशि। 'अन्यत्' उदकान्तरम्। उपधानानि च [2]समादीनि। 'नित्यं' यावत्प्रयोगकालम्।

हारीतः

देवपित्रर्थे श्वोभूते अप्यौपवस्तं नैवातिकाममश्नीयात्।

'श्वो भूते' दर्शपूर्णमासाभ्यामन्यत्रापि देवपितृकार्ये श्वोभाविनि सति। 'औपवस्तं' भोजननियमविशेषाः, 'अमाषममांसं बहुसर्पिष्कं व्रतं व्रतयती'[3]त्येतद्वचनविहितम्।

पैठीनसिः

औपवसथ्येऽहनि भक्तं हविष्यमित्युक्तं, न क्रुद्धो[4] नाऽनृतं वदेत्। न वृथा जनैः सह सम्भाषेत। शुचिर्दान्तोऽप्रमत्तो दक्षो जितेन्द्रियो [5]यजेत्। मध्याह्नस्योपरिष्टा-

1 एकस्मिन्नहनि इति गृ. रत्ना., ११२

2 वल्कलादीनि गृ. र., ११२

3 उपैति इति ना. को

4 न क्रुद्ध्येत् गृ. र., ११३ ; न क्रुद्ध्यन् इति ना. को.

5 व्रजेत् ना. को.

द्धविष्यं भुक्त्वा[1] बर्हिरिध्मं सन्नह्याग्निपरिग्रहं कृत्वा न प्रवसेदधः शयीत कामं तु वा यजेत्। पौर्णमास्यां कृत्त-श्मश्रुरलङ्कृतोऽभ्यक्तो गन्धपुष्पादि सेवेत। पितरो ह वै शुचिकामा श्राद्धकल्पेन ब्राह्मणतर्पणं व्याख्यातमिति।

'औपवसथ्येऽहनि' यागदिनात्पूर्वदिने। 'भक्तं' भक्ष्यम्। 'अग्निपरिग्रहः' अत्राग्न्यादिदेवतानां यष्टव्यत्वेन सङ्कल्पः[2]। 'अभ्यक्तो' घृतादिना। 'ब्राह्मणतर्पणं' पौर्णमास्यमावा-स्ययोः। 'श्राद्धकल्पेन' श्राद्धप्रकारेण बहून् भोजयेदित्यर्थः।

बौधायनः

[3]अहतवाससां शुचिरिति तस्माद्यत्किञ्चेज्यादिसंयुक्तं

1 बर्हिरेधांसि सन्निधाप्याग्निपरिग्रहणं कृत्वा न प्रसरेदधः शयीत, कामं वा धयेत्, पौर्णमास्यां क्लृप्तश्मश्रुरलङ्कृतोऽभ्यक्तो गन्धपुष्पाणि सेवेत। पितरो ह वै शुचिकामाः श्राद्धकल्पेन ब्राह्मणतर्पणं व्याख्यातम्। इति गृ. रत्ना., ११३ ; कामं तु वापयेत् इति ना. को.

2 सम्बन्धः इति ना. कोशे

3 अहतवाससां शुचिरिति तस्माद्यत्किञ्चेज्यासंयुक्तं स्यात्। सर्वं तदहतैर्वासोभिः कुर्यात्। प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नीय-जमानावृत्विजश्च परिदधीरन्। एवंक्रमेणोर्ध्वं दीर्घसोमेषु सर्वत्रैव ऋत्विजो यथा समाम्नातं स्यात्। यथैतदभिचरणीयेषु इष्टिपशुसोमेषु लोहितो-ष्णीषा लोहितवाससश्च ऋत्विजः प्रचरेयुः चित्रवाससः चित्रसंख्या वृषा-कपाविति च।

तथा क्षौमवासांसि तेषामलाभे कार्पासिकान्यौर्णानि वा भवन्ति। इति गृ. रत्ना., ११३

इज्याद्युक्तं तदहतवासोधारणवता पुरुषेण कर्तव्यं, अहतवाससा शुचिः इति क्वचित्पाठः तदा व्यक्त एवार्थः।

स्यात्[1] सर्वं तद् अहतैर्वासोभिः कुर्यात्प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन्नेवं प्रक्रमादूर्ध्वं दीर्घसोमेषु। [2]सर्वत्रैव ऋत्विजो यथा समाम्नातं स्यात्। यथैतदभिचरणीयेष्टिपशुमेधेषु लोहितोष्णीषाः लोहितवाससश्चर्त्विजः प्रचरेयुश्चित्रवाससश्चित्रसंख्या वृषाकपाविति।

तथा

क्षौमाणि वासांसि तेषामलाभे कार्पासिकान्यौर्णिकानि भवन्ति।

वाससां मध्ये अहतं वासः श्रेष्ठं, तद् दधता क्रियमाणो यज्ञः शुचिः। 'उपवातानि' शुष्काणि । 'अक्लिष्टानि' अच्छिद्राणि। 'दीर्घसोमेषु' दीर्घकालव्यापिषु सोमेषु। ऋत्विजस्तु सर्वाणि कर्माणि यथाविहितम् । यादृशं विहितं तादृशं वासः। तदेव दर्शयति–[3]'तथैत'दित्यादिना। 'अभिचरणीयं' अभिचारसाधनं श्येनादि । 'चित्रवाससः' विचित्रवस्त्राः। 'वृषाकपौ' प्रक्रम्यमाने। 'क्षौमाणी'त्यादिना पत्नीयजमानयोरेव प्रकृतत्वात्। आधने वासोन्तरविधानमेतत्।

वाससां मध्ये अहतं वासः श्रेष्ठं तद्धता क्रियमाणो यज्ञः शुचिः इति लक्ष्मीधरः गृ. र., ११४

1 यत्किञ्चित् इज्यासंयुक्तं स्यात् इति ना. कोशे

2 दीर्घलोमसु, इति ना. कोशे

3 यथैवमित्यादि गृ. र., ११४

यमः

कृष्णाजिनं[1] ब्राह्मणस्य वैयाघ्रं क्षत्रियस्य तु ।
बस्ताजिनं [2]तु वैश्यस्य शाणं क्षौमं तु सर्वतः ॥

बौधायनः[3]

उत्तरत उपचारो विहारः । तथाऽपवर्गः । विपरीतं पित्र्येषु । पदोपहतं प्रक्षालयेत् । अङ्गमुपस्पृश्य सिचं वा अपः स्पृशेत् । एवं छेदनभेदनखननदहननिरसनपित्र्यराक्षसनैर्ऋतरौद्राभिचारिकेष्वप [4]उपस्पृशेदिति विज्ञायते ।

न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरिहरेत् । अभ्यन्तराणि यज्ञाङ्गानि । बाह्या ऋत्विजः । पत्नीयजमानौ ऋत्विग्भ्योऽभ्यन्तरतरौ । यज्ञाङ्गेभ्य आज्यमाज्याद्धवींषि, हविर्भ्यः पशुः, पशोः सोमः, सोमादग्नयः ।

यथा कर्मर्त्विजो न विहारादभिपर्यावर्तेरन् । प्राङ्मुखो[5] दक्षिणमंसमभिपर्यावर्तते । [6]प्रत्यङ्मुखः सव्यम् । अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् । अचात्वाल आहवनीयो-

1 यज्ञकाले तु वर्णानामाच्छादनविधिं शृणु । कृष्णाजिनन्तु इति गृ. र., ११४

2 च गृ. र., ११४

3 १. १५. १

4 शिकं वा उपस्पृशेत् गृ. र., ११५

5 प्रागगच्छेद् गृ. र., ११५

6 प्रत्यङ्मुखः सव्यमथान्तरेण चात्वालोत्करौ पश्यति । यज्ञमहातीर्थमथाचात्वाले आहवनीयोतकरौ गृ. र., ११५; यज्ञतीर्थं साव्यमन्तरेण आहवनीयोत्करौ इति ना. को.

त्करौ। [1]ततः कर्तारो यजमानः पत्नी च प्रपद्येरन्। विसंस्थिते। संस्थिते च सञ्चरोऽनूत्करदेशात्। नाऽप्रोक्षितमप्रपन्नं क्लिन्नं काष्ठं समिधं वाग्नावादध्यात्। अग्रेणाऽऽहवनीयं ब्रह्मयजमानौ प्रपद्येते। जघनेनाऽऽहवनीयमित्येके। दक्षिणेनाऽऽहवनीयं ब्रह्मायतनं, अपरेण यजमानस्य। उत्तरां श्रोणिमुत्तरेण होतुः। उत्कर आग्नीध्रस्य। जघनेन गार्हपत्यं पत्न्याः। तेषु काले काल एव दर्भसंस्तरणम्। एकैकस्य चोदककमण्डलुरुपात्तः स्यादाचमनार्थे। [2]व्रतोपेतो दीक्षितः स्यात्। न परापवादं वदेन्न क्रुध्येन्न रोदेत् मूत्रपुरीषे नाऽभिवीक्षेत। अमेध्यं दृष्ट्वा जपति—"अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासी"रिति।

विह्रियत इति 'विहारः' विहृतोऽग्निः। स 'उत्तरत उपचारः' उत्तरस्मिन् भागे उपचारः प्रवेशोपक्रमो यस्य स तथोक्तः। 'अपवर्गः' कर्मसमाप्तौ निर्गमनम्। सोऽपि तथा उत्तरतः। 'पित्र्येषु' पिण्डपितृयज्ञादिषु। एतद्द्वयमपि विपरीतं विरहितं एतस्मिन् विहारस्य दक्षिणभाग इत्यर्थः। 'पदोपहतं' पादेन स्पृष्टम्। यज्ञाङ्गं स्रुवादि 'अङ्गं उपस्पृश्य'

1 ततः कर्तारो यजमानः पत्नी च प्रतिपद्येरन्। विसंस्थिते च सञ्चरोऽनूत्करदेशात् नाप्रोक्षितमप्रपन्नं क्लिन्नं काष्ठं समिधं चाग्नावादध्यात्। अग्रेणाहवनीयं ब्रह्मयजमानौ प्रतिपद्येते। जघनेनाहवनीयमित्येके दक्षिणेनाहवनीयं ब्रह्मायतनमपरेण यजमानस्य इति गृ. र., ११५

2 अत्र व्रतोपेतो, दीक्षितः स्यात् न परं पापं वदेत् न क्रुध्येन्नाचामेत् न रोदेत् मूत्रपुरीषे नाभिवीक्षेत्। अमेध्यं दृष्ट्वा जपति—अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षायां मा मा हिंसीरिति इति गृ. रत्ना., ११५

स्वाङ्गं अङ्गमत्र नाभेरूर्द्ध्वं, "ऊर्द्ध्वं वै पुरुषस्य नाभेर्मेध्यमवाचीनममेध्य"मिति तैत्तिरीयश्रुतेः। [1]'सिक्' वस्त्रप्रान्तः। उदकस्पर्शनं कार्यम्। 'मन्त्रवता' मन्त्रवद्यत्कर्म यज्ञे क्रियतेऽत्र यत्साधनं स्रुवादि, तेनाऽऽत्मानमभिपरिहरेत्। नात्मशरीरादन्यत्र तस्मिन् काले तद्धारयेत्।

अत्रैव हेतुः—'आभ्यन्तराणि यज्ञाङ्गानि बाह्याः' अनभ्यन्तरङ्गाः। 'यज्ञाङ्गेभ्यः' स्रुवादिभ्यः। (?)'आज्यं हवींषि' पुरोडाशरूपाणि। 'यथाकर्मे'ति। यत्र यत्र कर्मणि य ऋत्विक् स तत्कर्म परिसमाप्तिकालं यस्मात्तस्माद्विहारदेशात् स्वेच्छया आवश्यककार्यार्थं विनाऽन्यत्र न गच्छेदित्यर्थः। प्राङ्मुखः' यदा पर्यावर्तेत तदा। 'दक्षिणं' अङ्गमभिदक्षिणमित्यर्थः। प्रत्यङ्मुखः सन् यजमानो नाऽभिपर्यावर्तेत। तदा सव्यमङ्गमाभि प्रदक्षिणमित्यर्थः।

'अन्तरेणे'ति चात्वालोत्करमध्ये। 'यज्ञतीर्थं' यज्ञार्थमृत्विगादीनां प्रवेशं आहुः। 'अचात्वाले' चात्वालरहिते दर्शपूर्णमासादौ। 'आहवनीयोत्करौ' अन्तरेण यज्ञतीर्थमित्यनुषङ्गः।

'ततः' तेन मार्गेण। 'कर्तारः' ऋत्विजः। 'प्रतिपद्येरन्' प्रविशेयुः। 'संस्थिते' समाप्ते यज्ञे। 'सञ्चारः' सञ्चरणं नोत्करदेशाद्बहिरिति शेषः। 'अप्रपन्नं' अप्रयत्नप्राप्तम्। 'जघनेन' पश्चात्। 'तमपरेण' तस्माद्ब्रह्मणः पश्चिमेन 'उत्तरां श्रोणिं' वेदेरिति शेषः। 'उत्करः' आग्नीध्रस्य आयतनं

1. शिको वस्त्रप्रान्तः इति गृ. र., ११६

इत्यनुषङ्गः। 'जघनेन गार्हपत्यं पत्न्याः' गार्हपत्यात्पश्चिमे प्रदेशे। अत्राप्यायतनमित्यनुषङ्गः। 'तेषु' आयतनेषु कालेषु 'दीक्षितः' दीक्षावान् 'व्रतोपेतो' भवेत्। तान्येवाह— 'परापवादं' विरुद्धं परस्य कृते न ब्रूयादित्यर्थः। 'अमेध्यं' मूत्रपुरीषे। "अबद्ध" मित्यादि "मा मा हासीः" इत्यन्तो मन्त्रः।

हारीतः

देवतोत्तारणार्थं[1] संस्कारेण संस्कृते देवानां समानतां समानलोकतां सायुज्यतां गच्छति। तेन देवसम्मितमेवाऽऽहिताग्निं प्राहुः। स ऋग्यजुःसामसु लोकेषु ज्योतिष्षु देवेषु ब्रह्मणि वा हितो भवति। स ह्येतां सायम्प्रातरहरहः प्रीणाति। तं ह्येते सायम्प्रातरहरहः पावयन्ति। तस्याऽहरहरग्निमुखाः सायम्प्रातर्हव्यायाऽवतिष्ठन्ते। तस्माद्धविर्विदामप्यनाहिताग्नीनामाहिताग्निः पुण्यतमो भवति। तस्मान्नोपविष्टाग्निहोत्री स्यात्।

[2]यथा वै ब्राह्मणानाहूय नियुज्य तस्याऽन्नं नाश्नीयादेवं

1 दैवेन उत्तरेणाऽऽन्नसंस्कारेण संस्कृतो देवानां समानलोकतां सायुज्यतां गच्छति, तेन देवसम्मितमेव साग्निं प्राहुः। स ऋग्यजुःसामलोकेषु ज्योतिष्षु विवेश ब्रह्मणि वाहितो भवति, स ह्येतां सायम्प्रातरहरहः आपयति। तस्याहरहरग्निः यथा सायं प्रातर्द्रव्यायावतिष्ठन्ते तस्माद्धविर्विदामप्यनाहिताग्निः अनाहिताग्नीनामाहिताग्निः पुण्यतमो भवति। तस्मान्नोपरिष्टादग्निहोत्री स्यात् इति गृ. रत्ना., ११७

2 यथा वै ब्राह्मणानाहूय नियुज्य तस्यान्नं नाश्नीयात् एवं यत्कृतेऽश्नाति तस्मादभिहितमश्नीयात्, नानृतं ब्रूयात् नाश्लीलं नानियतो नाशुचिः

यदहुतेऽश्नाति तस्मादभिजितमश्नीयात्। नाऽनृतं ब्रूयान्नाऽश्लीलं नाऽनियतो नाऽशुचिः स्यात् नाऽन्यदारान् गच्छेत् न[1] तैस्तिष्ठेन्नाविष्टोऽपः पिबेन्नाऽशुचिः क्लिन्नपूतिभिर्वा दारुभिरग्निमिन्धीत नाग्निवेलयोः प्रवसेत्। पर्वसु चापत्सु प्रोषितो वेलायां वाग्यतः। प्रतिदिनमग्निहोत्रं मनसा ध्यात्वाऽवस्थाय मन्त्रतो हुतं ज्ञात्वा व्रतं ये दम्पत्योपस्थायामभिभाषेत (?) निर्मुक्ते वाचं यच्छेदोदयादा होमादुभयतः। स्वयमग्निहोत्रं जुहुयादन्यत्रोपासीत। सायमप्युपस्थाय परीत्य नमस्कृत्य प्रसरेत् तथा। प्रातर्नाऽदर्भोऽग्निं परिध्वरेत[2] नाऽयज्ञियैर्जुहुयाद्धुतशेषं ब्राह्मणाय दद्यात्।

रूढो[3] युवा न न बालिशो वा प्रदोषेऽग्निं जुहुयात्। 'देवसम्मितं' देवतुल्यम्। उपविष्टाग्निहोत्री उपविष्टं होमवधशून्यं (?)अग्निहोत्रं यस्य स तथा। 'आहूय' नियुज्य। श्राद्धभोजनार्थमुपविश्य तस्य सम्बन्धि यत्तदात्मनाऽश्नी-

स्यात् नान्यदारं गच्छेन्न तैस्तिष्ठेन्नाविष्टो अपः पिबेत् नाशुचिक्लिन्नपूतिभिः दारुभिरग्निमिन्धीत नाग्निवेलयोः प्रसरेत्। पर्वसु चापत्सु अप्रोषितोः प्रयच्छेत् आहोमादुभयतः स्वयमग्निहोत्रं हुतशेषादन्यत्र उपासीत सायमत्युपस्थायापवीत्य नमस्कृत्य प्रसरेत्। तथा प्रातर्नादर्भोऽग्निम् परिचरेत इति गृ. र., ११८

1 नेरिणे तिष्ठेत वारिस्थः अपः पिबेत् इति ना. को.

2 परिचरेत् नायज्ञैर्जुहुयात् गृ. र., ११८, ना. को., च

3 कूटो बालिशो वाग्रदोषेऽग्निं जुहुयात्। देवसम्मितो देवतुल्यः, उपरिष्टाग्निहोत्री उपरिष्टं होमशून्यमग्निहोत्रं उपरिष्टाग्निहोत्रं तद्वान् तथा इति गृ. र., ११८

यात्। एवमेवासौ यो हुतं अश्नाति। 'अभिजितं' हुतपूर्वकं, 'अश्लीलं' असभ्यं[1] न ब्रूयादित्यनुषङ्गः। 'अनियतः' असंयतेन्द्रियः। नाविष्टः एकाधारः। 'अग्निवेला' होमदानकालः। पर्वसु च न प्रविशेदित्यनुषङ्गः। यदि च प्रवसेत् विधानमकृत्वा आपत्काले कार्य्यतारतम्येन प्रवसेत्। तदा प्रतिदिनमग्नीन् मनसा ध्यात्वा उपस्थानं कृत्वा मन्त्रतो हुतं ज्ञात्वा 'व्रतयेत्' भुञ्जीत। 'एत्य' प्रवासादागत्य उपस्थाय अभिभाषेत। अग्न्युपस्थानमकृत्वा न किञ्चिद्ब्रूयादित्यर्थः[2]। 'निम्रुक्ते' अस्तमिते। 'आ उदयात्' आसूर्योदयात्। 'आहोमात्' सायंहोमसमाप्तिपर्यन्तम्। अयश्चोदयपर्य्यन्तं वाङ्नियमः असमशिष्टत्वात् फलविशेषार्थिनो बोद्धव्यः। 'उभयतः' सायम्प्रातश्च। 'स्वयं' आत्मनैव। 'अन्यत्रे'ति। अन्यस्मिन् अग्निहोत्रहोमकारिणि। 'स्वयमग्निमुपासीत' ध्यायन्समीपे तिष्ठेदित्यर्थः। नित्यङ्कर्तव्यान्तरमाह—अपहृत्य[3] प्रदक्षिणमकृत्वा प्रातरप्युपस्थानादित्रयं कुर्यात्। 'अदर्भं'[4] दर्भस्य दक्षिणहस्तसम्बन्धं विना। 'अयज्ञियैः' माषादिभिः।

पुनर्हारीतः

माषमसूरमधुमांसपरान्नमैथुनानि व्रत्येऽहनि वर्जयेत्।

1 'अश्लीलं' असत्यम् इति ना. को.

2 न किञ्चित् जुहुयात् इति ना. को.

3 अपवीत्य इति गृ. र., ११९

4 अदर्भो दर्भहस्तसम्बन्धं विना इति. गृ. र., ११९

व्रता(?)येनाकाले[1] वाचं विसृजेत्। नवसस्यमश्नीयाद्दीर्घसत्रे ऋतौ जायामुपेयात्। न मध्वश्नीयात्पय आदिहविःशेषं [2]वा दीक्षितो दीक्षितनियमान् वा यजमाननियमानिष्ट्वा वेष्टिनियमान्।

दीक्षितः क्षौमवासा जटी मेखली यज्ञोपवीती उष्णीषी कृष्णाजिन आसीत। वाग्विसर्गाश्रुविदलनावगाहनमेहनविवृतशायनदर्शनविस्मितदन्तधावननिष्क्रमणानि च दीक्षितो विवर्जयेत्। विजृम्भमाणो [3]हसित्वा पाणिना पिदध्यात्। मूत्रपुरीषनिष्ठीवनं चातपे न कुर्यात् इति दीक्षितनियमाः।

क्रोधाहङ्कारभयविषादकार्पण्यलोभान् यजमानो वर्जयेत्। आहुतिभिर्देवान् यजेत्। अन्नाद्येन दक्षिणाभिश्च ब्राह्मणानिति यजमाननियमाः।

स एष[4] योनिनानासङ्गविष्ठा(वि)वर्जयेत्(?)। जलाग्निवायुसोमसूर्याणामशुचिभिरर्थैर्नोपचरेदितीष्टिनियमाः।

न पशुं संज्ञप्यमानमीक्षेत, न स्पृशेद्यूपशूलानिति

1 व्रतोपेतो नाकाले वाचं विसृजेत्। अग्निमुपेत्य वसेन्न पर्यावर्तेत। विद्रुद्रुतकामवद्भ्यां उपस्थायान्यत्र पुनः मनो व्रतपतीभ्यां प्रागस्तमयात् प्रथमं सूर्योदयाद्वेष्ट्वा नवसस्यं गृ. र., ११९ ना. कोशे च.

2 दीक्षितो नियमान् धारयेत्। यदि यजमानो यजमाननियमान् इष्टी चेष्टिनियमान् गृ. र., ११९

3 हसन् वा इति गृ. र., १२०; ना. को, च

4 स एष लीलासङ्करानिष्ठी विवर्जयेत् गृ. र., २०; स एव इति ना. को. च

नियतं सङ्कीर्णप्रतितो[1] यज्ञः। स्रवत्यनुयज्ञं यजमान आर्तीरुपैति सर्वयोनिष्वागच्छति आयुषो वावरुध्यते। तस्मात् कुलश्रुतशीलवृत्तसम्पन्नानृत्विजो वृणुयात्। तस्य सर्वकामदुहं यज्ञं दक्षिणाभिः कुर्वन्ति। अनुयज्ञं यजमानः अनुयजमानं प्रजाः पशूनां प्रतिष्ठामाहरतीत्यन्वाहार्य्यस्तस्मादहरहः तं ब्राह्मणेभ्यो दद्यादोषधिपशुसोमैर्हुतं यज्ञं दक्षिणाभिः सम्पादयन्ति। दक्षिणाहत एव हतः। तस्य सर्वकामदुहं यज्ञं दक्षिणाभिः सम्पादयन्तीति दक्षिणां ददाति चन्द्रमसस्तेन लोकं यजति। यद्धोत्रेऽग्निलोकं यदुद्गात्रे पर्जन्यलोकं तेन यद्धोत्राशंसिभ्यः दिशस्तेन यद्वसु अनुग्रहकर्तृभ्य इदं तेन लोकं यच्छुश्रूषवे अनूचानाय स्वर्गं तेन लोकं [2]यावत् ददाति क्षेत्रमार्त्तीश्च तेन यजति। यत्पापीयसे ददाति, तदनया दक्षिणया निष्क्रीणामीति।

चन्द्रमा वै ब्रह्मा तद्यावच्चन्द्रमा न क्षीयते तावदस्येष्टं दत्तमक्षय्यं भवति। होतर्वाचं ते ददामि तामनया दक्षिणया निष्क्रीणामि चेत्यग्निर्होता तद्यावत् अग्निर्न क्षीयते, तावदस्येष्टं दत्तमक्षयं भवति। उद्गातः श्रोत्रं ते ददामि तदनया दक्षिणया निष्क्रीणामि पर्जन्यो वै श्रोत्रं पर्जन्य उद्गाता तद्यावत्पर्जन्यो न क्षीयते, तावदस्येष्टं दत्तमक्षय्यं भवति। अध्वर्यो चक्षुस्ते ददामि तदनया दक्षिणया

1 प्रणीतो गृ. र., २०; ना. को. च

2 यावद्ददाति दत्तमार्तीश्च तेन यजति गृ. र., १२०

निष्क्रीणामि इत्यग्निरसौ[1] वा आदित्यश्चक्षुरसावादित्योऽध्वर्युस्तद्यावदसावादित्यो न क्षीयते, तावदस्येष्टं दत्तमक्षय्यं भवति। होत्राशंसिनः अङ्गानि वो ददाम्यनया[2] दक्षिणया निष्क्रीणामीति दिशो वै होत्राशंसिनो दिशोऽङ्गानि तद्यावद् दिशो न क्षीयते तावदस्येष्टं दत्तमक्षय्यं भवति। अथाप्यत्रोदाहरन्ति—[3]

ब्रह्मयज्ञो[4] ब्राह्मणेष्वन्वतिष्ठत्
तस्मात्तस्य ब्राह्मणाः पावितारः।
तस्मात्तेषां यज्ञभागार्हकाणां
यज्ञे विप्राणां दक्षिणा साधु देया॥
त्रयो [5]यज्ञस्तृतीयस्तस्य प्राणाः
प्राणैर्यज्ञस्त्वायते[6](?) कर्मयोगात्।
तस्मादृत्विग्भ्यो भूयसीं दक्षिणां वै
दद्यात्प्राज्ञो यज्ञभूयस्त्वमिच्छन्॥
यजुर्यज्ञं व्यभजद्भागशो वै
मध्यद्यत्तं[7] (?) न तु ते कर्मयोगात्।

1 अनुसारात् इति ना. को.
2 ददामि तान्यनया इति ना. को.
3 अत्राप्युदाहरन्ति इति ना. को.
4 ब्रह्मयज्ञो ब्राह्मणेष्वतिष्ठत् तस्मात् तस्य ब्राह्मणा याचितारः गृ. र., १२१
5 ऋत्विजः गृ. र., १२१ ; ना. कोशे च.
6 त्रायते गृ. र., १२१; मध्याद्यन्तं तनुते कर्मयोगात् ना. को.
7 यजुश्चैतं महिमानं विदित्वा गृ. र., १२१ यजुश्चैवं महिमानं विदित्वा इति ना. को.

यजुष्वेते[1] महिमानं विदित्वा
यजुर्विद्भ्यः कर्त्तृधनं च देयम् ॥
वर्णैर्मात्राभिरक्षरैश्च[2] स्वरैश्च
पादैः पादैरर्धर्चैर्विरामैः ।
होत्रैः स्तोत्रैः कालकर्मप्रयोगैः
ये वोढारो भाग्यदानं तु तेषाम् ॥
धर्मो यज्ञो धर्मतो धर्मविद्भिः
धर्मो भूतः क्रियते कर्महेतोः[3] ।
धर्मो [4]लोकांस्त्रायते तत्र विप्राः
तस्मात् तद्विद्भ्यो धर्मधनं प्रदेयम् ॥
सूर्य्यस्स्वर्भानुस्तमसा नाशयेद्यत्
ततो लोका नाविरासन्न यज्ञः[5] ।
न सत्रिरत्वाय शान्नमः
तस्माद्यज्ञश्चत्रिधनम्प्रचक्षुः[6] (?) ॥
सुहृन्मित्रं बान्धवाः कारिणश्च
नानायोगैः सम्भवन्ते मखं वै ।

1 मेध्यान्तं तन्वते कर्मयोगात् यजुर्विद्भ्यः कर्तृधनं प्रदेयम् गृ. र., १२२

2 मात्रादिभिरक्षरैश्च पादैः अर्धर्चैर्विरामैर्होत्रैः कालकर्मप्रयोगैः । ये वोढारो भागदानं तु तेषां इति गृ. रत्ना., १२२ ; वर्णैः मन्त्रिभिः अक्षरैः सूत्रैः, स्वरैश्च पादैः इति ना. को.

3 धर्महेतोः इति ना. को.

4 लोकांस्त्रायते तत्र विप्राः तस्मात् तद्विद्भ्यः गृ. र., १२२ ; तस्मात् तेभ्यो इति ना. को.

5 सूर्यसूत्रान्तसमाम यद्वै ततो लोकानां विवास यज्ञः गृ. र., १२२

6 तमत्रिरनुपश्यन्तमसामयः तस्माद्यज्ञे क्षेत्रिधनं चक्षुः गृ. र., १२२

ततो[1] यज्ञस्त्रायते नासहाय-
स्तस्माद्विद्वान् [2]पूजयेन्नान्यथावत् ॥
न्यायात् द्रव्याहृत्विग्भिश्चैव शुद्धै
रत्नत्यागात् दक्षिणाभिश्च यज्ञः ।
इष्टान् लोकान् सर्वकामोपपन्ना-
न्नयेद्विराजं ब्रह्मलोकं प्रतिष्ठाम् ॥
विष्णुं यज्ञं[3] प्रवदन्तीह [4]तज्ज्ञा
यज्ञस्याग्निमतिथिश्चैव[5] वदन्ति ।
तस्माद्यज्ञे विविधैर्द्रव्ययोगै-
स्त्रयो भूत्वा तर्पयेद्वै हुताशम् ॥
अग्निं[6] रुद्रं उत कालं वदन्ति
यस्येमे मोहानुभूताः प्रजा वै ।
तर्पयित्वैवैनममृता[7] भवन्ति
नैनं ये विदुस्तेऽन्नमिवास्य क्लृप्ताः ॥
अग्निः पिता [8]ह्युत माताऽत्र न भ्राता
अग्निर्गोप्ता रक्षिता दुष्कृताच्च ।

1 तस्मात् गृ. र., १२२ ; यतो यज्ञः इति ना. को.
2 पूजयेत् तान् यथावत् गृ. र., १२२ ; ना. को., च
3 'विष्णुर्यज्ञं' इति उद. मा.
4 तज्ज्ञाः इति गृ. रत्ना., १२२ 'तस्या' इति उदयपुरमातृकायाम्
5 अतिथिं वै गृ. र., १२२ ना. को. च.
6 अग्निं रुद्रमुत कालं वदन्ति यस्य सहानुभूताः प्रजा वै गृ. र., १२३;
यस्येह सहानुभूताः प्रजावै इति ना. को.
7 तर्पयित्वैवं इति ना. को.
8 ह्युत माताऽथ भ्राता गृ. र., १२३; ह्यन्यत्र माताऽत्र भ्राता इति ना. को.

अग्निर्दाता पुत्रपत्नीश्रियां हि
सर्वस्मात् [1]दुर्गात्तारणं चाग्निमाहुः ॥
देवा देवत्वमग्निनैवाप्नुवन्तः
सर्वान् [2]लोकानमृतत्वं तथैव ।
तपस्तप्त्वैवाग्निनैवाग्निलोकान्[3]
जित्वा ऋषयो ब्रह्मभूयाय गच्छन् ॥
तस्माद्धीरः[4] शुश्रुवान् न्यायवृत्तिः
चिन्वानोऽग्नीन् विधिमास्थाय भक्त्या ।
क्षान्तो दान्तो निर्मलो वीतशोको
गच्छेल्लोकानृषिदेवानुयातान्[5] ॥
सुखसौम्यान्[6] सर्वकालोपपन्नान्
स्वस्थो गच्छेत्खेचरैर्वन्द्यमानः ।
ऋद्धः श्रीमान् [7]सुसुगन्धिर्धृतात्मा
मृत्योर्मुक्तो ब्रह्मलोकं प्रयाति ॥ इति

'व्रत्ये' पौर्णमास्यादौ । 'व्रतोपेतः' कृतवाङ्नियमः । 'अकाले' हविःकृतात् कालादेरर्वाक्[8] । 'अग्निमुपेत्य' अग्नि-

1 दुःखात् गृ. र., १२३

2 कामान् गृ. र., १२३

3 तपस्तप्त्वाग्निनैवाधिकान् गृ. र., १२३ ; तपस्तत्वाग्निनैवाधिलोकान् इति ना. को.

4 तस्माद्धीरः शुश्रुवान् पापवृत्तिं चिन्वानोऽग्नीन् गृ. र., १२३

5 ऋषिदेवार्थमाप्तान् गृ. र., १२३

6 शश्वत् सौम्यान् इति गृ. रत्ना., १२३

7 श्रद्धः श्रीमान् सत्सुगन्धिर्मृतात्मा गृ. र., १२४; स्वस्वगन्धिः धृतात्मा इति ना. को.

8 अकालेऽविकृतान् दानादेरर्वाक् इति ना. को.

समीपं गत्वा । 'न पर्यावर्त्तेत' पर्यावर्त्तनमग्निपराङ्मुखत्वम् ।

'बिभ्रद्व्रतकामवद्भ्यां' इत्यादि । यदा वासो बिभृयात्तदा "त्वमग्ने व्रतपा असि", "तुभ्यन्ता अङ्गिरस्तम" इत्येताभ्यां व्रतकामशब्दयुक्ताभ्यामुपस्थायाऽन्यत्र वसेत् ।

पुनरित्यादेरयमर्थः—भयेनाऽन्यत्र वसेत् । "मनो ज्योतिर्जुषतामि"ति, "त्वमग्ने व्रतपा असी"ति, द्वाभ्यां मन्त्राभ्यामस्तमयात्प्राक् प्रथमोदिते च सूर्य्ये उपस्थानं कृत्वा दर्शादियागं कुर्यात् ।

इष्ट्वा नवसस्येनैव नवसस्यमश्नीयान्नवान्नमश्नीयादित्यर्थः । 'दीर्घसत्रेषु' शतरात्रादिषु । 'पय आदिहविःशेषं वे'ति । पयोदध्यादियागशेषभूतं वाऽश्नीयादित्यनुषङ्गः ।

यजमानो दीक्षितश्चाऽदीक्षितश्च । वाग्विसर्गः "दीक्षित वाचं विसृजस्वे"ति प्रश्नोत्तरकालम् । 'उदितेषु' नक्षत्रेषु । 'विवृतशयनं' पत्नीशालातो बहिःशयनम् । 'विस्मितं' विस्मयः । 'पाणिना पिदध्यात्' आस्यमिति[1] शेषः ।

छन्दोगपरिशिष्टे कात्यायनः

निक्षिप्याग्निं स्वदारेषु परिकल्प्यार्त्विजं तथा ।
प्रवसन्[2] कार्य्यवान् विप्रो [3]मृषैव न चिरं क्वचित् ॥

1 पिदध्यादाज्यमिति ना. को.

2 प्रवसेत् गृ. र., १२५; ना. को. च

3 वृथैव गृ. र., १२५

मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्वं यथाकालमुपाचरेत्[1] ॥

'निक्षिप्ये'ति परिचरणार्थं समर्प्य । [ 'विकल्प्य' ] व्यवस्थाप्य । 'परिकल्प्यर्त्त्विजं' अग्निहोत्रादिकारिणं क्षीरहोमादिकार्यार्थं अवश्यभर्तव्यभरणयोग्यधनार्थं क्षेमार्थं च । 'मृषा' विना कार्यम्। कार्यार्थमपि 'न चिरं' तत्तत्कल्पसूत्रोक्तप्रवासकालमित्यर्थः ।

वसिष्ठः[2]

नाऽग्निं चित्वा [3]कृष्णवर्णां रामामुपेयात् । कृष्णवर्णा या रामा रमणायैव न धर्मायेति ।

'अग्निं चित्वा' अग्निचयनवन्तं यागं कृत्वा । 'कृष्णवर्णीयां' शूद्रजातीयां स्वविवाहितामपि [4]न गच्छेदित्यर्थः ।

हारीतः

तामसेन तु द्रव्येण ऋत्विग्भिस्तामसैस्तथा ।
तामसं भावमास्थाय तामसो यज्ञ उच्यते ॥
तामसेन[5] तु यज्ञेन दानेन तपसा तथा ।

1 प्राप्तकालं समाचरेत् इति ना. को.

2 १८. १७

3 वै रामामुपेयात् । कृष्णवर्णा वै सा रमणायैव न धर्माय इति गृ. र., १२५ ; ना. को. च

4 ऋतावपि न इति गृ. र., १२५

5 इत आरभ्य श्लोकद्वयं गृ. रत्नाकरे न दृश्यते । तस्मिन् स्थाने 'निरये जन्म वेदार्धं ऋद्धि कृत्वा च तामसीम्' इत्यर्धमेकं दृश्यते गृ.र., १२५; ना.को.च

निरये जन्म चेदेवं ऋद्धिं विद्यात्तु तामसीम् ॥
राजसेन तु द्रव्येण ऋत्विग्भी राजसैस्तथा ।
राजसं भावमास्थाय राजसो यज्ञ उच्यते ॥
राजसेन तु यज्ञेन दानेन तपसा तथा ।
निरयस्वर्गयोर्जन्म क्रूरं राज्यं श्रिया युतम्[1] ॥
सात्विकेन तु द्रव्येण ऋत्विग्भिः सात्विकैस्तथा ।
सात्विकं भावमास्थाय सात्विको यज्ञ उच्यते ॥
सात्विकेन तु दानेन यज्ञेन तपसा तथा ।
देवलोके ध्रुवं[2] वासो देवसायुज्यमेव च ॥

'तामसं' कृष्णम् ।

पार्श्विकद्यूतचौर्यादिप्रतिरूपकसाहसैः[3] ।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥

इति नारदोक्तम् । ऋत्विजां च तामसभावदोषेण यज्ञे प्रचरणात् दानतपसोरपि तामसत्वमनन्तरोक्तप्रकारमेव बोद्धव्यम् । 'तामसी ऋद्धिः' म्लेच्छाधिपत्यादिरूपा । 'राजसं द्रव्यं' शबलम् । तच्च

कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः ।
कृतोपकारादाप्तं च राजसं समुदाहृतम्[4] ॥

1 श्लोको ना. कोशे न दृश्यते

2 चिरं गृ. र., १२६

3 उत्कोचद्यूतदौत्यार्तप्रतिरूपकसाहसैः गृ. र., १२६; अ. ४, ४८

4 अ. ४, ४६

इति नारदोक्तम् । राज्यस्य क्रूरत्वमहिंस्यहिंसादिना । 'सात्विकं द्रव्यं' शुद्धम्[1] । तच्च

श्रुतशौर्यतपःकन्याशिष्ययाज्यानुपागतम्[2] ।
धनं सप्तविधं शुद्धं ज्ञेयमित्यादि सात्विकम्[3] ॥

इति नारदोक्तम् ।

मनुः[4]

न यज्ञार्थं धनं शूद्राद्विजो भिक्षेत धर्मवित्[5] ।
यजनार्थो[6] हि भिक्षित्वा चाण्डालः प्रेत्य जायते ॥
यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ।
स याति भासतां विप्रः काकतां वा समाप्नुयात्[7] ॥

यज्ञकरणार्थं द्रव्यं शूद्रात्स्वीकृत्य न तेन यज्ञं कुर्यादित्यर्थः । ब्राह्मणादिभ्योऽपि यज्ञार्थमार्जितं धनं सर्वमेव देयम् । अदाने तु भासः काको वा भवेत् । 'भासः' गोष्ठकुक्कुटः । 'समाः' वर्षाणि ।

1 शुल्कं, गृ. र., १२६

2 ४, ४६, 'याज्यान्वयागतं' इति मुद्रित नारदीये ।

3 श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम् ।
धनं सप्तविधं शुक्लमुद्योगस्तस्य तद्विधः ॥ गृ. र., १२६

4 ११, २४

5 'कर्हिचित्' इति ना को. पठति

6 यजमानो हि गृ. र., १२६; ना. को. च; शूद्राद्विप्रो भिक्षेत या. वी., २१३

7 शतं समाः गृ. र., १२६ ; या. वी., २१३

हारीतः

असद्द्रव्यप्रणीतो यज्ञः प्रस्रवति अनृत्विक्प्रणीतः [1]च्यवतेऽविद्वत्प्रणीतोऽभावुकः[2]। सङ्कीर्णप्रणीतोऽसिद्धार्थोऽकृत्स्नोऽज्योतिर्विधिहीनो यातयामः। [3]छद्मोऽध्रुवः सोपधोऽल्पफलो ( न च ? ) उपदिशति अदक्षिणोऽनृत इत्येते यज्ञोपसर्गाः, यैरुपसृष्टो यज्ञोऽभावुको भवति ।

'असद्द्रव्यं' असद्वृत्त्यार्जितम् । 'स्रवति' निष्फलतां गच्छति । 'अनृत्विजः' अनूचानत्वादिलक्षणरहिताः। 'अविद्वान्' यज्ञकर्मानभिज्ञः यजमानोऽपि । 'अभावुकः' अरक्षकः । 'सङ्कीर्णः' सङ्कराख्यपापकारी । 'असिद्धार्थः' असिद्धप्रयोजनः। 'अकृत्स्नः' असम्पूर्णः अङ्गयागहीनः। 'अज्योतिः' अतेजस्कः, प्रभावहीन इति यावत् । 'विधिहीनः' अङ्गप्रधानेतिकर्तव्यतारहितः । 'छद्म' दम्भः। 'अध्रुवः' अल्पकालफलदायी। 'सोपधः' इष्टकीर्त्याद्यर्थमनुष्ठितः। 'उपदिशति' उपक्षीणो भवति। 'उपसृष्टः' उपसर्गाख्यदोषसम्बद्धः।

1 व्यथते इति ना. को.

2 अविद्वत्प्रणीतः अलाबुको भवति । संकीर्णप्रणीतो असिद्धार्थोऽकृत्स्नार्थोऽज्योतिर्विधिहीनो यातयामः छद्मोऽध्रुवः सोपधो अत्यल्पफलोऽनन्नाद्य उपदिशति अदक्षिणोऽनृतः इत्येते यज्ञोपसर्गाः, यैरुपसृष्टो यज्ञोऽलाबुको भवति इति गृ. रत्ना., ११७; अविद्वत्प्रणीतो नाशकः इति ना. को.

3 उद्भ्रेष्टाऽध्रुवः सोपधोऽल्पफलोऽनन्वाद्य उपदसत्यदक्षिणाऽनृत इत्येते इति न. को.

मनुः[1]

ये [2]शूद्रादधिगम्याऽर्थमग्निहोत्रमुपासते ।
ऋत्विजस्तेऽपि[3] शूद्राणां ब्रह्मवादिषु गर्हिताः ॥
तेषां[4] सततयज्ञानां वृषलाग्न्युपसेविनाम् ।
पदा मस्तकमाक्रम्य दाता दुर्गाणि सन्तरेत् ॥

'ब्रह्मवादिनो' वेदवादिनः । 'वृषलः' शूद्रः ।

अत्र छागलेयः

यः शूद्रादधिगम्यार्थमग्निहोत्रमुपावसेत्[5] ।
दाता[6] न फलमाप्नोति कर्ता च नरकं व्रजेत् ॥

मनुः[7]

यज्ञश्चेत्प्रतिरुद्धः[8] स्यादेकेनाऽङ्गेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥
यो वैश्यः [9]स्याद्बहुपशुर्हीनक्रतुरसोमपः ।

1 ११, ४२
2 शूद्रादभि गृ. र., १२८
3 हि गृ. र., १२८
4 तेषां सततमज्ञानं वृषलग्न्युपसेविनाम् ।
पदं मस्तक आरोप्य दाता स्वर्गाणि सन्तरेत् ॥ इति गृ. रत्ना., १२८
5 उपासते उद. मा.
6 दाता तत्फलं गृ. र., १२८
7 ११, १५
8 प्रतिरब्धः गृ. र., १२८
9 अङ्गपशुः इति गृ. र., १२८

कुटुम्बार्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥

आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥

आदाननित्याच्चादातुराहरेदप्रयच्छतः ।
यथा यज्ञोऽस्य [1]प्रथते धर्मश्चैव विवर्धते ॥

'प्रतिरुद्धः' आरब्धः न विलम्बितः । "एकाङ्गेन' एकेनाङ्गेन दक्षिणादिना । 'आहरेत्' तेनादीयमानं तदङ्गभूतं द्रव्यं तस्माद्गृह्णीयादित्यर्थः । वैश्यासम्भवे तु त्रीण्यङ्गानि द्वे वा अङ्गे शूद्रादपि ग्राह्याणि "शूद्रस्य वेश्मन" इति वाऽभिधानात् । बलात् शूद्रगृहादाच्छेदनीयं, 'न हि शूद्रस्ये'त्यनेन प्रकारेण शूद्रधनस्य यज्ञानुपयुक्तत्वमाह । 'अयज्वा' सोमयागरहितः । [2]'आदाननित्यः' निन्दितानिन्दितप्रकारेणाऽर्थार्जनतत्परः । 'अदाता' अदानशीलः । अदातुरप्रयच्छत इत्युभयोपादानात् । त्रैवर्णिकः प्रथमं याचनीयः । याचितश्चेन्न ददाति तदा आहरेदविचारयन् ।

गौतमः[3]

द्रव्यादानं विवाहसिद्ध्यर्थं [4]धर्मतन्त्रप्रसङ्गे च शूद्राद-

1 तथा यशोऽस्य प्रथते धर्मश्चैव प्रवर्धते गृ. र., १२९
2 आदाननित्यः अनिन्दितप्रकारेण अर्थार्जनतत्पर इति गृ. र., १२९
3 २. ७. २४
4 धर्मप्रसङ्गे च गृ. र., १२९

न्यत्राऽपि शूद्राद्बहुपशोरहीनकर्मणः । शतगोरनाहिताग्नेः । सहस्रगोरसोमात् । [1]सप्तमीश्चाभुक्त्वाऽनिचयायाप्यहीनकर्मणा आचक्षीत राज्ञा पृष्टस्तेन भर्तव्यः । श्रुतशीलसम्पन्नश्चेत् धर्मतन्त्रपीडायां तस्याकरणे दोषः ।

द्रव्यस्य परकीयस्य अननुज्ञातस्याऽपि स्वीकरणं यावता विना विवाहो न निष्पद्यते तावतः । इदं च विवाहकालातिक्रमसम्भावनायां कन्यादातुः । धर्मतन्त्रस्य अग्निहोत्रादेः[2] प्रवृत्तस्य प्रसङ्गो विच्छेदः । चकारः सिद्ध्यर्थमित्यस्याऽनुकर्षणार्थः । अत्रापि यावता धनेन तत्सिद्ध्यति तावदेवाऽपहृत्य स्वीकर्तव्यम् । अधिकस्वीकरणे स्तेयापत्तेः ।

कुतस्तत् स्वीकर्तव्यमत आह—'शूद्रात्' । शूद्रादलाभे शूद्रादन्यतोऽपि वक्ष्यमाणात्त्रैवर्णिकात् । 'अहीनकर्मा' धनसाध्यादृष्टार्थकर्मशून्यः । गोग्रहणं तन्मूल्यस्याऽप्युपलक्षणार्थम् । परद्रव्यादाने अपरं निमित्तान्तरमाह—'सप्तमीं चाभुक्त्वे'ति । सायं प्रातर्भोजनसंख्याया [[3]यद्भोजनादिक्रमे सप्तमभोजनवेलायां अनिचयाय] यावद्भोजनमात्रार्थं न तु सञ्चयाय । चौर्यनिमित्तं च यदि राज्ञा गृह्यते, तदा 'आचक्षीत' कथयेन्न तु भयान्न [4]ब्रवीत [?] । 'धर्मतन्त्रपीडायां'

1 चाभुक्त्वा अनिचयायाहीनकर्मणा आचक्षीत राज्ञा पृष्टस्तेन भर्तव्यः । श्रुतशीलसम्पन्नश्चेत् धर्मतन्त्रपीडायां तस्याकरणे दोषः इति गृ. र., १२९

2 अग्निहोत्रादेव इति ना. को.

3 [ ] इदं ना. कोशादुद्धृतम्

4 भयादेः अपह्नुवीत इति ना. को.

तस्य धर्मतन्त्रपीडावतः । अनन्तरोक्तनिमित्तत्रयवतः प्रधानकारणे ।

अङ्गिराः

खलक्षेत्रगतं धान्यं वापीकूपगतं जलम् ।
अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ॥
विच्छिन्नेषु तु पक्षेषु हविषां श्रपणेषु च ।
इष्टिं त्वविकृतां[1] कुर्यात्सुकृतं तु न लोपयेत् ॥

'अभोज्यात्' शूद्रादेः । एतच्च धान्यादि यज्ञविच्छेद-शङ्कायां तत्परिमाणपूरणायैव ग्राह्यम् । 'अविकृतामि'ति । बह्वन्नत्वादिविकाररहिताम् ।

अत्र बौधायनः[2]

अमेध्याद्याधाने[3] समारोप्य निर्मथित्वा पवमानेष्टिः । शौचदेशमन्त्राच्च[4] द्रव्यसंस्कारकालभेदेषु पूर्वप्राधान्यमग्निषु ।

अमेध्यप्रक्षेपे तमग्निं अरण्योः समारोप्य निर्मथनं कृत्वा पवमानेष्टिः कार्येत्यर्थः ।

अत्र पैठीनसिः

काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां[5] सादृश्येन

1 प्रकृतं इति गृ. रत्ना., १३०
2 १. ६. ४९
3 अमेध्याधाने गृ. र., १३१
4 मन्त्राविप्रकर्षे गृ. र., १३१
5 पर्णमूलकन्दपुष्पफलप्ररोहरसगन्धादीनां इति गृ. रत्ना., १३१

प्रतिनिधिं कुर्य्यात्, [1]सर्वालाभे यवः प्रतिनिधिर्भवति ।

आपस्तम्बः[2]

नानूचानमृत्विजं वृणीते न पणमानम् । अयाज्योऽनधीयानः ।

अमुकेन दक्षिणाकल्पेनैव त्वां याजयामीति यः पणते, स पणमानः । 'अनधीयानो' यद्यपि यज्ञविद्भ्यो धनवान् ।

अत्र शङ्खः

वृत्तं तु न त्यजेद्विद्वान् पूर्वमेव [3]सदर्जितम् ।
कर्मणा जन्मना शुद्धमिज्ययाऽध्ययनेन च ॥
एतैरेव गुणैर्युक्तं धर्मार्जितधनं [4]यदा ।
याजयेत [5]तदा विप्रो ग्राह्यस्तस्मात्प्रतिग्रहः ॥

पूर्वमाधानकाल एव यथोक्तधर्मादिसम्पन्नमृत्विजं परित्यज्योदीच्यदर्शादियागादौ ऋत्विगन्तरं च न कुर्यादित्यर्थः ।

इति भट्टहृदयधरात्मजमहासन्धिविग्रहिकश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ गृहस्थकाण्डे गार्हस्थ्यपर्वपल्लवः ॥

1 सर्वाभावे गृ. र., १३१
2 २. २०. ८
3 सदर्त्विजम् गृ. र., १३२; ना. को. च.
4 तथा गृ. र., १३२ ना. को. च.
5 सदा इति गृ. रत्ना., १३२; ना. को. च.

८

# अथ ब्राह्मणकर्मधर्मवृत्तयः

तत्र मनुः[1]

एतद्वो [2]विहितं कृत्स्नं विधानं पाञ्चयज्ञिकम् ।
द्विजातिमुख्यवृत्तीनां विधानं श्रूयतामिह ॥

हारीतः

अध्यापयेदधीयीत याजयेत यजेत [3]च ।
प्रतिगृह्णीत दद्याच्च षट्कर्मा ब्राह्मणः स्मृतः ॥
याजनाध्यापनादिभ्यस्तथा दानप्रतिग्रहैः ।
विराजः [4]स्वर्गमायान्ति विमानैः संयुता द्विजाः ॥

'विराजः' शोभमानाः । 'याजनाध्ययनादिभ्य' इति हेतौ पञ्चमी । अत्र आदिशब्देन यजनाध्ययनयोर्ग्रहणम् ।

मनुः[5]

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥

1 ३, २८६

2 अभिहितं गृ. र., ४१४

3 वा प्रतिगृह्णीयात् इति गृ. रत्ना., ४१४

4 आयाति विमानैः सहितो द्विजः गृ. र., ४१४

5 १०, ७५–७६

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने[1] चैव विशुद्धश्च प्रतिग्रहः ॥

'विशुद्धो' यदीयप्रतिग्रहे विशेषतो न प्रायश्चित्तं समाम्नातम् ।

वृत्त्यधिकारे आपस्तम्बः

दायाद्यं शिलोञ्छौ अन्याच्चापरिगृहीतम्[2] ।

'दायाद्यं' दायमादत्त इति दायादः पुत्रादिः, तस्य कर्मणा यद्धनग्रहणम् । 'अपरिगृहीतं' अस्वामिकं नीवारादि ।

हारीतः

द्विविधमेव गृहस्थं प्राहुः–शालीनं यायावरं च । शालीनात्पुण्यतरो यायावरः श्रेयान्[3] ।

सर्वारम्भेषु[4] बह्वयोऽस्य शाला इति शालीनः । शा-

1 याजनाध्यापनं चैव विशुद्धाच्च इति गृ. रत्ना., ४१४

2 २. १०. ४ अन्यत्रापरिगृहीतं गृ. र., ४१४ ;

3 द्विविधमपि गृहस्थं प्राहुः गृ. र., ४१५; द्विविधमेव गृहस्थमाहुः शालीनं यायावरं च । शालीनात् पुण्यतरो यायावरः । बह्वयोऽस्य शाला इति शालीनः । शालाया वा इति वा शालीनः । दशरात्रीर्वसन् प्रयातीति यायावरः इति या. वी., २१३

4 सर्वावस्थासु बह्वयोऽस्य शाला इति शालीनः, शालावानिति वा शालीनः, शालायामात्मवृत्तिभिः लीनः शालीनः । स द्विविधो गृह्यशालीनस्त्रेताशाशालीनश्चेति । गृह्यशालीनो जातपुत्रायाधानं संवत्सराद्वा शुश्रूषावान् । स द्विविधः सम्पन्नवृत्तिरसम्पन्नवृत्तिश्चेति । तयोरसम्पन्नवृत्तिः श्रेयान् स व्याख्यातः सम्पन्नवृत्तिर्याजनवृत्तिः कृषिवृत्तिश्च इति गृ. रत्ना., ४१५

लावानात्मवृत्तिभिः लीन इति वा शालीनः। स द्विविधः-गृह्यशालीनस्त्रेताशालीनश्च । गृह्यशालीनो जातपुत्रायाधानं संवत्सराद्वा शुश्रूषावान् यः, स एव द्विविधः—सम्पन्नवृत्तिरसम्पन्नवृत्तिश्च । तयोरसम्पन्नवृत्तिः श्रेयान्, स व्याख्यातः। सम्पन्ना याजनवृत्तिः कृषिवृत्तिश्च।

शाला गृहाणि। शालावान् शय्यां सुखासिकाम् । 'गृह्यशालीनः' गृह्यशालावान्। 'त्रेताशालीनः' गार्हपत्याग्नित्रयशालावान्। 'जातपुत्रायाधानं' कुर्युरिति शेषः। जातपुत्रायाधानमित्यत्र जातपुत्रशब्दः प्रथमाबहुवचनान्तः, शाकल्यमताश्रयणेन याकारपाठः। संवत्सराद्वा शुश्रूषावान् यः। यः शुश्रूषावान् गृह्याग्निपरिचरणवान् भवति। संवत्सरादूर्ध्वमाधानं कुर्यादित्यर्थः। [1]सकृदाधानोऽसम्पन्नः शिलोञ्छादिवृत्तिः। 'स व्याख्यातः' सोऽपि सम्पन्नवृत्तिर्दारानाहृत्याऽग्नीनाधायेत्यादिना कथितः। 'सम्पन्नः' सम्पन्नवृत्तिः।

पुनर्हारीतः

ऋतामृतोपहितमध्यापनात्[2] सन्नवृत्त्यापद्वृत्तयो भवन्ति।

'ऋतं' उञ्छशिलं भैक्षम् । 'अमृतं' अयाचितोपपन्नं सद्भ्यः। अध्यापनाच्छिष्योपहितवृत्तिः। अर्थवृत्तिः सन्न-

1 सद्यः कृताधानः इति गृ. र., ४१५

2 ऋतामृतोपहतसम्पन्नवृत्यापत्षड्वृत्तयो भवन्ति इति गृ. रत्ना., ४१५

वृत्तिः । आपद्वृत्तिः कृषिः । आसां पूर्वाः श्रेयस्यो भवन्ति । 'अध्यापनादि'ति च यथाविहितवृत्त्युपलक्षणम् ।

मनुः[1]

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ॥
ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन तु ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कथञ्चन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं[2] प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेन चैवाऽपि जीव्यते ।
सेवा श्ववृत्तिर्व्याख्याता[3] तस्मात्तां परिवर्जयेत् ॥

'द्रोहः' परपीडनं, न हिंसा, अतिनिषिद्धत्वात् । 'यात्रा' प्राणवृत्तिः । मात्रशब्देन भोगाद्यर्थं धनादानं व्यवस्थिते(?) । ऋतादित्यनुवृत्तौ यमः

आद्याश्चतस्रः श्रेष्ठाः स्युः ब्राह्मणानां च वृत्तयः ।

ब्राह्मणस्येत्यनुवृत्तौ गौतमः[4]

1 ४, २—६
2 भैक्ष्यं गृ. र., ४१६
3 आख्याता गृ. र., ४१६
4 २. ९. ५

कृषिवाणिज्ये वा स्वयङ्कृते कुसीदं च।

'कुसीदं च' वृद्ध्यर्थं धनप्रयोगः। पृथक्ग्रहणं चास्य स्वयङ्कृतस्याऽप्यनुज्ञानार्थं 'कुसीदवृत्तिः धर्म्या' इति प्रदेशान्तरेऽभिधानात्।

हारीतः

अग्नीनाधायोञ्छशिलाभ्यामयाचितोपपन्नं साधुभ्यो याजनात् सद्भ्यो वा याचनाद्देवपितृमनुष्यार्थं[1] वृत्त्यादानं कुर्वीत।

पैठीनसिः

अथ गृहस्थधर्मांश्चरिष्यन्नलोपेन धर्मस्य वृत्तिमुपपाददीत।

मनुः[2]

कुसूलधान्यको[3] वा स्यात् कुम्भीधान्यक एव वा।
त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव च॥
चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्।
ज्यायान् परः परो ज्ञेयो धर्मतो लोकवित्तमः[4]॥
षट्कर्मैको भवत्येषां त्रिभिरन्यः[5] प्रवर्त्तते।

1 मनुष्यातिथिभ्यः अन्नादानं कुर्वते गृ. र., ४१७

2 ४, ७—९

3 कुशूलधान्यको वा स्यात् या. मि., १. १२८

4 लोकजित्तमः, इति गृ. रत्ना., ४१७; या. अप., १३९

5 षट्कर्मको भवेत् तेषां त्रिभिरन्यः इति या. अप., १३९

द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥

'कुसूलधान्यकः' कोष्ठिकापरिमितधान्यवान्। 'कुम्भी' मृद्भाण्डविशेषः। 'त्र्यहैहिकः' ईहा तस्यां भवमैहिकं धान्यम्, त्र्याहमैहिकं यस्य स तथा। श्वोभवं श्वस्तनं धान्यं, "श्वसस्तुट्चे"ति[1] तुट् तदस्यास्तीति श्वस्तनिकः। न श्वस्तनिकोऽश्वस्तनिकः, सद्यः प्रक्षालक इत्यर्थः।

कुसूलकुम्भीपरिमाणं तु—एकादिने स्वकुटुम्बवर्तनोचितधान्यस्वीकर्तुः श्वस्तनापेक्षया त्र्यहैहिकादिनत्रैगुण्यदर्शनात्तदनुसारेणैव। कुसूलधान्यककुम्भीधान्यकयोरप्युत्तरोत्तरं दिनत्रैगुण्येन बोद्धव्यम्। अयं च वृत्तिविशेषपरिग्रहो धर्मातिशयार्थं गृहस्थमात्रविषयः, न यायावरविषयः। अनन्तरमेव चतुर्णामेव तेषामुत्तरोत्तरश्रेष्ठत्वमभिधाय 'षट्कर्मैको भवत्येषां'इत्यभिधानात्। षड्वृत्तयोऽत्र वाणिज्यान्तर्भावेन, पूर्वोक्तानामुञ्छादिवृत्तीनां परित्यागकारणाभावात्।

न च वाणिज्यं यायावरस्य विहितं, षट्कर्माणि[2] उञ्छशिलायाचितकृषिवाणिज्यरूपाणि। 'त्रिभिः' उञ्छशिलायाचितैः। 'द्वाभ्यां' उञ्छशिलाभ्याम्। 'ब्रह्मसत्रेण' उञ्छेन। ब्रह्मसत्रशब्दः ब्राह्मणानां सततं त्रायमाणत्वेनोञ्छपरः।

1 पा. सू. ४. ३. १६

2 उञ्छशिलयाचितायाचितकृषिवाणिज्यरूपाणि इति गृ. रत्ना., ४१८

याज्ञवल्क्यविश्वामित्रौ[1]

कुसूलकुम्भीधान्यो वा त्र्यैहिकोऽश्वस्तनोऽपि वा[2] ।
जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः ॥

[ हारीतः ]

शीलेनात्मवृत्तियापनाद्वर इति यायावरः[3] ।

दश दश वा रात्रीः वसन् प्रयातीति यायावरो [4]स्वराष्ट्रस्ववृत्तिषु वरया वरयात्मानं यापयतीति यायावरः । स द्विविधः—कृतप्रस्थानोऽकृतप्रस्थानश्च ।

यस्य विधिवद्वपनं [5]कारयित्वा आग्नेय्यां प्रातरुदिते वैश्वानर्येष्टया मन्त्रतो [6]दिग्द्रव्यादीन् प्रतिष्ठापयन्ति स कृतप्रस्थानः । अथ यस्य विधिवद्वपनं कृत्वा प्रातरुदिते वैश्वदेव्येष्टया [7]मन्त्रतो दिग्द्रव्यादीन् प्रवर्तयन्ति सोऽकृतप्रस्थानः ।

ब्रह्मवदस्य ऋषित्वं सम्पद्यते स [8]प्रथमया एनसो

1 याज्ञ., १. १२८

2 कुसूलकुम्भीधान्यो वा त्र्याहिकः श्वस्तनोऽपि वा इति उद. मातृका.

3 हारीतः—शालीनादात्मवृत्तियापनाद्वर इति यायावरः इति गृ. र., ४१८; ना. को. च

4 परास्वष्ट्रसु वृत्तिषु वरया इति गृ. रत्ना., ४१८

5 कृत्वा गृ. र., ४१८

6 द्रव्यादीनि गृ. र., ४१८

7 दिग्द्रव्यादि मन्त्रतो गृ. र., ४१८

8 प्रथमेष्ट्या गृ. र., ४१८

विमुच्यते। द्वितीयया देवेभ्यः प्रकाशः समानलोकश्च भवति। तृतीयया ब्रह्मर्षित्वं सम्पद्यते। परे च ब्रह्मणि स्थितो भवति। तस्माद्ब्रह्मणि स्थितो नामन्त्रतः शयनासनाहारविहारोत्थानदानोपप्रदानः[1] स्यात्।

तस्य पर्वसु [2]चयनं चाग्निपरिचरणं स्वयं होमो यथास्थानं[3] वोपहृत्य गार्हपत्याय निवेदनम्। यथोक्तानां बलिहोमानां कारणं स्वाश्रयविशेषाणामख्यापनं धर्मोपरोधिनामर्थानां वर्जनम्।

अथाष्टौ वृत्तयो भवन्ति। उञ्छशिलायाचितोपपन्नसन्दर्शनबभ्रुस्कन्नकुद्दालकापोतीत्येतासामेकतमया[4] वृत्त्या वरयावरया [5]यत्र यया वार्तया यजेत्। [6]अयोनिकण्डनस्थानगोस्थानधान्यकरणलवणामिति पञ्च उञ्छस्थानानि। लूनं शीर्णमनुज्ञातं शिलमित्याहुः। ब्राह्मणक्षत्रियविड्भ्यो ऽयाचितोपपन्नां शूद्रेभ्योऽप्येके। आपदि सन्दर्शयन्नात्मार्थे[7] गृह्णीयात्सन्दर्शी भिक्षेतेत्येवमुदाहरन्ति।

पर्णशाखया[8] पञ्च सीरा वाहयेत्। बभ्रुस्कन्ध आका-

1 विहारोत्थानदानो गृ. र., ४१८

2 वपनं गृ. र., ४१८

3 उपस्थानं चो गृ. र., ४१८

4 स्कन्ध कुद्दालकपोती गृ. र., ४१९

5 वा यत्र यया वर्तनं तया यापयेत् गृ. र., ४१९

6 कण्डुलस्थान गृ. र., ४१९

7 आत्मार्थं गृ. र., ४१९

8 पर्णशिखया पञ्च सीता, कुद्दाली राज्ञो भागं दद्यात् अन्यत्र जगतीपतेः। अश्ववि इति गृ. र., ४१९

लात्। कुद्दाली राज्ञो भागं दद्यादन्यत्र [1]वाऽर्थविशेषोऽस्योपवृत्त्युपपत्तौ सोमेनेष्ट्वा अग्निं चित्वा सर्वस्वं दत्वा अङ्गुष्ठानामिके संयम्य ग्रीवायामासज्य कपोतवदेकैकं गृह्णीयाच्छिन्नाच्छिन्नवृत्तिरित्येके। [2]इत्येताभिर्वृत्तिभिराहृत्य पूर्ववत् कुर्यात्।

षण्मासान् [3]कृच्छ्रं प्रत्याहृतात्मा यमनियममिति 'यायावरः'। परं ब्रह्मामृतमाप्नोति यद् गत्वा नेह जायते। 'यापनात्' सङ्कोचनात्।

'अष्ट'[4] वक्ष्यमाणाः उञ्छाद्या वृत्तयः। वापनमाग्नेयी चेष्टिः पूर्वेद्युः कार्या। प्रातरुदिते तु वैश्वानर्येष्ट्या इमां दिशं व्रजेदेव द्रव्यं व्रीहीन् यवानाहरतेति।

यस्य दिग्द्रव्यादीन् प्रतिष्ठापयन्ति व्यवस्थापयन्ति ऋत्विजः स कृतप्रस्थानः।

अकृतप्रस्थानस्तु यस्य पूर्ववद्वापनादि कारयित्वा प्रातरुदिते वैश्वदेवेष्ट्या अस्यां दिशि तिष्ठतेदं व्रीह्यादिद्रव्यमाहार्यं त्वयेति दिग्द्रव्यादीन् प्रवर्तयन्ति आदिशन्ति ऋत्विजः।

स तथा प्रथमाग्नेयी, द्वितीया वैश्वानरी, तृतीया वैश्व-

1 विशेषेभ्यो गृ. र., ४२०

2 इति तु ताभिः गृ. र., ४२०

3 कृच्छ्रान् प्रत्याहृतात्मा यमनियमानिति यायावरः गृ. र., ४२०

4 अष्ट वृत्तयोऽत्रैवाग्रे वापनं आग्नेयी चेष्टिः पूर्वदिने कार्यं। प्रातरुदिते तु वैश्वानर्या इष्ट्या इमां दिशं व्रज इदं द्रव्यं यवान् व्रीहीन् वा आहरेति गृ. र., ४२०

देवी, देवेभ्यः प्रकाशो द्योतमानो भवतीत्यर्थः।

अमन्त्रत इति तृतीयार्थे तसिः। विना मन्त्रेण न शयनादि कुर्यात्। 'उपादानं' प्रतिग्रहः। तस्य पर्वस्विति आहिताग्नित्वेन प्राप्तानां वपनादीनां पुनर्वचनं नियमार्थम्।

गार्हपत्ये निवेदनं [1]च प्राप्तमेवास्य विधीयते। अथाश्रमविशेषाः यायावरत्वादयः। 'अथाष्टौ वृत्तयः' इति 'एकतमये'ति वृत्तिसङ्करनिषेधार्थम्। 'यापयेत्' गमयेत् कालानिति शेषः। गोस्थानं यत्र गोभ्यो यवादिकं दीयते। धान्यकरणं खलं, लवनं क्षेत्रं लूयतेऽस्मिन्निति व्युत्पत्या। अनुज्ञातमत्र स्वाम्युपेक्षितम्। 'सन्दर्शयन्नि'ति सन्निहिते स्वामिनि तदुपेक्षितमपि धान्यादि सन्दर्शयन्नेव गृह्णीयात्। 'आत्मार्थे' इति। वृत्तिमात्रोपयोगिनो भोगार्थं सन्दर्शी भिक्षेतेत्यादिद्रव्यस्वाम्यग्रे आत्मानं दर्शयन् भिक्षेत। [2]न तु शब्देन याचत इत्यर्थः। बभ्रुस्कन्धं वाहयेत्। 'पर्णशाखये'त्यादि। पर्णः पलाशः, तस्य शाखया यावान् बभ्रुवर्णवृषस्कन्धो आयस्ता ववृतः ?। पञ्चाङ्गुलमात्रं वाहयेत्। अर्थप्राप्तां भुवम्। केचित्तु चतुर्विंशतिसीता इति पठन्ति। 'एतच्च वाहन'माकालाद्बीजवपनकालं यावत्। अन्यत्र वा कुद्दालादन्यत्र बभ्रुस्कन्धे भागदाने

1 त्वप्राप्तमेव इति गृ. र., ४२१

2 न तु वाचेति गृ. र., ४२१

विकल्पः। कापोतीमाह—'अन्नविशेषेभ्य' इत्यादि। अयाचितादिलाभेनान्नविशेषातिरेके सति सोमयागादि कृत्वा उक्तप्रकारां कापोतीमनुतिष्ठेत्। ग्रीवायामासज्य [1]प्रवेशिकादि पात्रामिति शेषः।

भिन्नाभिन्नवृत्तिरित्येके सति (?)[2]सा कापोत्येव भिन्नाद्विदीर्णाद्द्रोण्यादेर्यदेकैकबीजादानं सा भिन्नाभिन्नवृत्तिः इत्येके मन्यन्ते। तेनात्रापि सर्वस्वादानादीतिकर्त्तव्यता तुल्यैव। कापोतीविशेषत्वादेव चास्य तदनन्तरमभिधानम्। पूर्ववत् गार्हपत्यादिनिवेदनादि षण्मासान् कृच्छ्रान् कुर्यादित्यनुषङ्गः। कृच्छ्राः विशेषानुपादानात्प्राजापत्याः। प्रत्याहृतात्मा यमानियमान्। अत्रापि [3]कुर्यादित्यनुषङ्गः। प्रत्याहृतो विषयेभ्यो निवर्तित आत्मा येन स प्रत्याहृतात्मा।

बौधायनः[4]

अथ शालीनचक्रचरयायावरधर्माकाङ्क्षिणां नवभिः वृत्तिभिर्वर्तमानानां तेषां तद्वर्तनात् वृत्तिरित्युच्यते।

शालाश्रयत्वाच्छालीनत्वम्। अनुक्रमचरणाच्चक्रचरत्वम्। वृत्त्या वरया यातीति यायावरत्वम्। ता अनुव्या-

1 प्रसेचिकादि गृ. र., ४२१; ना. कोशे च

2 कापोत्ये च भिन्नाद्विदीर्णात् द्रोण्यादेर्यदेकैकबीजादानं सा भिन्नवृत्तिरेत्येके मन्यन्ते। इति गृ. रत्ना., ४२१

3 कृच्छ्रानित्यनुषङ्गः गृ. र., ४२१

4 अत्र समग्रे सूत्रपाठे क्वचित् क्वचिदन्यथा भावो दृश्यते See बौ. ध. २. २. १

ख्यास्यामः षण्णिवर्तनी कौद्दाली ध्रुवा सम्प्रक्षालिनी समूहा पालिनी शिलोञ्छा कापोती सिद्धेच्छेति नवैताः। तासामेवाऽन्याऽपि दशमी वृत्तिर्भवत्यानवमवृत्तेः तासामेव चाऽन्याऽपि दशमी वृत्तिर्भवत्या नवमवृत्तेः।

केशश्मश्रुलोमनखानि वापयित्वोपकल्पयेत्[1]—कृष्णाजिनं कमण्डलुं यष्टिं वीरुधं कुथहारिमिति। त्रैधातवीयेन[2] इष्ट्वा प्रस्थास्यति, वैश्वानर्या वा। प्रातरुदिते आदित्ये यथासूत्रमग्निं[3] प्रज्वाल्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य स्रुचि चतुर्गृहीतं गृहीत्वाऽऽहवनीये वास्तोष्पत्यं जुहोति—"वास्तोष्पते प्रतिजानीह्यस्मान्" इत्यनुद्रुत्य "वास्तोष्पते शग्मया संसदा त" इति जुहोति[4]। सर्व एवाहिताग्निरित्येके। तद्भूयः[5] स्रुक्स्रुवं निष्टप्य[6] स्रुचि च कृत्य

1 कल्पयते गृ. र., ४२२

2 तैत्तिरीयेणेष्टया गृ. र., ४२२ ना. कोशे च

3 यथामूलमग्निं ना. कोशे

4 याज्यया जुहोति गृ. र., ४२२

5 निर्गत्य ग्रामान्ते ग्रामसीमान्ते वाऽवतिष्ठते। तत्र कुटीं मठं वा करोति कृत्वा प्रविशति कृष्णाजिनादीनामुपक्लृप्तानां यस्मिन् यस्मिन् अर्थे येन यत् प्रयोजनं तेन तत् कुर्यात्।
प्रसिद्धमग्नीनां चरणं सिद्धं दर्शपूर्णमासाभ्यां यजनं प्रसिद्धमाग्रयणं, प्रसिद्धः पञ्चानां महायज्ञानां अनुप्रयोगः उत्पन्नानामौषधीनां निर्वापणं दृष्टं भवति विश्वेभ्यो जुष्टं निर्वपामीति वा तूष्णीं वा यथैता अद्भिः प्रोक्षति विश्वेभ्यो जुष्टं प्रोक्षामीति तूष्णीं वा ताः संस्कृत्य साधयन्ति। तस्याध्यापनयाजनप्रतिग्रहा निवर्तन्ते अन्ये च यज्ञक्रतव इति। हविष्यं चरेद्व्रतो इति गृ. रत्ना., ४२३

6 अत आरभ्य १८० पृष्ठे ब्रह्मवर्चसमसि इत्यन्तं ना. कोशे न लभ्यते ६९ तमस्य पत्रस्य नष्टत्वात्।

ग्रामान्ते ग्रामसीमान्ते वा तिष्ठति । तत्र कुटीं मठं वा करोति कृतं वा प्रविशति । कृष्णाजिनादीनामुपक्लृप्तानां यस्मिन्नर्थे येन यत्प्रयोजनं तेन तत्कुर्यात् ।

प्रसिद्धमग्नीनां परिचरणं, प्रसिद्धं दर्शपूर्णमासाभ्यां यजनं, प्रसिद्धमाग्रयणं, प्रसिद्धं पञ्चानां महायज्ञानामनुप्रयोग उत्पन्नानामोषधीनां निर्वापणं दृष्टं भवति। "विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामी"ति तूष्णीं वा। अथैता अद्भिः प्रोक्षति "विश्वेभ्यो देवेभ्यो जुष्टं प्रोक्षामी"ति वा तूष्णीं वा। ताः संस्कृत्य साधयन्ति । तस्याध्यापनयाजनप्रतिग्रहा निवर्त्तन्ते अन्ये च यज्ञक्रतव इति । हविष्यं च व्रतोपायनीयम् । तद्यथा–सर्पिर्मिश्रं [1]दधिमिश्रमपिशितमक्षारलवणमपर्युषितम् । ब्रह्मचर्यमृतौ वा गच्छति । पर्वणि पर्वणि केशश्मश्रुलोमनखवापनं शौचविधिश्च ।

'धर्मकाङ्क्षिणामि'ति । अत्र धर्मकाङ्क्षी चक्रचरोऽभिमतः । यायावरादपि तस्य धर्मातिशयकाङ्क्षित्वात् । अनुक्रमेण वृत्तीनां स्वीकरणात् । 'उपकल्पयते' उत्पादयति । 'वीवधो' भारयष्टिः । 'कुशहारः' स्वधितिखनित्रादिः । 'प्रस्थास्यती'ति । यदा प्रस्थास्यति, तदा वास्तोष्पतीयमुक्तेतिकर्तव्यताकं कुर्यात् । 'अनुद्धृत्य' अनूद्य । 'दृष्टं भवति' यथा दर्शपूर्णमासयोर्दृष्टं तथा भवतीत्यर्थः । 'व्रतोपायनीयं' व्रतार्थमुपहरणीयम् । भवतीति शेषः । 'अपिशितं' मांसवर्जम् । शौचविधिः बाह्यो मृज्जलादिना । 'आन्तरः' सत्यदमादिना ।

1 अपिशितमिति गृ. रत्नाकरे न दृश्यते

पुनर्बौधायनः[1]

यथैतत् षण्णिवर्तनीति, षडेव निवर्तनानि निरुपहृतानि करोति। भूमिस्वामिने भागमुत्सृजत्यनुज्ञातं वा गृह्णाति। प्राक्प्रातराशात्कर्षी स्यादस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारया मुहुर्मुहुरभ्युच्छन्दयन्। यत्रैतेन विधिना षण्णिवर्तनानि करोतीति षण्णिवर्तनी।

कौद्दालीति जलाभ्याशे कुद्दालेन फालेन वा तीक्ष्णकाष्ठेन वा खनति बीजान्यावपति, कन्दमूलफलशाकौषधीर्निष्पादयति। कुद्दालेन करोतीति कौद्दाली।

ध्रुवायां वर्तमानः शुक्लेन वाससा शिरो वेष्टयति। "भूत्यै त्वा शिरो वेष्टयामी"ति। "ब्रह्मवर्चसमासि ब्रह्मवर्चसाय त्वे"ति कृष्णाजिनमादत्ते। अब्लिङ्गाभिः पवित्रम्। "बलमसि बलाय त्वे"ति कमण्डलुम्। "धान्यमसि पुष्ट्यै त्वे"ति वीवधम्। "सखा मा गोपाये"ति दण्डम्।

अथोपनिष्क्रम्य। व्याहृतीर्जपित्वा दिशामनुमन्त्रणं जपति—

"पृथिवी चान्तरिक्षं च द्यौश्च नक्षत्राणि च या दिशः।
अग्निर्वायुश्च सूर्यश्च पान्तु मां पथि देवताः" इति॥

मानस्तोकीं च जपित्वा ग्रामं प्रविश्य गृहद्वारे गृहद्वार आत्मानं [2]वीवधेन सह दर्शनात् सन्दर्शनीत्याचक्षते।

1 ३. २. १–१५
2 वीरधेन ना. कोशे

वृत्तेर्वृत्तेरवार्तायामवार्त्तायां तथैव च।
तस्यां ध्रुवं वर्तमाना ध्रुवेति परिकीर्तिता[1] ॥

सम्प्रक्षालनीति। उत्पन्नानामोषधीनां प्रक्षेपणं निक्षेपणम् नास्ति [2]निचयो वा भाजनानि सम्प्रक्षाल्य न्युब्जतीति सम्प्रक्षालनी।

समूहेति। अवारितस्थानेषु पथि वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु वा यत्र यत्रौषधयो विद्यन्ते तत्र तत्र समूहन्या [3]समूह्य ताभिर्वर्तयतीति समूहा।

पालनीत्यहिंसिकेत्येवेदमुक्तं भवति। तुषविहीनांस्तण्डुलानिच्छति सज्जनेभ्यो बीजानि वा पालयतीति पालनी।

शिलोञ्छेति। अवारितस्थलेषु[4] वा पथि वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु वा यत्र यत्रौषधयो विद्यन्ते तत्र तत्रैकैकं कणिशमुञ्छयित्वा काले काले शिलैर्वर्तयतीति शिलोञ्छा।

कापोतेति। अवारितस्थानेषु पथि वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु वा यत्र यत्रौषधयो विद्यन्ते [5]तत्र तत्राङ्गुलि-

1 वृत्ते वृंतेरवार्तायां तयैव तस्प ध्रुवं वर्तनात् ध्रुवेनि परिकीर्तिता इति मुद्रितपुस्तकपाठः

2 नियमो वा ना. कोशे

3 समद्यताभिर्वर्तयति ना. कोशे

4 स्थानेषु ना. कोशे

5 तत्राङ्गुलीः आत्मैकैकं कालमुञ्छयित्वा ना. कोशे

भ्यां एकैकामोषधिमुञ्छयित्वा सन्दर्शनात्कपोतवदिति कापोती ।

सिद्धेच्छेति । वृत्तिभिः श्रान्तो [1]वृद्धत्वाद्धातुक्षयाद्वा सज्जनेभ्यः सिद्धमन्नमिच्छतीति सिद्धेच्छा ।

तस्याऽऽत्मसमारोपणं विद्यते सन्यासिवदुपचारः पवित्रकाषायवासोवर्जम् ।

वान्याऽपि वृक्षगुल्मलतावल्योषधीनां च तृणौषधीनां च श्यामाकनीवारजर्त्तिलादीनां वन्याभिर्वर्तयतीति वान्या ।

यद्येतासु वृत्तिष्वास्थापनं ताभ्योऽवसीदतीति ।

अथाप्युदाहरन्ति—

परां वृत्तिमुपाश्रित्य परां पश्चादुपाश्रितः ।
परिव्राज्ये स्थितो मूढः स इच्छेद् गृहमेधिताम् ॥ इति ।

'निवर्तनी' दशहस्तेन दण्डेन त्रिंशद्दण्डपरिमिता भूमिः निवर्तनम् । तद्धस्तात्त्रिरुपहतानि स्वकृष्टानि । 'भूमिस्वामिने'-भूमिरस्यास्तीति व्रीह्यादिदर्शनादिनिः । 'प्राक्प्रातराशे'-त्यव्ययीभावः । तेन दिवाभोजनात्पूर्वं कर्षेदित्यर्थः । अस्तु मास्ति नाम ? । 'समुष्कः' साण्डः । 'अभ्युच्छन्दयन्'विश्रामयन् । 'करोति' संस्करोति । 'वृत्ते' [2]आद्रव्यतेऽव्ये ? अतिक्रान्ते । 'अवार्तायामवार्तायामि'ति वीप्सा नैरन्तर्यप्रदर्शनार्थम् । 'प्रक्षेपणं' कुसूलादौ धान्यादेर्निक्षेपणम् । परहस्ते धारणं स प्रकारान्तरेणाऽपि कर्तव्य इत्यर्थः । 'अप्रातिहता-

1 वृद्धत्वात् सज्जनेभ्यः ना. कोशे

2 आकृते द्रव्ये ना. कोशे

वकाशेषु' अनिवारितप्रसरेषु सन्दर्शनेनैव ग्रहणात्। तस्य समारोपणं [1]सस्यसिद्धोञ्छवृत्तेरग्नीनामात्मनि समारोपणं भवति।

मनुः[2]

वर्त्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः।
इष्टीः पार्वायनान्तीयाः केवला निर्वपेत्सदा॥
न लोकवृत्तं वर्तेत वृत्तिहेतोः कथञ्चन।
अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्॥
सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्।
सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः॥

'पार्वायनान्तीयाः' पर्व च अयनान्तश्च तयोर्भावः। स्तार्किकर्मणं (?)कृत्वा वृद्धाच्छः कर्तव्यः। 'लोकवृत्तं' धनिकस्तुत्यादि। 'अजिह्मां' कौटिल्यवर्जिताम्। 'अशठां' [3]गर्वादिरहिताम्। 'शुद्धां वृत्तिं' सङ्करवर्जिताम्। 'जीवेत्' ब्राह्मणजीविकां कुर्यात्॥

1 तस्य शिलोञ्छवृत्तेः ना. कोशे

2 ४, १०

3 दम्भरहिताम् ना. कोशे

९

# अथाऽऽपद्वृत्तिः

तत्र मनुः[1]

शिलोञ्छमप्याददीत[2] विप्रो जीवन् यतस्ततः ।
प्रतिग्रहाच्छिलः श्रेयान् ततोऽप्युञ्छः प्रशस्यते[3] ॥

मुख्यया वृत्या जीवनाभावे यतस्ततोऽपकृष्टादपि शिलोञ्छावाददीत, [4]न तु प्रतिग्रहम् । यस्मात्प्रतिग्रहापेक्षया शिलोञ्छौ प्रशस्तौ । तयोरभावे [5]प्रतिग्रहादप्युपाददीत ।

मनुः[6]

वरं स्वधर्मो विगुणो न [7]पारक्यः स्वनुष्ठितः ।
परधर्मेण[8] जीवन् हि सद्यः पतति जातितः ॥

1 १०, ११२
2 मयाददीत उद. मातृ
3 प्रवतते गृ. र., ४२३
4 न तु प्रतिग्रहात् गृ. र., ४२३
5 ग्रहमप्याददीत ना. कोशे
6 १०, ९७
7 परधर्मात्स्वनुष्ठितात् ना. कोशे
8 परधर्माश्रयाद्विप्रः इति या. मि

शङ्खलिखितौ

तस्य स्वधर्म एव श्रेयान् [1]स्वल्पोऽप्यनुष्ठितो नाऽवरसेवितः। जघन्यसेवी ह ब्राह्मणो जघन्येषूपपद्येत। तस्मात्प्रशस्तसमयाचारः सर्वतः प्रतिगृह्णीयात्। नाऽऽत्मनस्ततस्तृप्तिमिच्छेत्। कामं त्रयाणां वर्णानां याजनं कुर्वीत। धर्मेण तेभ्यो वृत्तिमादाय धर्मकृत्येषूपहरेत्।

'तस्य' ब्राह्मणस्य। [2]'स्वधर्मः' स्ववृत्त्युपायः। 'स्वल्पोऽपि' यथाकथञ्चिदनुष्ठितोऽपि। 'अवरः' क्षत्रियादिः। प्रशस्तानां शिष्टानां समयः सिद्धान्तः तमाचरतीति 'प्रशस्तसमयाचारः'। 'सर्वतः' शूद्रादेरपि गृह्णीयात्। 'ततः' शूद्रादिप्रतिग्रहेण[3]। 'तृप्तिं' भोगाकारमवरं(?)। 'धर्मेण' शास्त्रतः।

अत्राऽऽपत्कल्पे ब्राह्मणस्येत्यनुवृत्तौ गौतमः[4]

याजनाध्यापनप्रतिग्रहाः सर्वेषाम्। पूर्वः पूर्वो गुरुः। तदलाभे क्षत्रवृत्तिः, तदलाभे वैश्यवृत्तिः।

1 अन्यः, यद्यन्यसेवी हि ब्राह्मणो जघन्येषु प्रवर्तेत इति। तस्मात् प्रशस्तसमयाचारः सर्वतश्च प्रतिगृह्णीयात्। नात्मनः ततो वृत्तिमिच्छेत् कामं त्रयाणां वर्णानां याजनं कुर्वीत धर्मेण तेभ्यो वृत्तिमादाय धमकृत्येषूपहरेत् इति गृ. रत्ना., ४२४

2 धर्मः ना. को.

3 इत आरभ्य पृष्ठे १८८ 'वृषलः कर्म वा' इत्यन्तं ७२ तमस्य पत्रस्य नष्टत्वात् न दृश्यते ना. कोशे

4 १. ७. ४

'सर्वेषां' अप्रशस्तानामपि । 'गुरुः' दोषावहः । यच्च मनुवचनम्—'प्रतिग्रहः प्रत्यवर' इति प्रतिग्रहनिन्दा, सा प्रशस्तयाजनापेक्षया ।

वसिष्ठः[1]

कामं[2] वा स्वयं कृष्योत्पाद्य तिलान्विक्रीणीरन्ननृणत्वे नाऽयाज्ययाजनं प्रसिद्धामिति ग्रहोऽस्तीति ।

अथाऽप्युदाहरन्ति

अग्नय इव दीप्यन्ते [3]जपहोमैर्द्विजोत्तमाः ।
प्रतिग्रहेण शाम्यन्ति उदकेनाऽग्नयो यथा ॥ इति ।

'प्रतिग्रहेण' निषिद्धेनेति शेषः ।

शङ्खलिखितौ

आपत्काले ब्राह्मणस्य मातापितृमतो बहुभृत्यस्याऽनन्तरिका वृत्तिरिति [4]विकल्पः ।

1 २. ३१

2 कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीरन् । न वायाज्ययाजनं प्रतिषिद्धप्रतिग्रहोऽस्तीति इति गृ. रत्ना., ४२५ ;
कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीरन् न त्वेवायाज्ययाजनं प्रतिषिद्धं प्रतिग्रहो वास्तीति इति या. अप., ९२९

3 तपो या. अप., ९३०

4 कल्पः । तत्र ब्राह्मणेषु त्रिगुणसम्पन्नेषु वृत्तिदौर्बल्यमाख्येयम् । यद्-ब्रूयुस्ते स धर्मः । तस्यानन्तरका वृत्तिः क्षात्रेऽभिनिवेशः । त्रयाणां ब्राह्मणकर्मणां या वृत्तिर्याजनाध्यापनप्रतिग्रहाणां एवमपि अजीवन्, या. अप., ९३०

यत्र ब्राह्मणे मातापितृषु चरित्रगुणसम्पन्नेषु वृत्तेर्दौर्बल्यमाख्येयम्। यद् ब्रूयुस्ते स धर्मः, क्षात्रेऽभिनिवेशस्त्रयाणां ब्राह्मणकर्मणां व्यावृत्तौ याजनाध्यापनप्रतिग्रहाणाम्। एवमप्यजीवन् वैश्यवृत्तिमेवोपजीवेत्।

'विकल्पो' विमर्शः। 'क्षात्रेऽभिनिवेशः' क्षत्रियवृत्तिनिष्ठत्वम्।

शिलोञ्छाद्यनन्तरं बुधः

तदसम्भवे क्षत्रवृत्त्या वैश्यवृत्त्या वा। आपत्कल्पे असाधुभ्यः प्रतिगृह्णीयात्। वृत्तिसङ्करं न कुर्य्यात्कर्म, वर्णसङ्करं कुलशुध्यर्थम्।

'आपत्कल्पे'[1] वैश्यवृत्त्यसम्भवे। असाधुरत्र यदीयप्रतिग्रहस्य कृष्याद्यपेक्षया ऽपकर्षः। "श्रेयान् स्वधर्मो विगुण" इति प्रतिग्रहादेः श्रेष्ठत्वाभिधानं शूद्रादिप्रतिग्रहविषयम्।

याजनाध्यापनप्रतिग्रहानुवृत्तौ बौधायनः[2]

तदशक्तौ क्षत्रधर्म्मेण जीवेत्, प्रत्यनन्तरत्वात्। नेति गौतमः। हास्यार्थमपि ब्राह्मण आयुधं नाऽऽददीत। अत्युग्रो हि क्षत्रधर्म्मो ब्राह्मणस्य।

तत्र ब्राह्मणेषु चरित्रगुणसम्पन्नवृत्तेः दौर्बल्यमाख्यातं यद्ब्रूयुस्ते स धर्मः तस्यानन्तरा वृत्तिः क्षात्रेऽभिनिवेशस्त्रयाणां व्यावृत्तौ याजनाध्यापनप्रतिग्रहाणां एवमप्यजीवन् इति गृ. र., ४२६

1 आपत्काले वैश्यवृत्त्यसम्भवे असाधुरिह यत्प्रतिग्रहः कृष्याद्यपेक्षया अपकृष्टः इति गृ. र., ४२६

2 अशक्तः…………। नेति गौतमोऽत्युग्रो हि क्षत्रधर्मः इति. मु. पाठः। २. ४. २६, २८

अथाऽप्युदाहरन्ति

ब्राह्मणार्थे गवार्थे वा [1]वर्णानां चाऽपि सङ्करे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ॥

वैश्यवृत्तिरनुष्ठेया। क्षत्रधर्मेण शस्त्रधारणव्यतिरिक्तेनेति बोद्धव्यम् । ब्राह्मणस्य धर्मार्थमेव शस्त्रधारणविधानात् ।

याज्ञवल्क्यः[2]

क्षात्रेण[3] धर्मेणाऽऽजीवेत् विशां वाऽप्यापदि द्विजः ।
निस्तीर्यार्थे[4] समुत्सृज्य पाव्याऽऽत्मानं भवेत्पथि ॥

'निस्तीर्य' आपदमिति विपरिणत्याऽनुषङ्गः ।

नारदः

आपद्यनन्तरा[5] वृत्तिर्ब्राह्मणस्य विधीयते ।
वैश्यवृत्तिस्ततश्चोक्ता न जघन्या [6]कदाचन ॥
न कथञ्चन कुर्वीत ब्राह्मणः कर्म वार्षलम् ।
वृषलः कर्म [7]वा ब्राह्मं पतनीये हि [8]ते तयोः ॥

1 सवर्णानां च इति गृ. रत्ना., ४२६

2 ३. ३४

3 क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि या. अप १२८ ; या. वी., ८१६

4 निस्तीर्य तामथात्मानं पावयित्वा न्यसेत् पथि इति या. अप., १२८ ; या वी., ८१६

5 आपत्सु गृ. र., ४२७ ; मु. पा. ४. ५६. ६०

6 कथञ्चन गृ. र., ४२७ ; या. अप., १२८

7 न for वा. मु. पा

8 चैतयोः गृ. र., ४२७

उत्कृष्टं [1]चाऽवकृष्टं च तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ॥
आपदं ब्राह्मणः [2]तीर्त्वा क्षत्रवृत्त्याऽर्जिते धने ।
उत्सृजेत्[3] क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः ॥
तस्यामेव तु यो वृत्तौ ब्राह्मणो रमते [4]रसात् ।
काण्डपृष्ठश्च्युतो मार्गात्[5] सोऽपाङ्क्तेयः प्रकीर्तितः ॥
[ काण्डपृष्ठो ब्राह्मणाधमः ]

बौधायनः[6]

कुसीदकृषिवाणिज्यं [7]प्रकुर्वीत स्वयं कृतम् ।
आपत्कल्पेऽ[8]न्यथा कुर्वन्नेनसा युज्यते द्विजः ॥
लब्धकामः[9] पितॄन् देवान् ब्राह्मणांश्चाऽपि पूजयेत् ।
ते [10]तुष्टाः तस्य तं दोषं शमयन्ति न संशयः ॥

1 निकृष्टं च द्वयोः गृ. र., ४२७ ; चापकृष्टं इति मु. पा
2 तीर्त्वा क्षत्रवृत्त्याऽर्जितैर्धनैः गृ. र., ४२७ ; वृत्त्यर्जितैः मु. पा
3 उत्सृज्य इति गृ. रत्ना., ४२७
4 सदा. मु. पा
5 मार्गादपाङ्क्तेयः मु. पा
[] ना. कोशे अधिकः पाठः
6 इत आरभ्य बौधायनीयत्वेन दृष्टं श्लोकचतुष्टयं बृहस्पतिवचनत्वेन दृश्यते गृ. रत्नाकरे., ४२८ वचनमिदं मुद्रितबौधायने न दृश्यते
7 प्रकुर्वीतास्वयं कृतं गृ. र., ४२८
8 काले स्वयं गृ. र., ४२८, ना. कोशे च
9 लाभः इति गृ. रत्ना., ४२८
10 हृष्टाः गृ. र., ४२८

वणिक्कुसीदी[1] दद्यात्तु वस्त्रगोकाञ्चनादिकम् ।
कृषीवलोऽन्नपानानि [2]यानशय्यासनानि च ॥
पणेभ्यो[3] विंशकं दत्वा [4]पशुस्वर्णादिकं शतम् ।
वणिक् [5]कुसीद्यदोषः स्याद् ब्राह्मणानां च भोजने[6] ॥

महाभारते

स्थूलाच्छुल्काच्च[7] वचनात् मृदुस्निग्धाच्च भोजनात् ।
अपरप्रेष्यभावाच्च [8]भूय इच्छन् व्रजत्यधः ॥

अत्र [9]सर्ववाक्येषु ब्राह्मणस्याऽऽपदि वैश्यवृत्त्यनुवृत्तिर्द्रष्टव्या ॥

1 कुसीदं गृ. र., ४२८
2 आसनानि च गृ. र., ४२८
3 पण्येभ्यः गृ. र., ४२८, ना. को च
4 वर्णादिकं गृ. र., ४२८ ; स्वर्णादिकं ना. को
5 कुसीद्यदोषः स्याद्ब्राह्मणानां च पूजने इति गृ. रत्ना., ४२८
6 पूजने ना. को
7 फलाच्छुल्काच्च गृ. र., ४२८
8 ऊर्ध्वं गृ. र., ४२८
9 अथ कृषिः । अत्र सव ना. को

## १०

# अथ कृषिः

तत्र मनुः[1]

वैश्यवृत्त्याऽपि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा ।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥
कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्भिर्गर्हिता ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥

इयं च कृषिर्विगर्हिता इतरवैश्यवृत्त्यसम्भवे द्रष्टव्या ।

बौधायनः[2]

कृषिर्वेदविनाशाय वेदः कृषिविनाशकः ।
शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत् ॥

हारीतः

सहसूनं[3] लाङ्गलम् । तत् ब्राह्मणे न विद्यते । आपद्याचरितत्वाद्यदि कुर्याद्यथार्थं कुर्यात् ।

'यथार्थं' यावताऽर्थेनाऽऽपन्निस्तीर्यते [4]तावतोऽनतिक्रमेण ।

1 १०. ८३

2 १. १०. ३१

3 सहसूनं लाङ्गलं तदब्राह्मणे न विद्यते गृ. र., ४२९

4 तावदनतिक्रमेण, प्राक् प्रातराशकर्षी स्यात् । अस्यूतनासिकाभ्यां समुष्काभ्यां अतुदन्नवया इति गृ. रत्ना., ४२९ ; तावदर्थानति ना. को

**बौधायनः**[1]

प्राक् प्रातराशात् कर्षी स्यात् । अस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारया मुहुर्मुहुरभ्युच्छन्दयन् ।

**पैठीनसिः**

क्षेत्रं [2]साण्डाभ्यामनडुद्भ्यां कृषीत निदाघे च यः । प्रयच्छंस्तिलान्वपेदित्यरिवल्लरी लाङ्गलमिति विज्ञायते । परीरो अस्येन्दु । सुशेवं कल्याणनासिकं सोमो बाह्यस्य प्राप्नोतीति मोमेपित्सतु ? । तदुत्कृषति गां वा [ ? जाविवांश्वज ] प्राप्नोति । तस्मात् कृषति तिलान्वपेदिति अन्नार्थं वचनम् । परीरवल्लाङ्गलमित्यादिकमर्थवादः । कर्षणः सैव अयाज्ययाजनप्रतिषिद्धप्रतिग्रहाभ्यां कृषिस्तूत्पन्नम् ।

**वसिष्ठः**[3]

तस्मात् साण्डाभ्यामनडुद्भ्यामनस्यूताभ्यां प्राक् प्रातराशकर्षी स्यात् । [4]निदाघेऽपः । प्रयच्छेल्लाङ्गलं पवीरवं सुशेवं

1 २, ४, २०, २१

2 परवल्लाङ्गलमिति विज्ञायते । परीरो मत्स्येन्द्रः । स्वमेवं कल्याणनासिकं सोमो राज्यस्य प्राप्तौ प्रतीतसोमेऽपि सैव तत्वकृषिमिति गां च अजाव्यं च प्राप्नोति । तस्मात्कृषति तिलान्वपेदिति यत्नार्थं वचनम्—ना. को. इदं पैठीनसिवचनं तद्व्याख्यानं च सर्वथाऽशुद्धप्रायमेव मातृकासूपलभ्यते । अतो यथोलम्भमेव मुद्रितम् ।

3 २. ३२

4 स्यात् निदाघे यः प्रयच्छेल्लाङ्गलं पवीरश्वङ्गेवे सोमपित्सरुतदुद्वपति गामविं प्रफर्व्यं पीवरीं प्रवद्रथवाहना ना. को

सोमपित्सरु। तदुद्वपति गामविं चाजानश्वानश्वतरखरोष्ट्रांश्च प्रफर्व्य च पीवरीम् । प्रस्थावद्रथवाहनामिति । लाङ्गलं [1]पवीरत् वीरवत् सुमनुष्यवदनडुद्वत् । सुशेवं कल्याणनासिकं कल्याणी हि अस्य नासिका नासिकयोद्वपति दूरेऽपविध्यति । सोमपित्सरु सोमो ह्यस्य प्राप्नोति तत्सरु । तदुद्वपति । गां चाऽविं अजानश्वानश्वतरखरोष्ट्रांश्च । प्रफर्व्यं च पीवरीं दर्शनीयां कल्याणीं प्रथमयुवतीम् ।

परीरवत् परीरं फालः तद्वल्लाङ्गलं परिः शल्यो भवति । 'यद्धि पुनाति भूमिं तद्वत्परीरवमि'ति निरुक्तकारवचनात् । परीरवदित्यस्य प्रदर्शनार्थमाह वसिष्ठः 'मनुष्यवदनडुद्वदि'ति । 'सुशेवं' सुमुखम् । 'नासिका' हलाग्रभागः । 'अपाविध्यति' मदमुत्सादयति । 'सोमपी'ति सोममाप्नोतीति णिनिप्रत्ययान्तम् । धात्वाकारस्य छान्दसो लोपः, सोमो यवादिः । "अन्नं वै सोम" इति शतपथश्रुतेः । 'त्सरुः' यस्मिन् स्थाने वृत्या[2] वाह्यते । 'तदुद्वपति' उत्पादयति । 'प्रफर्व्यां' प्रकृष्टपर्ववतीं छान्दसो वर्णविकारः ।

हारीतः

आपत्सु च कृषिं प्राहुः [3]कृषेद्य आयोजनवदायोज्य बालवृद्धकृशार्तादीन् वर्जयन्नदीर्घेण प्रतोदेन शनैर्वाहयेद्य-

1 लाङ्गलं पवीरवं सुशेवं सुमतित्सरु गृ. र., ४२९

2 कृत्वा—ना., को

3 कृषिर्वेदायोजनवदायोज्य बालवृद्धकृशार्तादीन् वर्जयेत् अदीर्घेण प्रतोदेन शनैर्वाहयेत् । यष्टिमुष्टिलोष्टारत्निजानुयोक्त्रैर्द्रोवणाक्रोशनप्रभृतिभिः नाभिघ्नी । न पर्वसु न सन्धिवेलयोः वाहयेत् गृ.र., ४३०, ना.को च.

ष्टिमुष्टिलोष्टारत्निजानुयोक्त्रैः द्रावणाक्रोशनप्रभृतिभिर्नाभिनिघ्नीत। न पर्वसु न सन्धिवेलयोर्वाहयेत् । द्विहलकृते वा परियोगोऽवमृज्य मोक्षणम्। मृदुवच्छायायां पानाहारादीन् दद्यात्। कृमिकीटकिलीतकदंशमशकमक्षिकानिवृत्तिस्मरशीतवातोष्णवर्षेषु उद्धरणकर्णकण्डूयनधूमाग्निनिवातप्रच्छन्नसमुपस्तीर्णादिषु च गोपायेत्। सन्नभग्नविलग्नार्त्तानौषधयवसलवणस्नेहादिषु यथार्थं [1]पवनलवनमर्दनपवनातिहारेषु बलिहोमादि कुर्यात्।

देवलः

स्नात्वाऽनडुहोऽलङ्कृत्य [2]ब्राह्मणान् भोजयेत् सौरभेयाणां पुण्यमिति। षड्भागं राज्ञे दत्वा पञ्चमाद्ब्राह्मणान्[3] दत्वा तोषयेत्।

अथाऽप्यत्रोदाहरन्ति

यूपोऽयं निहितो[4] मध्ये मेधिनामिह कर्षकैः।
तस्मादतन्द्रितो दद्यादन्नधान्यार्थदक्षिणाः॥

भूमिं [5]भित्वौषधीः छित्वा हत्वा कीटपिपीलिकान्।
पुनन्ति [6]खलयज्ञेन कर्षका नात्र संशयः॥

1 पवनलवणमर्दनपुलाकाभिहारेषु बलिहोमादीन् कुर्यात् गृ. र., ४३०

2 देवलः—स्नात्वाऽनडुहोऽलङ्कृत्य ब्राह्मणान् भोजयेत् गृ. र., ४३०

3 ब्राह्मणान् भोजयेत् गृ. र., ४३०

4 यूपोऽयं निहितो मध्ये मेधिनामेह कर्षकैः गृ. र., ४३०

5 कृष्ट्वौषधिं गृ. र., ४३०

6 खलु यज्ञेन कर्षका नात्र इति गृ. रत्ना., ४३०

'आयोजनवत्' आयोजनं अग्निचयने गृह्ये चोक्तं तद्वत्। 'अरत्निः' प्रसृताङ्गुलिर्हस्तः। 'द्रावणं' उद्वासनम्। 'द्विहलकृते' पुनःकर्षणाय। 'परियोगो' हले संयोजनम्। पर्वादावपि कुर्यादित्यर्थः। 'अवमृज्य' हस्तादिना धूलिकर्दमादीनपनीय। 'मृदुवत्' अक्रुध्यन्। 'किलीतकः' [1]गवादिस्तनादिदेशे यो भवति रक्तपः कीटविशेषः। 'निवृत्तयः' चमराः। 'सृमराः' क्षुद्रमक्षिका गणचारिण्यः। कृमिकीटादिष्वेतेषूपद्रवेषु यथायोगं समुद्धरणादिना गोपायेत्। 'सन्नः' अवसन्नः। 'विलग्नः'[2] पङ्कादौ मग्नः। 'यथार्थं' [3]एतानार्तानौषध यवसादिषु[4] भोजयेदित्यर्थः। 'पवनं' श्रमापनयनम्। [5]'अतिहारः' खलाद्गृहानयनम्। 'सौरभेयाणां पुण्यं' कल्याणमस्त्विति ब्राह्मणान् भोजयेदित्यर्थः।

बृहस्पतिः

राज्ञे [6]दत्वा च षड्भागं देवतानां च विंशकम्।
त्रिंशद्भागं तु विप्राणां कृषिं कृत्वा न दोषभाक्॥

हारीतः

अष्टगवं [7]धर्महलं षड्गवं जीवितार्थिनाम्।

1 स्थलादि गृ. र., ४३१
2 विलग्नः पङ्कादौ मग्नः गृ. र., ४३१; पङ्कादिलग्नः ना. को
3 यथार्थमेतान् भग्नादीन् औषधयवसादिषु भोजयेत् इति गृ. रत्ना., ४३१
4 तानग्न्यादीन् ओषधियवादि योजयेदित्यर्थः ना. को
5 अभिहारः गृ. र., ४३१
6 दद्याच्च गृ. र., ४३१
7 अष्टागवं गृ. र., ४३१

चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥

तथा

बालानां दमनं चैव वाहनं न च शस्यते ।
वृद्धानां दुर्बलानां च प्रजापतिवचो यथा ॥

देवलः

पुंस्त्वोपघातं[1] नास्ये वा वाहनानां न कारयेत् ।
वृद्धं [2]युग्मे न युञ्जीत जीर्णं व्याधितमेव [3]च ॥

ब्रह्मपुराणे

ब्रह्मा विष्णुश्च रुद्रश्च [4]कश्यपः सुरभी तथा ।
इन्द्रः प्रचेताः पर्जन्यः शेषचन्द्रार्कवह्नयः ॥
बलदेवो हलं भूमिः [5]ऋषभौ रामलक्ष्मणौ ।
रक्षोघ्नौ जानकी सीता युगं गमनमेव च ॥
एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः ।
गा मङ्गलेषु सम्पूज्याः कृष्यारम्भे महोत्सवे ॥

1 पुंस्त्वोपघातं नास्यां वा इति गृ. रत्ना., ४३२
2 युग्मं गृ. र., ४३२
3 वा गृ. र., ४३२
4 काश्यपः गृ. र., ४३२
5 वृषभौ गृ. र., ४३२

अर्घ्यैः[1] पुष्पैस्तथा धूपैर्माल्यै रत्नैः पृथक् पृथक् ।
सदक्षिणैर्विधानेन होमैर्ब्राह्मणतर्पणैः ॥
ततः [2]शकुनिभुक्तेन वाद्यशब्देन भूरिणा ।
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः ॥
पूर्वोत्तरां दिशं गच्छेत् क्रमात् पौरन्दरीं शुभाम् ।
कृत्वा [3]प्रदक्षिणावर्त्तमैशान्याभिमुखस्ततः ॥
विमुच्य वृषभौ बीजं पुरुषो लक्षणान्वितः ।
हृष्टः[4] सुवासाः स्रग्वी च सुवर्णजलसेचितम् ॥
सुवर्णपात्रसंयुक्तं[5] प्राङ्मुखो निर्वपेद्भुवि ।
उप्त्वा बीजं च तत्रैव भोक्तव्यं बन्धुभिः सह ॥
उत्सवश्चैव कर्तव्यो गीतवाद्यसमाकुलः ॥

तथा

न षण्ढं वाहयेद्धेनुं न गां भारेण पीडयेत् ।
न वाहनीयाः शिशिरे वृषभा यत्र कुत्रचित् ॥

देवीपुराणे

सुदृढं पृष्ठदेशे तु स्कन्धदेशे तु यो वृषम् ।
वाहयेद्गुरुभारेण स तु भारशतं वहेत् ॥

1 अर्घैः गृ. र., ४३२
2 शाकुनसूक्तेन गृ. र., ४३२ ना. को
3 प्रदक्षिणावर्तमैशान्यभिमुखोयतः गृ. र., ४३२
4 तृप्तः गृ. र., ४३२
5 पात्रे कृत्वा तु गृ. र., ४३२

रामायणे

यो दुर्बलं परिश्रान्तं [1]बालिशं पापनिर्भयः ।
वाहयिष्यत्यनड्वाहं स गोघ्नः पापमाप्स्यति ॥
शक्तं समर्थं बलिनं यो वृषं वाहयिष्यति ।
ग्रासोपहारसंयुक्तं न स [2]पापमवाप्स्यति ॥

तत्र सर्ववाक्येष्वापदि वैश्यवृत्तिषु ब्राह्मणाधिकारो द्रष्टव्यः ।

1 बालिशः गृ. र., ४३३
2 पापं प्रयास्यति इति गृ. रत्ना., ४३३

## ११

# अथ वाणिज्यम्

तत्र मनुः[1]

इदं तु [2]धर्मवैकल्यात् त्यजतो धर्मनैपुणम् ।
विट्पण्यमुद्धृतोद्धारं विक्रेयं [3]वृत्तिवर्द्धनम् ॥
सर्वान् रसानपोहेत कृतान्नं तु [4]तिलैः सह ।
अश्मनो लवणं चैव पशवो ये च [5]मानवाः ॥
सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च ।
अपि चेत्स्युररक्तानि[6] फलमूले तथौषधीः ॥
अपः[7] शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥
आरण्यांश्च पशून् सर्वान् दंष्ट्रिणश्च वयांसि च ।

1 १०. ८५—९०
2 वृत्ति गृ. र., ४३३ ; ना. को; मुद्रितमनौ च
3 वित्त मुद्रितपाठः
4 च for तु मुद्रितपाठः
5 मानुषाः मुद्रितपाठः
6 अयनेनस्युरक्तकानि अपि वै स्युररक्तानि इति गृ. रत्ना., ४३३, ना. को
7 आपः शस्त्रं विषं गृ. र., ४३४

मद्यं नीलीं च लाक्षाञ्च सर्वांश्चैकशफांस्तथा ॥
त्रपु सीसं[1] तथा लौहं तैजसानि च सर्वशः ।
वालांश्चर्म[2] तथाऽस्थीनि [3]वसाः स्नावानि रोचनाम् ॥

'विट्पण्यं'[4] विशां पण्यम् । 'उद्धृतोद्धारं' उद्ध्रियत इति उद्धारो मांसादि तदुद्धृतम् । 'रसा' अत्र माधुर्यादि-षड्रसप्रधानानि द्रव्याणि । 'अपोहेत' त्यजेत् । 'कृतान्नं' पक्वान्नम् । 'अश्मानः' पाषाणाः पद्मरागाद्याः । रसत्वेन लवणादीनां निषेधे सिद्धे पुनर्निषेधो दोषातिशयज्ञापनार्थः 'स्नावानि' स्नायूनि ।

याज्ञवल्क्यः[5]

फलोपलक्षौमसोममनुष्यापूपवीरुधः ।
तिलौदनरसक्षार[6]दधि क्षीरघृतं जलम् ॥
शस्त्रासवं मधूच्छिष्टं मधुलाक्षाश्मबर्हिषः[7] ।
मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ॥

1 त्रपुसीसे गृ. र., ४३४

2 चर्मांस्तथास्थीनि वसाः इति गृ. रत्ना., ४३४

3 सस्नायूनि विवर्जयेत् इति मुद्रितमानवे

4 विट्पण्यं वैश्यविक्रेयं गृ. र., ४३४

5 ३. ३५

6 क्षारान् गृ. र., ४३५

7 शस्त्रासवमधूच्छिष्टमधुलाक्षाः सबर्हिषः इति या. अप., ९३१

कौशेयनीललवणं[1] मांसैकशफसीसकम् ।
शाकान्यौषधिपिण्याकपशुगन्धांस्तथैव[2] च ॥
वैश्यवृत्त्याऽपि [3]जीवंस्तु विक्रीणीत न जातुचित् ।

'वीरुधो' गुडूच्यादयः । 'क्षारा' यवक्षारादयः ।

कुसुम्भं[4] [5]नालिकेरं च वृन्ताकं [6]पूतिकं तथा ।
सोमः श्लेष्मातको यज्ञस्तोयं धर्मश्च सर्वशः ॥

शङ्खलिखितौ

एवमप्यजीवन् वैश्यवृत्तिमेवोपजीवेत्तत्र संवत्सरसत्राणामाधारमुद्धृत्य शेषेण द्रव्यमाहरेत् । अन्यत्र पुष्परसगन्धमद्यमांसौदनतिलशाकदधिपयःसोमजलमधुनीलकौशेयपानभक्ष्यजतुलोहपाषाणकुतपशस्त्रविषमानुषक्षौमकृष्णाजिनैकशफप्रभृतिभ्यः ।

'संवत्सरसत्राणा'मिति संवत्सरं यावत् अवश्यकर्तव्यधर्मार्थं धनमवस्थाप्य 'शेषेण' वाणिज्येन ? वाणिज्यं कुर्यात् ।

1 नीललवणमांसैकशफशीशाकान् इति गृ. रत्ना., ४३५ ; नीललवणमांसैकशफ ना. को.

2 शाकान्यौषधि गृ. र., ४३५ ; शाकाद्रौषधिपिण्याकपशु या. अप., ९३१

3 जीवन्नो विक्रीणीत कदाचन इति या. अप., ९३१ ; या. वी., ८१६

4 यमः कुसुम्भम्—ना. को

5 नारिकेलं गृ. र., ४३५

6 पौतिकं गृ. र., ४३५

ब्राह्मणानुवृत्तौ गौतमः[1]

तस्यापण्यं [2]गन्धरसकृतान्नतिलमांसक्षौमाजिनानि[3] रक्तानि निर्णिक्ते वाससी क्षीरं सविकारं मूलफलमौषधं मधुमांसतृणोदकापथ्यानि, पशवश्च हिंसासंयोगे पुरुषवशाकुमारीवेहतश्च नित्यं भूमिव्रीहियवाजाव्यश्वऋषभधेन्वनडुहश्चैके ।

'अपथ्यं' विषादि । 'वशा' वन्ध्या गौः । 'कुमारी' अल्पवयस्का गौरेव । 'वेहत्' गर्भघातिनी गौः ।

अपण्यमित्यनुवृत्तौ वसिष्ठः[4]

ग्राम्यपशूनामेकशफाः । केशिनश्च सर्वे [5]चाऽऽरण्याः पशवो वयांसि दंष्ट्रिणश्च ।

1 १. ७. ८

2 गन्धरसं कृतान्नमाषक्षौमाजिनानि । रक्तनिर्णिक्ते वाससी क्षीरं मूलकं फलमौषधं गृ. र., ४३५

3 पिण्याकशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी, क्षीरं सविकारं, मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि, नारीपुरुषवशाकुमारीवेहतश्च नित्यं, व्रीहियवजातयश्च वृषभधेन्वनडुहश्चैके इति या. अप., ९३१ ; ना. को.

4 ओषधीनां रसः ना. कोशे अधिकः पाठः

5 वारण्याः, अविहिता ब्राह्मणस्य वाणिज्या, यदि व्यवहरेत् पण्यानामपण्यानि व्युदस्येत्, मनुष्यान् रसान् गन्धानन्नं चर्म गवां वशाः श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशवतिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् इति या. अप., ९३२

आपस्तम्बः[1]

अविहिता[2] वाणिज्या ब्राह्मणस्य । यदि व्यवहरेत् पण्यानामपण्यानि व्युदस्यन् । मनुष्यान् [3]रसान् नागान् गन्धान् अन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च। तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ।

'पण्यानामपण्यानि व्युदस्यन्' पण्यानां व्रीह्यादीनां अपण्यानि व्युदस्यन् अपनयन् । 'श्लेष्म' चर्मादिसन्धानहेतुर्वृक्षनिर्यासः । 'तोक्म' ईषद्विरूढं बीजम् । 'किण्वं' सुराकारणद्रव्यम् । 'सुकृता' सद्भिहिता । धान्यस्य मध्ये तिलतण्डुला इत्यर्थः ।

पैठीनसिः

विद्यापूर्तमिष्टं गावः [4]शङ्ख्श्चोर्णा चेत्यविक्रेयाणि ।

अविक्रेयाणि ब्राह्मणेन इत्युपक्रम्य उशनाः

शुक्तिविषतुषकुतपसलिलसोमगन्धक्षौमरक्तवस्त्रकौशेयचर्मकम्बलप्रभृतीनि ।

1 १. २०. १०–२३

2 ता ब्राह्मणस्य वाणिज्या । आपदि–व्यवहरेत इति मु. आ. ध. पाठः

3 रसान् रागान् गन्धानन्नं चर्म गवां वशां श्लेष्मचर्मादि तोष्मकील्वे पिप्पलिमरीचे इति गृ. रत्ना., ४३६

4 ऊर्णाश्चेति विक्रेयाणि गृ. र., ४३६

'कुतपो' नेपालकम्बलः ।

बौधायनः[1]

पितॄन् वा एष विक्रीणीते यस्तिलान्विक्रीणीते । प्राणान्वा एष विक्रीणीते यस्तण्डुलान् विक्रीणीते । सुकृतानंशान् वा एष विक्रीणीते यः पणमानो दुहितरं ददाति ।

अपण्यमित्यनुवृत्तौ वसिष्ठमनुपैठीनसिबौधायनाश्च[2] श्लोके

धान्यानां तिलानाहुः ।

अथाऽप्युदाहरन्ति

भोजनाभ्यञ्जनादानाद्यदन्यत् कुरुते तिलैः[3] ।
कृमिर्भूत्वा[4] स विष्ठायां पितृभिः सह मज्जति ॥

यमः[5]

रसगन्धतिलानां च लाक्षालवणसर्पिषाम् ।
भूगोग्निक्षीरमेषाणां तैलाश्वजलवाससाम् ॥
मांसकृष्णाजिनानां च विक्रेता सर्वविक्रयी ।
स्नेहद्रव्यरसानां च सत्वानां जीवतामपि ॥

1 २. २. १४, १५

2 २. २९ ; १०. ९१

3 २, २, १३.

4 श्वविष्ठायां कृमिर्भूत्वा इति मु, बौ–पा कृमीभूतश्च विष्ठायां, इति या. अप., १३२

5 यम इति गृ. रत्नाकरे न दृश्यते

विक्रेता दानपुण्यानां प्रोच्यते भ्रूणहा बुधैः ।
वक्ता च दानपुण्यानां [1]शपथे सोऽपि विक्रयी ॥
त्रपुसीसायसानां च धातूनामपि सर्वशः ।
वज्रशुक्तिप्रवालानां मणीनां माक्षिकस्य च ॥
प्रतिरूपककर्ता च भ्रूणहा सोऽपि कथ्यते[2] ।

'स्नेहद्रव्यं' तिलादि । 'सत्वानां' प्राणिनाम् । 'शपथे' शपथकरणे । दानपुण्यानां वक्तेत्यन्वयः ।

महाभारते

विक्रयं हीह सोमस्य गर्हयन्ति मनीषिणः ।
ये[3] वैनं क्रीणते तात ये च विक्रीणते जनाः ॥
ते वै वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः ।

छागलेयः

न वेदविक्रयं कुर्यादग्निविक्रयमेव च ।
यो धर्मविक्रये पुंसां नरकः [4]स प्रजायते ॥
तस्मान्न विक्रयो [5]वेदे अग्निहोत्रे तथैव च ।
प्रख्यापनं प्राध्ययनं[6] प्रश्नपूर्वः प्रतिग्रहः ॥

1 शपथे पुण्यविक्रयी इति गृ. रत्ना., ४३७
2 अर्धमिदं 'विक्रयं हीह सोमस्य' इत्यनन्तरं दृश्यते गृहस्थरत्नाकरे ।
3 ये चैनं क्रीणते तात ये च इति गृ. रत्ना., ४३७
4 सोऽत्र गृ. र., ४३८, या अप., ९३२, ना. को
5 धर्म्यः इति गृ. रत्ना., ४३८ ; या अप., ९३२
6 प्राध्यापनं प्राध्ययनं प्रश्नपूर्वः इति या अप., ९३२

याजनाध्यापने वादः षड्विधो वेदविक्रयः ।

अनन्तरश्लोके व्यासोऽपि ।

'अग्निहोत्रशब्दः' अत्र त्रेताग्निपरः । 'याजनाध्यापने' चाऽत्र भृतिपूर्वके । 'वादः' अत्र पणपूर्वकः ।

भविष्यपुराणे

वेदविक्रयजं नेष्टं स्त्रिया यच्चार्जितं धनम् ।
न देयं पितृदेवेभ्यो यच्च क्षीबात् खगाधिप ॥
अनुयोगेन यो दद्याद्ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥
वेदाक्षराणि यावन्ति [1]नियुज्यन्तेऽर्थकारणात् ।
तावतीर्भ्रूणहत्यास्तु[2] वेदविक्रय्यवाप्नुयात् ॥

यमः

गवां विक्रयकारी तु गवि रोमाणि यानि तु ।
तावद्वर्षसहस्राणि [3]गवां गोष्ठे कृमिर्भवेत् ॥

शङ्खलिखितौ

न विक्रीणीयादविक्रेयाणि तिलदाधिक्षौद्रलवणलाक्षामद्यमांसकृतान्नस्त्रीपुरुषहस्त्यश्वगोवृषगन्धरसक्षौमकृष्णाजिनसोमोदकनीलविक्रयात् सद्यः पतति ब्राह्मणः ।

1 नियुञ्ज्यात् गृ. र., ४३८

2 तावती भ्रूणहत्या वै इति गृ. रत्ना., ४३८

3 गव्यगोष्ठे या. अप.,

'नीलं' नीलवर्णवस्त्रम्

हारीतोऽपि । [1]मनुवसिष्ठशातातपाश्च श्लोके

न त्वेवाऽनाविक्रेयविक्रयी स्यात् ।

एवं त्वाह

[2]सद्यः पतति मांसेन लाक्षया लवणेन च ।

मनुः

इतरेषामपण्यानां[3] विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं [4]नियच्छति ॥

'इतरेषां' लाक्षालवणमांसक्षीरेभ्योऽन्येषाम् । 'नियच्छति' प्राप्नोति ।

हारीतः

यस्तु सम्भृत्य सम्भारं दुर्भिक्षं समुदीक्षते ।

1 १०. ९२; २. २७

2 सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥
इतरेषामपण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं प्रयच्छति ॥
श्लोकद्वयमिदं मनुहारीतयोरिति गृ. रत्नाकरे दृश्यते; त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् । याज्ञवल्क्यः लाक्षालवणमांसानि पतनीयानि विक्रये । पयो दधि च मद्यं च हीनवर्णकराणि च । मनुः— इतरेषां तु इति ना. को

3 इतरेषां तु पण्यानां उ. मा

4 निगच्छति या. वी., ८१८

हीनार्घमानदाता वै प्रोक्तो दुर्भिक्षकण्टकः ॥
हीनसङ्करमानैस्तु यश्चैव हरते मलम् ।
स मलः प्रोच्यते प्राज्ञैः प्रजानां मलहारकः ॥

'हीनार्घमानदाता' हीनार्घेण मानेन बहुमूल्यमादाय विक्रेतेत्यर्थः । 'दुर्भिक्षकण्टकः' दुर्भिक्षे जनानां कण्टकः शत्रुः । 'हीनसङ्करमानैः' हीनेनाऽल्पेनाऽधिकं 'सङ्करेणा'-पद्रव्यमिश्रीकरणेन । 'मानेने'ति विशेषणेन मेयद्रव्याल्पत्वहेतुना । एतैर्यो हरते मलं मलिनं द्रव्यं, पापहेतुत्वात् ।

अथ लाङ्गलस्य गवादिहेतुप्रतिपादकं मन्त्रमभिधाय

वासिष्ठः[1]

कथं हि लाङ्गलमुद्वपेत् अन्यत्र धान्यविक्रयात् ।

'उद्वपेत्' उत्पादयेत् गवादीनिति शेषः ।

मनुः[2]

काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलान् शुद्धान् धर्मार्थ[3]मचिरस्थितान् ॥

'अचिरास्थितान्' अर्घाधिक्यार्थं चिरमनवास्थितान् । 'धर्मार्थं' धनसाध्यावश्यककर्मसिद्ध्यर्थम् ।

अशक्तौ भेषजस्याऽर्थे यज्ञहेतोस्तथैव च ।

1 २. ३६
2 १०. ९०
3 धर्मार्थान् गृ. र. ४४०

यद्यवश्यं [1]च विक्रेयाः तिला धान्येन तत्समाः ॥

इति [2]नारदवचनात् ।

तथा

रसा रसैः निमातव्या न त्वेवं लवणं रसैः ।
कृतान्नं चाऽकृतान्नेन तिला धान्येन तत्समाः ॥

'कृतान्नं'ओदनं सक्त्वादि । 'अकृतान्नं' व्रीह्यादि । 'निमातव्याः' परिवर्तयितव्याः ।

गौतमः

नियमनं[3] रसानां रसैः । पशूनां च । लवणकृतान्नयोस्तिलानां च । समेनाऽऽमेन तु पक्वस्य सम्प्रत्यर्थे ।

'पशूनां च' पशुभिरित्यर्थः । 'सम्प्रत्यर्थे' आमस्य तत्कालोपयोगे; यस्यैव पक्वान्नविक्रयो निषिद्धस्तं प्रत्येव प्रतिप्रसवात् ।

न[4] तिलास्तैलतां यान्ति न गावो यान्ति क्षीरताम् ।
रसस्तेषामविक्रेयो[5] यथा गावस्तथा तिलाः ॥

1 तु विक्रेयास्तिला धान्येन तत्समा इति या. अप., ९३३, गृ. रत्ना., ४४० ना. को

2 ४. ६६

3 विनियमस्तु गृ. र., ४४०

4 यमः—न तिलाः इति गृ. रत्ना., ४४०, ना. को

5 रसास्तेषां न विज्ञेयाः, गृ. र., ४४०

हारीतः

नियमस्तु रसादीनां विक्रयो नैव दुष्यति ।
यज्ञार्थं दक्षिणानां च प्रजापतिवचो यथा ॥

रसादीनां नियमो न दुष्यति । यज्ञार्थं दक्षिणानां विक्रयोऽपि न दुष्यतीत्यर्थः ।

वसिष्ठः[1]

रसा रसैः समतो हीनतो वा निमातव्या न त्वेव लवणं रसैः । तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्तकेन ।

'समतो' [2]हीनतो वा इति तृतीयान्तात्तसिः । तेन समैर्न्यूनैर्वा परिवर्तनीया रसाः, न त्वधिकं ग्राह्यमित्यर्थः ।

तिलतण्डुलानुवृत्तौ आपस्तम्बः[3]

[4]विहितश्चैषां मिथो [5]नियमोऽन्नेन चाऽन्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानामक्रीतपण्यैर्व्यवहरेत् । मुञ्जबल्बजैस्तृणकाष्ठैरविकृतैर्नात्यन्तं [6]अन्ववस्येत् तत्र वृत्तिं प्राप्य विरमेत् ।

'अक्रीतपण्यैः' क्रयव्यतिरिक्तप्रकारोपपन्नैः । मुञ्जब-

1 २. ३७

2 हीनतो वा इति गृ. रत्ना., ४४१, ना. को

3 २. २०, १४

4 अविहितः मु. पु. पा

5 विनिमयः गृ. र., ४४१

6 अनुरमेत तच्च वृत्ति इति गृ. रत्ना., ४४१ ; अनुरज्येत ना. को

ल्बजयोस्तृणशब्देनोपात्तयोरपि विक्रयाभ्यनुज्ञानार्थमुपादानम्। '[1]अन्ववस्येत्' आसक्तो भवेत्। 'वृत्तिं' मुख्यामिति शेषः।

बौधायनः[2]

तृणकाष्ठमविकृतं [3]विक्रेयम्।

अथाऽप्युदाहरन्ति

पशवश्चैकतोदन्ता अश्मा च लवणोद्धृतः।

एतद्ब्राह्मणतोऽपण्यं तन्तुश्चाऽरजनीकृतः[4] ॥ इति।

'अश्मा' पाषाणः। 'लवणोद्धृतो' लवणादन्यः। अयं चाऽश्मनो विक्रयोऽत्यन्तापदि बोद्धव्यः, स्मृत्यन्तरे विक्रयनिषेधात्। 'अरजनीकृतः' कुसुम्भादिभिः न रक्तीकृतः।

नारदः[5]

ब्राह्मणस्य तु विक्रेयं [6]सूक्ष्मं दारु तृणानि च।

1 अनुरज्येत—ना. को

2 २, २–१७

3 विज्ञेयम् मु. बौ–पा, गृ. र. ४४२

4 २. २. १७

5 ब्राह्मणेन तु विक्रेयं शुष्कं दारु तृणानि च। ४–६४, ६५
गन्धद्रव्यैरकावेत्रं तूलस्तूलीकृतादृते ॥
स्वयं शीर्णं च विदलं फलानां बदरेङ्गुदे।
रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत् ॥ इति या. अप., ९३३–९३४
ब्राह्मणस्य च विक्रेयं शुष्कं दारु तृणानि च।
गन्धद्रव्यैरवा वेत्रं मूलतूलकुशादृते ॥
स्वयं विशीर्णं विदलं फलानां बदरेङ्गुदे ॥ इति गृ. र., ४४२

6 शुष्कं. मु. नार

गन्धद्रव्यैरेरका च गुरुतूलकुशादृते ॥
स्वयं शीर्णं च विदलं फलानां बदरेङ्गुदे ।
रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत् ॥

'एरका' तृणविशेषः । 'तूलं' शाल्मल्यादिः । 'विदलं' वल्कलम् ।

शङ्खलिखितौ

[1]शुद्धकाष्ठबदरेङ्गुदबिल्वकार्पासिकसूत्रैरविकृतैर्द्रव्यमाहरेत् ।

हारीतः

पूर्ववृत्तिषु[2] अजीवन् शुष्ककाष्ठतृणाविक्रयं वा कुर्यात् । गा एव वा रक्षेत् ।

शङ्खलिखितौ

आपद्गतो[3] ब्राह्मणः कामं जिजीविषुः एकान्तरितां वृत्तिमास्थाय [4]पण्यं पण्यमिति ब्रूयात् । सकृदेवैकं[5] मूल्यमिच्छेत् ।

1 शुष्क या. अप., ९३४
2 पूर्ववृत्तेश्चाजीवन् या. अप., ९३३
3 आपदि कामं ब्राह्मणो जिजीविषुरेकान्तरितां वृत्तिमास्थाय न पण्यं पण्यमिति ब्रूयात् । सकृदेवोक्त मूल्यमिच्छेत्, या. अप., इति. गृ. रत्ना., ४४३, गा वा रक्षत् या. अप., ९३४
4 वृत्तिमास्थाय पण्यमिति ब्रूयात् । सकृदेवोक्तमूल्यमिच्छेत् गृ. र., ४४२
5 वोक्तं मूल्यं ना. को

## अथ पाशुपाल्यम्

तत्र शङ्खलिखितौ

गावो[1] रक्षेत्तासु नाऽपीतासु पिबेत् न तिष्ठन्तीषूपविशेत्। न स्वयमुत्थापयेत् शनैरार्द्रशाखया पृष्ठतोऽभिहन्यात् । नाऽतीर्थेन[2] विषमेनाऽल्पोदके चाऽवतारयेत् । बालवृद्धरोगार्ताः शान्ता उपासीत । शक्तितः प्रतीकारं च कुर्य्यात् । गवामेष धर्मोऽन्यथा विप्लवः ।

'उपासीत' उपचरेत् । गवामेष धर्मो नाऽजादीनाम् ।

ब्रह्मपुराणे

परिभूयाऽथ गां मोहादवीचि नरके नरः ।
गोभिर्निश्वासनिर्भिन्नो दह्यते नरकाग्निना ॥
तस्मान्मार्गं[3] नयेताऽऽशु क्षीरिवृक्षोत्थवल्कलैः ।
'हे श्रीमातस्त्वमायाहि '[4]वत्साये'ति ब्रुवन् वचः ॥
गोब्राह्मणानां [5]सङ्ग्रामे निहतः शाङ्करं पदम् ।
योऽपि कश्चिन्नरो याति किं पुनर्ब्राह्मणादयः ॥

1 गावो रक्षेत् तासु पीतासु पिबेत् । अवतिष्ठन्तीषु उपविशेत् । न स्वयं मुत्थापयेत् । शनैः आर्द्रशाखया पृष्ठतोऽभिहन्यात् ।

2 नातीर्थेन विषमेनान्योदके अवतारयेत् । बालवृद्धकृशरोगार्ताः शान्ता उपासीत गृ. र., ४४३; नातीर्थेन विषमेणाल्पोदकेन वा तारयेत् । बालवृद्धरोगार्ताः शान्ता उपावेशयेत् । शक्तितः प्रतीकारं कुर्यात् । गवामेष धर्मोऽन्यथा विप्लवः इति या. अप., ९३४

3 मार्गं नयेत् तासु गृ. र. ४४३

4 त्वं मां पाहि गृ. र., ४४३

5 ब्राह्मणार्थं संग्रामे निहतः शाङ्करं पदं इति गृ. रत्ना., ४४३

१२

# अथ कुसीदम्

अत्र वाक्येष्वापद्गतब्राह्मणाधिकारो द्रष्टव्यः ।

तत्र नारदः[1]

आपदं निस्तरेद्वैश्यः कामं वादूर्धुषिकर्मणा ।
आपत्स्वपि[2] हि कष्टासु ब्राह्मणानां न वार्धुषम् ।

वसिष्ठः पैठीनसिश्च[3] श्लोके

ब्राह्मणराजन्यौ वार्धुषिकं न दद्याताम् ।

अथाऽप्युदाहरन्ति

समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति ।
स वै वादूर्धुषिको नाम [4]ब्रह्मवादिषु गर्हितः[5] ॥

अन्वन्यया (?) कलया उद्धृत्य ऋणं गृहीत्वा ॥

1 ४. १११

2 आपत्स्वपीह कष्टासु ब्राह्मणस्य गृ. र., ४४४ मु. नार

3 २. ४०

4 स वै वार्धुषिको ज्ञेयः इति गृ. रत्ना., ४४४

5 इतआरभ्य 'समर्घं यः समादाय' इति यम वचन पर्यन्तं ना. कोशे न दृश्यते

तथा च बौधायनः

समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति[1] ।
स गृहीतवर्णं महार्घं यः प्रयच्छति (?) ॥

यमः

समर्घं[2] यः समादाय महार्घं यः प्रयच्छति ।
स वै वार्धुषिको [3]नाम ये तु वृध्या प्रयुञ्जते ॥

'समर्घं' अत्रानुज्ञातं यथाप्रचरन्मूल्यम् । 'महार्घं' चात्र शास्त्रानुज्ञातमूल्यातिरिक्तं मूल्यम् । वाणिज्यमात्रस्याऽऽपदि ब्राह्मणस्याऽनुज्ञानात् । 'वृद्ध्या प्रयुञ्जते' अन्नमिति शेषः ।

बृहस्पतिः

भोगो[4] यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते ।
मूलं च सोदयं [5]पश्चाद्वाद्‌र्धुषं तद्विगर्हितम् ॥

'भोगो' द्विगुणीभूतधनादधिकवृद्धिग्रहणम् । 'चक्रवृद्धिः' कलायामेव या कला । 'सोदयं' यावत् मूल्यं ग्राह्यत्वेन व्यवस्थापितं तावतोऽधिकम् ।

1 गृहीत्वार्णं महार्घं सम्प्रयच्छति ।
स वै वार्धुषिको ज्ञेयः सर्वधर्मेषु गर्हितः गृ. र., ४४४

2 समर्घं पण्यमाहृत्य गृ. रत्ना., ४४४

3 ज्ञेयो ये तु वृध्या इति गृ. र., ४४४

4 भोगाय गृ. र., ४४५

5 दद्यात् , वार्धुष्यं इति गृ. रत्ना., ४४५

नारदः[1]

वृद्धिस्तु योक्ता धान्यानां वार्धुष्यं तदुदाहृतम् ।

पैठीनसिः

वार्धुष्यं परिहरेत् ।

अथाऽप्युदाहरन्ति

वार्द्धुषिर्भ्रूणहा चैव तुलायामवरोपितौ ।
आतिष्ठत् भ्रूणहा कोट्यां वार्द्धुषिस्समकम्पत ॥ इति ।

वार्द्धुषिकः पूर्वमुक्तः ।

बृहद्वृद्ध्यनन्तरं हारीतः

ब्रह्मघ्नं वृद्धिजीवं च तुलायां समधारयत् ।
आतिष्ठत् ब्रह्महा कोट्यां वृद्धिजीवस्त्वकम्पत ॥

छागलेयः

न कुर्याद्ब्राह्मणो वृद्धिं भ्रूणघाताद्विशिष्यते ।
भ्रूणहत्यां च वृद्धिं च तुलायां समतोलयत् ॥
न पापं भ्रूणहन्तॄणां न पापं वृषलीपतेः ।
न पापमग्निदातॄणां न पापं गुरुहिंसके ॥
सर्वपापाधिकां वृद्धिं भ्रूणघ्ना समतोलयत् ।

मनुः[2]

ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत् ।

1 ४. ११०
2 १०. ११७

कामं[1] तु सुखधर्मार्थं दद्यात्पापीयसेऽल्पकम् ॥

'वृद्धिं' निन्दिताम्। 'धर्मार्थं' [2]अवश्यकृत्यार्थम्। 'पापीयसे' हीनजातीयाय। 'अल्पकं' यावत्या धनवृद्ध्या आवश्यकं कर्म सिद्ध्यति तावत्या।

ब्राह्मणराजन्यानुवृत्तौ वसिष्ठः[3]

कामं वा परिलुप्तकृत्याय[4] पापीयसे दद्याताम्।

पैठीनासिः

कामं तु पापीयसे दद्याद्दश इत्येके। न ज्यायसीं वृद्धिमुपाददीत। न त्वेव कनीयसीम्।

दशपणसंख्यया एकैकस्मै पापीयसे दद्यादित्यर्थः। शास्त्रविहितकलापेक्षया वृद्धेर्न्यूनत्वमधिकत्वं च ज्ञेयम्।

वसिष्ठः[5]

वसिष्ठवचनप्रोक्तां वृद्धिं वार्द्धुषिके शृणु।
पञ्च माषास्तु[6] विंशत्या एवं धर्मो न हीयते ॥
विंशतिकार्षापणानां पञ्चमाषा वृद्धिर्ग्राह्या।

1 कामस्तु खलु धर्मार्थमिति ना. को

2 अरण्यकृत्यार्थं ना. को

3 २. ४३

4 विलुप्तकृत्याय गृ. र., ४४६

5 २. ५०

6 पञ्च माषाश्च विंशत्यां गृ. र., ४४६

"माषो विंशतिभागश्च ज्ञेयः कार्षापणस्य तु"

इति नारदवचनात्। 'पञ्च माषा' अशीतिभागतुल्या भवन्ति। इयं च वृद्धिः प्रतिमासं ग्राह्या।

"अशीतिभागं गृह्णीयात् मासाद्वार्द्धुषिकः शते"

इति मनुवचनात्।

बृहस्पतिः[1]

अशीतिभागो वर्धेत [2]लाभो द्विगुणतामियात्।
प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः॥

व्यासः

सबन्धे भाग [3]आशीतिः साष्टभागः सलग्नके।
निराधाने द्विकशतं मासलाभ उदाहृतः॥

[4]'आशीतिः' अशीतितमः। अयमेव च सलग्नके स्वकीयाष्टमभागसहितः साष्टभागः। 'निराधाने' बन्धकरहिते।

मनुः[5]

द्विकं शतं [6]प्रगृह्णीयात् सतां धर्ममनुस्मरन्।

1 १. ९. २२
2 . लाभे ना. को
3, 4 आशीतः गृ. र., ४४७ ना. को.
5 ८. १४१, मनुरिति न दृश्यते गृ. रत्ना., ४४७
6 प्रगृह्णीत गृ. र., ४४७

द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ॥

यथा [1][ अशीतिभागं गृह्णानो न भवत्यर्थकिल्बिषी तथा ] द्विकमपि शतं गृह्णानो न [2]दोषभाक् ।

अत्र च सबन्धकविषयतया व्यवस्था । 'सबन्धे भाग आशीतिः' [3]इत्यादिव्यासवचनानुसारात् ।

हारीतः

[4]पुराणपञ्चविंशत्यां मासे अष्टपणा वृद्धिरेवं षड्भिर्मासैश्चतुर्भिर्वर्षैर्द्विपर्यागतं सन्तिष्ठते । एषा वृद्धिर्धर्मवृद्धिर्नाऽनया धर्मात् च्यवते ।

'पुराणं' षोडश पणाः । 'पणः' काकिणीचतुष्टयम्, तथैव प्रसिद्धेः । 'द्विपर्यागतं' द्विगुणीभूतम् । 'सन्तिष्ठते' व्यवतिष्ठते न पुनर्वर्धत इति यावत् ।

मनुः[5]

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम्[6] ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः[7] ॥

1 [ ] ना. कोशे अधिकः पाठः

2 नैव गृ. र., ४४७

3 इति व्यास इति ना. को

4 पुराणे ना. को

5 ८. १४२, वसिष्ठवचनमिदमिति या. अपरार्कः., ६४२

6 स्मृतम् इति या. अप., ६४२

7 आनुपूर्वशः इति गृ. र., ४४७

'द्विकं' द्विवृद्धिर्दीयते यस्मिन् मूले तत्। एवं त्रिकाद्यपि। 'समं' मात्रयाऽप्यनधिकम्।

याज्ञवल्क्यः[1]

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा॥

'अन्यथा' अबन्धके।

अथ वसिष्ठः[2]

अथोत्तमर्णोऽधमर्णकाद्यथा दत्तमर्थं गृह्णीयाद् द्विकं त्रिकं चतुष्कं पञ्चकं शतं वर्णानुक्रमेण प्रतिमासम्।

गौतमः[3]

नाऽतिसांवत्सरीमेके।

मनुः[4]

नातिसांवत्सरीं वृद्धिं न [5]वाऽदृष्टां पुनर्हरेत्।
चक्रवृद्धिः कलावृद्धिः कारिता कायिका च या॥

मासादारभ्य संवत्सरं यावत् वृद्धिः परिमाणतोऽपि निरूपयितव्या। मासेन यद्वर्द्धते संवत्सरेण तदित्येवं

1 २. ३७
2 २. ४८
3 २. ३. २७
4 ८. १५३
5 न चादृष्टं ना. को

प्रयोगः कर्तव्यो न त्वधिकस्य । 'अदृष्टां' शास्त्रेणाऽदृष्टां पञ्चकादधिकां वृद्धिं[1] गृह्णीयादित्यर्थः। चक्रवृद्ध्यादिवृद्धयोऽपि न ग्राह्याः ।

तत्स्वरूपं तु याज्ञवल्क्योक्तम् । तथा च

वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु मासिका ।
इच्छाकृता कारिता स्यात् कायिका कायकर्मणि ॥

बृहस्पतिः[2]

बहवो वर्तनोपाया ऋषिभिः परिकीर्तिताः ।
सर्वेषामपि चैतेषां कुसीदमधिकं विदुः ॥
अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः ।
कृष्यादिके भवेद्धानिः सा कुसीदे न विद्यते ॥
शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा ।
उष्णे [3]वर्षे निशीथे वा वर्द्धनं न निवर्तते ॥
दिशं गतानां या वृद्धिर्नानापण्योपजीविनाम् ।
कुसीदं कुर्वतः सम्यक् [4]साऽस्मिन् तस्यैव जायते ॥

1 वृद्धिं न गृह्णीयात् ना. को

2 ५. ९. १२

3 शीतेऽतिवर्षे वा वर्धनं न निवर्तते इति गृ. रत्ना., ४४८

4 हानिर्नास्योपजायते ना. को

# १३

# अन्या आपद्वृत्तयः

अथाऽन्या आपद्वृत्तयः

तत्र मनुः[1]

विद्या शिल्पं भृतिः सेवा गोरक्षं[2] विपणिः कृषिः ।
धृतिर्भैक्षं[3] कुसीदं च दश जीवनहेतवः ॥

'विद्या' वेदविद्याव्यतिरिक्ता गारुडादिविद्या । 'शिल्पं' चित्रादिकर्म। 'भृतिः' वेतनम् । 'विपणिः' वाणिज्यम् । 'धृतिः' सन्तोषः ।

याज्ञवल्क्यः[4]

कृषिः शिल्पं [5]धृतिर्विद्या कुसीदं शकटं गिरिः ।
सेवाऽनूपं[6] नृपो भैक्ष्यमापत्तौ जीवनानि तु ॥

1 १०. ११६

2 गोरक्ष्यं गृ. र., ४४९; या. अप., ९३६

3 भैक्ष्यं इति गृ. रत्ना., ४४८

4 ३. ४२

5 भृतिः ना. को

6 सेवानूपो इति या. अप., ९३६

बृहस्पतिः

जात्याणे[1] (?) शकटारागमयाञ्जावृद्धिर्वणिक्कृषिः ।
अनूपं पर्वतो राजा विपत्तौ जीवनानि तु ॥

'वणिक्' वाणिज्यम् ।

छागलेयः

शकटं [2]शाकिनी गावो [3]जालमस्पन्दनं वनम् ।
अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥

'शकटं' धान्यादिवहनभाटकद्वारेणोपजीव्यम् । 'शाकिनी' शाकवाटिका । 'जालं' मत्स्याहरणेन । 'अस्पन्दनम्' एकत्राऽवस्थानम् , व्ययाधिक्यविरहात् तृणादिलाभाच्च । 'वनं' फलमूलाद्याहरणेन । 'अनूपं' बहूदको देशः बिसशालूकाद्याहरणेन । 'पर्वतः' गैरिकाद्याहरणेन ।

हारीतः

युक्तभरमयोगक्षेमं पञ्चसूनमनो मन्यन्ते दशसूनं रात्रौ शतसूनं वर्षासु तस्मान्नाऽनसा रात्रौ चरेत् न वर्षासु । मासेनाऽनोवृत्तिः पततीति [4]धर्मविदोऽग्निदेवतातिथिगृहयज्ञोपकरणमनेन भवतीत्याहुः ।

1 यात्या गो शकटा राम याज्ना वृद्धिर्वणिक्कृषिः ना. को ; ५. २. २. मुद्रितबृहस्पतिस्मृतावपि न निष्कृष्टपाठ उपलभ्यते

2 शकटः शाकिनी भावो जालमस्पन्दनं वनम् इति या. वी., ८२२

3 यानं ना. को

4 देवगवातिथि ना. को

शतमूलम् इक्षुपत्रं तद्यज्ञार्थं कुर्यात्। 'भरः' अत्र उपरि स्थाप्यमानो व्रीह्यादिसमूहः। 'अयोगक्षेमम्' अयोगशाकटिकान्वितत्वेन। 'अनः' शकटम्। सयोगक्षेममपि रात्रौ दशमूलम्। एवं शतमूलं वर्षासु। अग्न्युपकरणसमित्पुष्पयवसव्रीह्याद्याहरणेन । अनेन निष्पापः यज्ञार्थे कुर्यान्न वृत्याद्यर्थम्।

गौतमः[1]

सर्वथा [2]वृत्तिरशक्तावशौद्रेण। तदप्येके प्राणसंशये। तद्वद्वर्णसङ्कराभक्ष्यनियमस्तु । प्राणसंशये [3]ब्राह्मणोऽपि शस्त्रमाददीत।

'सर्वथा' प्रतिषिद्धविक्रयवृत्तिसङ्करादिभिः। 'अशक्तौ' नित्यनैमित्तिकानुष्ठानासम्पत्तौ । 'अशौद्रेण' शूद्रकर्मव्यतिरिक्तेन उच्छिष्टभक्षणशिल्पादिना। 'तदपि' शौद्रकर्मापि। 'प्राणसंशये' आत्मनोऽवश्यभर्तव्यानां चेति शेषः। 'तद्वद्वर्णसङ्करः' सहासनादिः। 'अभक्ष्यं' लशुनादि। 'नियमो' निवृत्तिः। 'शस्त्रमाददीत' प्राणधारणार्थमिति शेषः।

अङ्गिराः

व्याधितस्य दरिद्रस्य कुटुम्बात् प्रच्युतस्य च।
अध्वानं वा प्रपन्नस्य भिक्षाचर्या विधीयते॥

इदं व्याधितत्वादि सर्वप्रकारपाकासम्भवोपलक्षणपरम्।

1 १. ८. २२

2 अशक्तावशूद्रेण गृ. र., ४४९

3 ब्राह्मणः शस्त्रमाददीत इति गृ. रत्ना., ४४९

हारीतः

चातुर्वर्ण्यं[1] तु वा भैक्ष्यमेकान्नं वा द्विजादिषु ।
भैक्षमेव[2] प्रशंसन्ति न त्वेकान्नं द्विजातिषु ॥
स्वकर्मोपार्जितं भैक्ष्यं विधिना त्वनसूयया ।
वायुतुल्यं प्रशंसन्ति ऋषयो [3]धर्मकोविदाः ॥

'स्वकर्मणा' यथोक्ताध्ययनादिप्रयोजनेन । 'विधिना' 'यावदर्थममायये'त्यादिनिरूपितप्रकारेण । 'वायुतुल्यम्' शुद्धत्वेन ।

मनुः[4]

तथैव सप्तमे[5] भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन कर्तव्यं[6] हीनकर्मणः ॥
खलात् क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते ।
आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ॥
ब्रह्मस्वं[7] न च हर्तव्यं क्षत्रियेण कदाचन ।

1 चतुर्वर्णेषु वा गृ. र., ४५०
2 अर्धमिदं गृ. रत्नाकरे न दृश्यते
3 न्याय गृ. र., ४५०
4 ११. १६
5 सप्तमं भक्तं या. अप., ९३८
6 हर्तव्यं या. अप., ९३८ ; या. वी., ८२२ ; ना. को
7 ब्राह्मणस्वं न या. अप., ९३८

दस्युनिष्क्रिययोस्तु[1] स्वमजीवन् हर्तुमर्हति ॥

'अश्वस्तनविधानेन' एकदिनोपयोगेन। 'दस्युः' चौरः। 'निष्क्रियो' नित्यनैमित्तिकक्रियारहितः। तयोर्ब्राह्मणयोरपि हर्तव्यमित्यर्थः[2]।

याज्ञवल्क्यः[3]

बुभुक्षितस्त्र्यहं स्थित्वा[4] धान्यमब्राह्मणाद्धरेत्।
प्रतिगृह्य [5]तदाख्येयमभियुक्तेन धर्मतः ॥

'प्रतिगृह्य' गृहीत्वा।

द्रव्यादीनामित्यनुवृत्तौ गौतमः

सप्तमीं [6]चाभुक्तानि च (?)वाद्याप्यहीनकर्मभ्य आचक्षीत राज्ञा पृष्टः।

'सप्तमीं' भोजनवेलामिति शेषः।

1 निष्क्रिययोः स्वर्णं न जीवन् इति गृ. रत्ना., ४५१

2 तथा—

अलिङ्गी लिङ्गवेषेण यो वृत्तिमुपजीवति।
स लिङ्गिनं हरत्येनस्तिर्यग्योनौ च जायते ॥ इति गृ. रत्ना., ४५१
अधिकमुपलभ्यते

3 ३. ४२

4 हित्वा गृ. र., ४४१

5 तथा इति या. अप., ९३८

6 च भुक्तानिरयायोप्यहीकर्मभ्यः ना. को

हारीतः

आरोग्यवृत्तिः चिकित्सितमुपपतिवृषवैश्योपजीवनं चैतस्या वणिक्कैराटी वार्धुषिकी अनृती कितववृत्तिः[1] विवाद-प्रैष्यवृत्तिस्तार्किकाश्ववृत्तिः राजपौरुष्यं दम्भजीवनं कल्क-वृत्तिः। [2]परस्वापहरणं स्तेयवृत्तिः। वधबन्धोपजीवनप्रभृ-तयश्चैताः किल्बिषवृत्तयो भवन्ति। किल्बिषवृत्तयो निरया-नुशिष्टाः पापयोनिषु जायन्ते तस्मान्नासद्वृत्तिः स्यात्।

'उपपत्युपजीवनं'[3] भार्याजारोपजीवनम्। गवाश्वादेर्वृ-षभस्य मूल्येन तत्स्त्रीषूत्सर्जनम्[4] एषा तस्या नाम वृषवृत्तिः। 'वणिक्' पण्यविक्रयी। 'किराटी' घृततैलतण्डुलाद्यविक्रेयवि-क्रयी। कुसीदवृत्त्युपजीवित्वम् 'वार्धुषिकवृत्तिः'। एषा-नृतवृत्तिः। 'कितववृत्तिता' द्यूतवृत्तित्वम्। 'विवादवृत्तिः' कलहशौण्डतया जीवनम्। 'प्रैष्यवृत्तिः' सेवकः। 'तार्कि-को' हेतुवादजीवी छलादिकुशलः सद्विद्योपमर्दनेन यो जीवति। एषा चतुःप्रकाराऽश्ववृत्तिः। 'राजपौरुष्यं' राज-भयोपदर्शनेनोत्कोचग्रहणम्[5]। दम्भस्य व्यक्ताकल्क-ताच्छलेन परस्वापहरणं स्तेयवृत्तिः। 'निरयानुशिष्टाः' नरकयातनां लम्भिता इत्यर्थः।

1 वादप्रैष्यतार्किकाश्ववृत्तिः इति गृ. रत्ना., ४५१

2 परस्वाहरणं स्तेयवृत्तिर्वधबन्धोपपत्युपजीववृत्तयश्चैताः किल्बिषवृत्तयो निरयानुशिष्टाः गृ. र., ४५१

3 स्वभार्या ना. को

4 वैतस्या नाम वृत्तिः ना. को

5 उत्कोचादानं गृ. र., ४५२

देवलः

चिकित्स्यां ज्योतिषं रूपं शकटं तिलपीडनम् ।
सुरां तुलां च नाऽजीवेत्पुत्राचार्यत्वमेव च ॥
लाक्षामाञ्जिष्ठमांसानि मधुलोहविषाणि च ।
अजीवन्[1] वृषलोऽप्यार्यः कर्मणा तेन वर्जितः ॥

'रूपं' वेश्यादीनामिव जीवनोपायः । 'पुत्राचार्यता' आचार्यतया पुत्राद्धनादानम् ।

शङ्खलिखितौ

नाऽन्तरितां नाऽविशिष्टां नाऽधिकां न समां न हीनां न कुत्सितां नाऽनर्थकरीं वृत्तिं लिप्सेत् ।

'अन्तरिता' व्यवहिता । यथा क्षत्रियस्य शूद्रवृत्तिः । 'आविशिष्टा' विशुद्धप्रतिग्रहसम्भवे सत्यविशुद्धप्रतिग्रहादिरूपा ।'अधिका' स्वोत्कृष्टवर्णसम्बन्धिनी। 'समा' आवश्यककर्म्मभृत्यभरणेऽप्यसमर्था[2]। 'हीना' हीनवर्णसम्बन्धिनी। 'कुत्सिता' निन्दितकर्मार्जिता । 'अनर्थकरी' अहिता।

मनुः[3]

नेहेतार्थं[4] प्रसङ्गेन न निषिद्धेन[5] कर्मणा ।

1 आजीवन् वृषलोऽप्यार्यः गृ. र., ४५२
2 कर्तव्योपसमर्था गृ. र., ४५२
3 ४. १५
4 नेहेतार्थान् गृ. र., ४५३
5 विरुद्धेन गृ. र., ४५३

न [1]कल्प्यमानेष्वर्थेषु नाऽऽर्त्यामपि यतस्ततः ॥

'प्रसङ्गेन' गीतवाद्यादिप्रसक्त्या । 'कल्प्यमानेषु' पित्रादिकर्मागतेषु वृत्तिसमर्थेषु धनेषु सत्सु । 'यतस्ततः' अभिशस्तपतितादेः ।

याज्ञवल्क्यः[2]

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्धप्रसङ्गेन सन्तोषी च भवेत्सदा ॥

लघुहारीतः

अधिकारी तु यो यस्य स दासस्तस्य कीर्तितः ।
तस्माद्द्विजोत्तमेनैव[3] न कार्यं कर्म कर्हिचित् ॥
अधिकारी तु यः पूर्वमिष्टं वा कर्म कारयेत् ।
स[4] गच्छेन्नरके घोरे यस्याऽर्थस्तस्य तत्फलम् ॥

'यस्याऽर्थस्तस्य तत्फल'मिति । वृत्त्यर्थदत्तधनव्यतिरिक्तेन स्वामिधनेन [5]धर्मं कुर्यादित्यर्थः ।

[6]बृहस्पतिव्यासौ

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।

1 न कल्प्यमानेष्वर्थेषु नार्तावपि यतस्ततः गृ. र., ४५३
2 १. १२९ इदं पद्यं गृ. रत्नाकरे न दृश्यते
3 एतत् कार्यं कर्म न कर्हिचित् इति गृ. रत्ना., ४५३
4 स गच्छेन्नरकं घोरं गृ. र., ४५३
5 कर्म ना. को
6 ५. ९

अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥

'अकार्यशतम्' अत्र निन्दिता वृत्तयः ।

दक्षः

तृतीयेष्वेव[1] भागेषु पोष्यवर्गार्थसाधनम् ।
माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः ॥
अभ्यागतोऽतिथिश्चाऽग्निः पौष्यवर्ग उदाहृतः ।
ज्ञातिर्बन्धुजनः क्षीणः तथाऽनाथः समाश्रितः ॥
अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः ।
ज्ञानविद्भ्यश्च दातव्यमन्यथा नरकं व्रजेत् ॥
तस्मात्सर्वप्रयत्नेन पोष्यवर्गं सदा भरेत् ।
भरणं पोष्यवर्गस्य प्रशस्तं [2]स्वर्गसाधनम् ॥
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् ।
स जीवति पुमानेको बहुभिर्योऽनुजीव्यते ॥
जीवन्तोऽपि मृतास्त्वन्ये पुरुषाः स्वोदरम्भराः ।
बह्वर्थे[3] जीव्यते कैश्चित् कुटुम्बार्थे तथाऽपरैः ॥
आत्मार्थेऽन्यैः[4] न शक्नोति स्वोदरेणाऽपि दुःखितः ।

'अर्थसाधनं' धर्मार्जनम् । 'दीनः समाश्रितः' दीन-स्सन् । समाश्रितो न पुनः सर्वः । 'अभ्यागतः' असम्बन्धी

1 तृतीये च ततो भागे इति गृ. रत्ना., ४५३
2 स्वर्गसाधनमुत्तमं इति गृ. रत्ना., ४५४
3 बह्वर्थं गृ. र., ४५४
4 न च गृ. र., ४५४

ग्रामान्तरादागतः। 'ज्ञातिः' पितृबन्धुः। 'बन्धुः' मातृबन्धुः। 'अनाथः' पित्रादिपोषकरहितः। 'ज्ञानवित्' वेदशास्त्रवित्।

### अथ प्रतिग्रहविधिः

तत्र व्यासः

द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तम।
अपि द्विजातिमात्रेभ्यो न तु शूद्रात्कथञ्चन॥
राजतो[1] धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा।
याज्यान्तेवासिनोर्वाऽपि न त्वन्यत इति स्थितिः॥

याज्ञवल्क्यः[2]

राजान्तेवासियाज्येभ्यः[3] सीदन्निच्छेद्धनं क्षुधा।
दम्भिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत्॥

'हैतुकाः' हेतुवादरताः त्रयीबाह्याः।

नारदः

अर्थानां भूरिभावाच्च देवत्वाच्च महात्मनाम्।
श्रेयान् प्रतिग्रहो राज्ञां नाऽन्येषां ब्राह्मणादृते॥
ब्राह्मणश्चैव राजा च द्वावेवैतौ[4] धृतव्रतौ।

1 मनुः—राजतो गृ. र., ४५५ ना. को.
2 १. १३०
3 आर्येभ्यः गृ. र., ४५५
4 द्वावप्येतौ गृ. र., ४५५

नैतयोरन्तरं किञ्चित्प्रजाधर्माभिरक्षणात् ॥

धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन् ।
मेध्यमेव धनं प्राहुस्तीक्ष्णस्याऽपि महीपतेः ॥

शुचीनामशुचीनां तु सन्निपातो यथाम्भसाम् ।
समुद्रे समतां याति तद्वद्राज्ञो धनागमः ॥

यथाऽग्नौ संस्थितं [1]दीप्तं शुद्धिमायाति काञ्चनम् ।
एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि ॥

स्वधर्म्मे ब्राह्मणस्तिष्ठन्[2] वृत्तिमाहारयेन्नृपात् ।
नाऽसद्भ्यः प्रतिगृह्णीयाद्ब्राह्मणो विभवे सति ॥

अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः ।
शुचिश्चैवाऽशुचिः सद्यः कथं राजा न दैवतम् ॥

विदुर्य एनं देवत्वं राज्ञो ह्यमिततेजसः ।
तस्य ते प्रतिगृह्णन्ति[3] न लिप्यन्ते कथञ्चन ॥

'अशुचीन्' कृतापराधान् । 'देवत्वम्' अष्टलोकपालरूपत्वेन मन्वादिभिः संस्कृतत्वात् ।

शिलोञ्छवृत्यनन्तरं मनुः[4]

सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः ।
याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥

1 दीप्ते गृ. र., ४५६
2 वृत्तिमाहरते नृपात् इति गृ. रत्ना., ४५६
3 गृह्णन्तः गृ. र., ४५६.
4 १०. ११३

अकृतं च कृतात् क्षेत्राद्गौरजाविकमेव च ।
हिरण्यं धान्यमन्नं च पूर्वं पूर्वमदोषकृत् ।

'कुप्यं' हेमरजताभ्यामन्यत्कांस्यादिधनम् । 'स्नातकैः' विप्रैः । 'अन्यत्' कांस्यादि । 'धनं' कुप्यादन्यत्सुवर्णादि । 'अदित्सन्' [1]दातुमिच्छारहितः । 'त्यागमर्हति' तस्य राष्ट्रे न वस्तव्यमिति मेधातिथिः । 'अकृतम्' अकृष्टम् । 'अन्नं' पक्वम् ।

बौधायनः[2]

तस्य वृत्तिः ब्राह्मणक्षत्रियवैश्यरथकारेषु आमं लिप्सेत् । [3]भिक्षेत वाग्यतः स्तिष्ठन् ।

'रथकारो' माहिष्येण करण्यां जातः । 'लिप्सेत' अयाचितमिति शेषः ।

शङ्खलिखितौ

भिक्षमाणो निमित्तान्तरं ब्रूयात् । न रङ्गावतारं कुर्यान्न स्त्रीं नाऽप्राप्तव्यवहारं नाऽपर्याप्तसन्निधानमनुद्दिश्याऽन्नं भिक्षेत । यदर्थं भिक्षेत तमेवाऽर्थं कुर्यात् । शेषमृत्विग्भ्यो निवेदयेत् । यो वाऽन्यः साधुतमस्तस्मै दद्यात् ।

'निमित्तं' भिक्षाप्रयोजकं विवाहादि । 'रङ्गो' नृत्यादिस्थानम्, तत्राऽवतारो भिक्षार्थं तत्प्रदेशगमनम् । 'अप्राप्त-

1 दानेच्छा ना. को
2 १. ५. ८–११
3 भैक्ष्यं ना. को

व्यवहारः' ऊनषोडशवर्षः । 'अपर्याप्तसन्निधानः' दानायोग्यदेशकालस्थितः । 'अनुद्दिश्य' अनिर्दिश्य । 'अन्यं' अकृतादर्थान्तरम् । 'भिक्षेते'ति न स्त्रीमित्यादिभिः सम्बध्यते ।

मनुः[1]

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ।
सूनाचक्रध्वजवतां[2] वेशेनैव च जीवताम् ॥
दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमा[3] वेश्या दशवेश्यासमो नृपः ॥
दशसूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥
यो राज्ञः प्रतिगृह्णाति[4] लुब्धस्योच्छास्त्रवर्तिनः ।
स पर्यायेण यातीमान् नरकानेकविंशतिम् ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रं च महानरकमेव च ॥
सञ्जीवनं महावीचीं तपनं सम्प्रतापनम् ।
सङ्घातं[5] च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥

1 ४. ८४

2 शूलिचक्रि इति गृ. रत्ना., ४५७

3 समो वेशो दशवेश गृ. र., ४५८

4 गृह्णीयात् लुब्धस्योच्छास्त्रवर्तिनः गृ. र., ४५८

5 सङ्घातकं च काकोलं कुशूलं पूतमृत्तिकं इति गृ. रत्ना., ४५८

लोहसङ्कुमृतीक्ष्णं[1] च पन्थानं शाल्मलीं नदीम् ॥
असिपत्रवनं [2]चैव लोहाङ्गारकमेव च[3] ।
एतद्विदन्तो विद्वांसो ब्राह्मणा ब्रह्मवादिनः[4] ॥
न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोऽभिकाङ्क्षिणः ॥

'सूनी' मांसविक्रयी । 'चक्री' तैलिकः । 'ध्वजवान्' शौण्डिकः । 'वेश्या' गणिका ।

यमः

अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्तिनः ।
घोरः प्रतिग्रहस्तस्य मध्वास्वादो विषोपमः ॥
राजकिल्बिषदग्धानां विप्राणामकृतात्मनाम् ।
स्विन्नानामिव बीजानां पुनर्जन्म न विद्यते ॥
तस्मात्प्रतिग्रहं राज्ञो वर्जयन्ति मनीषिणः ।
देवतान्नैर्द्विजान्नैश्च पुनराप्याययन्ति[5] ते ॥
तथैव राजमहिषी राजामात्यपुरोहिताः ।
पापेनार्धेन संयुक्ताः सर्वे ते राजधर्मिणः ॥

'अकृतात्मानः' निन्दितराजप्रतिग्रहानुष्ठानेन । 'देवता-

1 शङ्कुमृचीषं तु गृ. र., ४५८; शङ्कुमृजीकं च ना. को
2 घोरं ना. को
3 लोहदारकमेव गृ. र., ४५८
4 वेद इति गृ. रत्ना., ४५६
5 देवस्वब्राह्मणस्वाभ्यामपि स्वात्मानमाप्याययन्ति । न च याजक-प्रतिग्रहं कुर्वीत इति तात्पर्यार्थं इति ना. को

न्नैर्द्विजान्नैश्च पुनराप्याययन्ति ते' [1]देवस्वब्रह्मस्वाभ्यामपि वरमात्मानमाप्याययन्ति, न तु राजप्रतिग्रहं कुर्वन्तीति तात्पर्यार्थः ।

हारीतः

दशसूनासहस्राणि अह्ना राजा करोति वै ।
तान्येव कुरुते रात्रौ घोरस्तस्य प्रतिग्रहः ॥
अर्द्धार्द्धन्तु[2] ततोऽमात्याः सेनानीदण्डनायकौ ।
ततोऽर्द्धार्द्धमथाऽर्द्धार्द्धमाश्रितेषु[3] च जायते ॥

अङ्गिराः

षण्मासान् यो द्विजो भुङ्क्ते शूद्रान्नं [4]च विगर्हितम् ।
जीवेत्स[5] तु भवेच्छूद्रो मृतः श्वा [6]चाऽभिजायते ॥
एते दोषा भवन्त्यत्र शूद्रादेव प्रतिग्रहैः[7] ।
गुर्वर्थमतिथीनां च भृत्यानां च विशेषतः[8] ॥
शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं ततः ।

1 पुनरप्याशयन्ति इति गृ. रत्ना., ४५९
2 अर्धार्धं तु ततोऽमात्यः सेनानीदण्डनायकौ गृ. र., ४५९
3 आश्रितोपाश्रितेषु च गृ. र., ४५९
4 ज्ञानदुर्बलः गृ. र., ४५९
5 जीवन् स तु गृ. र., ४५९
6 चोपजायते ना. को
7 प्रतिग्रहे गृ. र., ४५९
8 अयं भागः गृ. रत्नाकरे न दृश्यते

अनुग्रहप्रवृत्तस्य न दोषोऽङ्गिरसो मतम् ॥

'अनुग्रहप्रवृत्तस्य' वक्ष्यमाणगुर्वाद्यनुग्रहप्रवृत्तस्य ।

यमः

अनिर्दशाहे प्रेतस्य प्रतिगृह्णन्ति ये[1] द्विजाः ।
समा[2] शतसहस्रं ते नरकं पर्युपासते ॥

'अनिर्दशाहे प्रेतस्य' मृतकाशौचमध्य[3] इत्यर्थः ।

आङ्गिराः

संस्कारैः शुध्यति ह्यामं धान्यं तेन शुचि स्मृतम् ।
तस्मादामं ग्रहीतव्यं मृतसूतान्तरेष्वपि ॥
पक्वान्नं[4] वर्जयेद्विप्रो गोधान्यं क्षत्रिये तथा ।
वैश्येभ्यः सर्वधान्यानि शूद्राद्ग्राह्याः पणास्तथा[5] ॥

'संस्कारैः'[6] खण्डनदलनादिभिः । 'पणः' ताम्रकः कार्षिकः पणः । एतच्च सर्वमापद्गतस्य बोद्धव्यम् । शूद्रस्य सर्वथा अप्रतिग्राह्यधनस्य शौचे पणग्रहणाभ्यनुज्ञानात् ।

1 वै गृ. र., ४६०

2 समाः शतसहस्रं तु गृ. र., ४६०

3 शौच इत्यर्थः ना. को

4 पक्वान्नवर्जं विप्रेभ्यो गौर्धान्यं क्षत्रियात् तथा गृ. र., ४६०

5 तथा पणाः इति गृ. र., ४६०

6 कन्थनादिभिः, पणस्ताम्रिकः कार्षिकः, एतच्च आपद्गतस्य इति कल्पतरुः गृ. र., ४६०

अपाङ्क्तेयानुवृत्तौ[1] शूद्रयाजकानन्तरं मनुः[2]

वेदविच्चाऽपि विप्रोऽस्य लोभात् कृत्वा प्रतिग्रहम् ।
विनाशं व्रजति क्षिप्रमामपात्रमिवाऽम्भसा[3] ॥

हारीतः

पतितदुष्कृतेभ्यः प्रतिगृहीतमस्वर्ग्यमयज्ञियं[4] न तेन (?)पुण्यार्थानाप्नोति देवादार्थाभ्यनार्थानर्थो[5] ब्राह्मणमभिजित्य तामसमन्यस्मै दीयमानं प्रतिषिध्य स्वयं प्रतिगृह्णन् तस्य दुष्कृतमाप्नोति[6] । आनृण्यार्थे प्रतिगृह्य तेभ्योऽकृत्वोपयोगानां स्तैन्यमसत्कार्यार्थे [7]मज्जत्यात्मार्थे निबध्नाति । [8]एतैः प्रतिग्रहोपशयैः प्रतिगृह्णन् निरयाय कल्पते ।

बृहस्पतिः

असतोऽपि समादाय[9] साधुभ्यः सम्प्रयच्छति ।

1 अपाङ्क्तेयानुवृत्तौ—शूद्रयाजनानन्तरं मनुः गृ. र., ४६०
2 ३. १७९
3 अम्भसि गृ. र., ४६०; ना. कोशे च
4 अयाज्ञिकं गृ. र., ४६०
5 आप्नोति । अतिदेशवादाभ्यामर्थात् स्वयं ब्राह्मणमभि इति गृ. रत्ना., ४६०; ना. कोशे च
6 दुष्कृतमाप्नोति । आनृशंस्यार्थे प्रतिगृह्य तेभ्यः अकृत्वोपयोगानां स्तैन्यमसत्कार्यार्थे निमज्जति आत्मार्थे निबध्नाति । एतैः प्रतिग्रहोपशयैः प्रतिगृह्णन् निरयाय कल्प्यते गृ. र., ४६०
7 निमज्जति इति ना. को
8 एते प्रतिग्रहोपसर्गाः यैः प्रतिगृह्णन् इति ना. को
9 इदमादाय गृ. र., ४६०; स्वमादाय इति मुद्रितपाठः; ५. २. ३

धनस्वामिनमात्मानं सन्तारयति दुस्तरात् ॥

यमः

यस्तु लब्धं पुनर्दद्यात्प्रतिगृह्य यतस्ततः ।
यः स पृच्छति राजानं केषां भवति दक्षिणा ॥

जानताऽजानता वाऽपि यत्किञ्चिद्दुष्कृतं भवेत् ।
सर्वं तरति धर्मात्मा प्रतिगृह्य पुनर्ददत् ॥

सक्ताः प्रतिग्रहे ये तु न तु दाने कदाचन[1] ।
तेषां वैवस्वतः प्राह न तूर्ध्वं गमनं क्वचित् ॥

'सक्ताः' आसक्ताः ।

याज्ञवल्क्यः[2]

देवातिथ्यर्चनकृते गुरुभृत्यादिवृत्तये[3] ।
सर्वतः [4]प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥

'आत्मवृत्तिः' आत्मप्राणयात्रारूपा ।

मनुः[5]

गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवतातिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥

1 कथञ्चन गृ. र., ४६१
2 १. २१६
3 भृत्यार्थमेव च गृ. र., ४६२; या. अप.,
4 प्रतिगृह्णीयात् इति या. अप., या. वी.,
5 ४. २५१

गुरुषु त्वभ्यतीतेषु[1] विना वा तैर्गृहे वसन् ।
आत्मनो वृत्तिमन्विच्छन् गृह्णीयात्साधुतः सदा ॥
एतेष्वपि च कार्येषु समर्थः सन् प्रतिग्रहे ।
नाऽऽदद्यात्कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥

'गुरवः' पित्रादयः । 'उज्जिहीर्षन्' क्षुधाद्यवसन्नान् उद्धर्तुमिच्छन् । 'अर्चिष्यन्' देवतातिथीन् । आवश्यककर्मसम्पत्यर्थमित्यर्थः । 'सर्वतः' साध्वसाधुभ्यः । 'न तु तृप्येत्स्वयं ततः' इति । प्राणयात्रामात्रातिरिक्तं भोगादि तेन न कुर्यादित्यर्थः । 'विना वा तैर्गृहे वसेत्' जीवत्स्वपि गुर्वादिषु प्रकारान्तरेण सम्भवद्वृत्तिषु, आत्मवृत्त्यर्थं साधुभ्यो धार्मिकेभ्य एव प्रतिगृह्णीयादित्यर्थः ।

गौतमः[2]

[3]एधोदकमूलफलमध्वभयाभ्युद्यतशय्यासनावसथयानपयोदधिधानासर्षपप्रियङ्गुमार्गशाकान्यप्रणोद्यानि सर्वेभ्यः । पितृदेवगुरुभृत्यभरणे वाऽन्यवृत्तिश्चेत् नाऽन्तरेण शूद्रात् ।

'अभ्युद्यतम्' अभिमुखं दातुमानीतमेधादिभ्योऽन्यदपि । पयोदधिधानानि तु अनभ्युद्यतान्यपि दातुर्गृहा-

1 न व्यतीतेषु गृ. र., ४६१

2 २. ८. ३

3 एधोदकमूलफलमध्वभयाभ्युद्यतशय्यासनावसथयानपयोदधिधान्यसर्षपप्रियङ्गुमार्गशाकानि अप्रणोद्यानि सर्वेभ्यः । पितृदेवगुरुभरणे चान्यवृत्तिश्चेत् नान्तरेण शूद्रात् इति गृ. रत्ना., ४६२

दिवर्तीनि। अयाचितदत्तानि न प्रत्याख्येयानि। 'आवसथं' गृहम्। 'मार्गं' मृगमांसम्। 'पितृदेवगुरुभृत्यभरणे चान्यदि'ति श्राद्धाद्यर्थमन्यदपि दत्तमप्रत्याख्येयमित्यर्थः।

सुमन्तुः

अभोज्यान्नानामपि[1] पुष्पफलमूलशाकतृणकाष्ठधान्यानि क्षेत्रस्थान्यम्बु तडागे गोष्ठस्थं पयश्चाऽऽददतामदोषः।

'क्षेत्रम्' अत्रोत्पत्तिस्थानम्।

आपस्तम्बः[2]

मध्वामं मार्गं[3] मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यं [4]वासश्चोग्रतः प्रतिग्राह्याणि। एतान्यपि [5]अन्तेवास्युद्धृतानीति।

'रक्षा' त्राणम्। 'गव्यूतिः' गोमार्गः। 'उग्रः' उच्छास्त्रवर्ती। 'अन्तेवास्युद्धृतानि' अन्तेवासिना शिष्येण नीतानि।

हारीतः

आमं वा गृह्णीरन् कृतान्नस्य वा विरसस्य[6] न सुभिक्षाः

1 अभोज्यानामपि, उदय. मा
2 १. १८. १—२
3 मध्वन्नं इति गृ. रत्ना., ४६२;
4 घास इति मुद्रितः पाठः
5 नान्तेवास्युद्धृतानि गृ. र., ४६२
6 चिरमस्य न सुभिक्षाः इति गृ. रत्ना., ४६३

स्युः । स्वयमप्यवृत्तौ सुवर्णं दत्त्वा पशुं वा भुञ्जीत नाऽत्यन्तमवस्येत् वृत्तिं प्राप्य विरमेत् ।

'आमं' व्रीहितण्डुलादि । 'कृतान्नस्ये'ति षष्ठीनिर्देशात् कृतान्नस्य वा विरसस्य लवणादिरसरहितस्य स्तोकं यावद्भृत्यभरणार्थं तावदुग्रतोऽपि प्रतिग्राह्यम् । 'न सुभिक्षाः स्युः' यदि न लोकाः सुखेन याचितान्नदातारो भवेयुस्तदा दुर्भिक्ष इत्यर्थः ।

आदित्यपुराणे

अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नाऽन्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥

मनुः[1]

एधोदकं मूलफलमन्नमभ्युद्यतं[2] च यत् ।
सर्वतः प्रतिगृह्णीयान्मध्वथाऽभयदक्षिणाम् ॥
शय्यां[3] गृहं कुशान् गन्धानपः पुष्पं मणीन् दधि ।
धाना मत्स्यान् पयो मांसं शाकं चैव न निर्नुदेत् ॥

1 ४. २४७

2 अभ्युद्धृतं या. अप., ४०६

3 शय्यां कुशं गृहान् गन्धानपः पुष्पं मणीन्दधि ।
धान्यान् मत्स्यान् पयो मांसं शाकं चैव न निर्नुदेत् ॥
इति गृ. रत्ना., ४६३ ;
शय्यां गृहान् कुशान् गन्धानापः पुष्पं मणीन् दधि ।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत् ॥ इति या. अप., ४०६

अभयस्य मुख्यदानासम्भवाद् दृष्टान्तार्थमुपादानम्। 'मणयो' रत्नानि।

अङ्गिरोबौधायनौ प्रथमे[1]

खलक्षेत्रगतं धान्यं वापीकूपगतं जलम्।
अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः॥
विच्छिन्नेषु च पक्षेषु हविष्वाग्रयणेषु[2] च।
इष्टिं त्वविकृतां[3] कुर्यात्सुकृतं च न लोपयेत्॥
पक्वान्नवर्ज्यं[4] विप्रेभ्यो गोधान्यं क्षत्रियादपि।
वैश्यात्तु सर्वधान्यानि शूद्राद्ग्राह्यं न किञ्चन॥
यत्तु[5] क्षेत्रगतं धान्यं खले [6]वासगृहाद्बहिः।
सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्॥
प्रतिवर्णमिदं दृष्टं प्रतिग्राह्यं द्विजोत्तमैः।
तथापि च पयः पेयं द्विजेभ्योऽप्यङ्गिरोमतम्॥

'विच्छिन्नेषु च' [7]पक्षादिकरणकालेषु। तथा 'आग्रयणे-

1 अङ्गिरा बोधायनः गृ. र., ४६३ ; ना. कोशे च ; अङ्गिराः या. अप., ४०६

2 विच्छिन्नेष्वथ पक्षेषु हविःष्वाग्रयणेषु च या. अप., ४०७ हविराग्रयणेषु च गृ. र., ४६३

3 न विकृतां गृ. र., ४६४; त्वधिकृता या. अप., ४०७

4 वर्जं विप्रेभ्यो हविर्वा इति गृ. रत्ना., ४६४ ; वर्जं विप्रेभ्यो गोदानं, इति या. अप., ४०७

5 यच्च गृ. र., ४६४

6 वाथ गृ. र., ४६४

7 पक्वादि गृ. र., ४६४

ष्वि'ति सम्पूर्णेष्टिसम्पत्तिर्यावता[1] भवति तावत्सम्पत्त्यर्थमभोज्यान्नादपि यथोक्तं धान्यादि प्रतिग्राह्यमित्यर्थः। 'पयः' पानीयमत्र।

तथा

यत्तु[2] राशीकृतं धान्यं खलक्षेत्रेऽथवा भवेत्।
सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्॥
सुपात्रे[3] यत्तु विन्यस्तं दुग्धं तच्छुचि नित्यशः।
पात्रान्तरगतं ग्राह्यं शूद्रात् स्वगृहमागतम्॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्॥
आमं मांसं [4]मधु घृतं धानाः क्षीरमथौषधम्।
गुडतक्ररसा ग्राह्या निवृत्तेनाऽपि शूद्रतः॥
शाकमत्स्यमृणालानि[5] कम्बूकाः सक्तवस्तिलाः।
इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः॥

'सर्वकालं' सूतकादावपि सर्ववर्णानां चेत्यर्थः। 'रसा' लवणादयः। 'कम्बूकाः' तण्डुलानां कणाः।

1 आग्रयणादिषु दर्शपूर्णमाससम्पत्तिः यावता भवति। तावदथ गृ. र., ४६४

2 तथा गृ.रत्ना., ४६४; यत्तु क्षेत्रगतं धान्यं खले वाथ गृहाद्बहिः इति या. अप., ४०७

3 स्वपात्रे ना. को

4 दधि इति ना. को

5 शाकं च मत्स्यमूलानि कटुकाः सक्तवस्तिलाः गृ. र., ४६४; शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः या. अप., मृणालादि कञ्चुकाः इति ना. को

याज्ञवल्क्यः[1]

कुशाः काशं[2] पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च॥
अयाचितं[3] हृतं ग्राह्यमपि दुष्कृतकर्मणः।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः॥

जाबालः

अभ्युद्यतं गृहे [4]भक्ष्यं ग्राह्यं तत्सर्वतः स्वयम्।
आत्मन्येव शुभायातं नियुञ्ज्यात् भृतके परम्॥

'शुभायातम्' अनिन्दितप्रकारलब्धमेवाऽऽत्मोपयोगी-कुर्यात्, निन्दितप्रकारायातं तु अवश्यभरणीयोपयोगि कुर्यादित्यर्थः।

मनुः[5]

आहृतामुद्यतां[6] भिक्षां पुरस्तादप्रचोदिताम्[7]।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः॥
नाऽश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च।

1 १. २१४
2 शाकं गृ. र., ५६५
3 अयाचिताहृतं गृ. र., ४६५; या. अप., या. वी., ४०७ ; २८३
4 भैक्ष्यं ना. को
5 ४. २४८
6 उद्धृतां गृ. र., ५६५
7 अप्रवेशितां गृ. र., ४६५

न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते[1] ॥
चिकित्सककृतघ्नानां[2] शल्यहर्तुस्तु वार्धुषेः ।
षण्ढस्य कुलटायाश्च उद्यतामपि वर्जयेत् ॥

'शल्यहर्ता' [3]शस्त्रवैद्यः ।

यमः[4]

चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य[5] च ।
षण्ढसूतिकयोश्चैव उद्यतामपि वर्जयेत् ॥
[6]उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम् ।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः ॥
[7]श्रद्दधानस्य भोक्तव्यं चौरस्याऽपि विशेषतः ।
न त्वेव बहुयाज्यस्य यश्चोपनयते बहून् ॥

तथा

चिकित्सकस्य मृगयोः शल्यकर्तुश्च[8] पाशिनः ।
षण्ढस्य कुलटायाश्च उद्यताऽपि न गृह्यते ॥

1 यस्तामभ्यवपद्यते या. अप., ४०७

2 कृतघ्नानां शल्यहन्तुस्तु या. अप., ४०७

3 शल्यवेद्यः ना. को

4 मनुः इति ना. को

5 कृतकस्य च । षण्ढनर्तकयोरेव इति या. अप., ४०७

6 वसिष्ठः—उद्यतां ना. को.

7 वसिष्ठः—श्रद्दधानस्य इति गृ. रत्ना., ४६६

8 हर्तुश्च गृ. र., ४६६

वसिष्ठः[1]

शस्त्रं विषं सुरा चाऽप्रतिग्राह्याणि ब्राह्मणस्य ।

शङ्खलिखितौ

न मद्यं[2] दद्यान्न प्रतिगृह्णीयाद्वा ।

आदित्यपुराणे

किं करिष्यत्यसौ[3] विप्रो गृह्णन्नुभयतोमुखीम् ।
सहस्रं वारुणाः पाशाः [4]क्रूरधाराग्निसन्निभाः ॥
पूर्णवर्षसहस्रेण[5] पाश एकः प्रमुच्यते ।
एतामवस्थां प्राप्नोति[6] गृह्णन्नुभयतोमुखीम् ॥

याज्ञवल्क्यः[7]

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

1 १३. ५५
2 न मद्यं प्रतिगृह्णीयात् इति गृ. रत्ना., ४६६
3 करिष्यति विप्रोऽसौ गृ. र., ४६६
4 क्षुर गृ. र., ४६६
5 पूर्णे वर्षसहस्रे च गृ. र., ४६६, ना. कोशे च
6 आप्नोति गृ. र., ४६६
7 १. २०२

मनुः[1]

न द्रव्याणामनुज्ञाय[2] विधिं धर्म्यं[3] प्रतिग्रहे ।
प्राज्ञः[4] प्रतिग्रहं [5]कुर्यादवसीदन्नपि क्षुधा ॥
हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्[6] ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् ॥
हिरण्यमायुरन्नं च भूर्गौश्चाऽ[7]प्योषतस्तनुम्[8] ।
अश्वश्चक्षुस्त्वचं वासो घृतं तेजस्तिलाः प्रजाः ॥
अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनैव सह तेनैव मज्जति ॥
तस्मादविद्वान् बिभियाद्यस्मात्तस्मात् प्रतिग्रहात् ।
स्वल्पकेनाऽपि गृह्णन् हि पङ्के गौरिव सीदति ॥
प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।
प्रतिग्रहेण ह्यस्याऽऽशु ब्रह्मतेजः प्रशाम्यति ॥

'प्रतिग्रहे धर्म्यो विधिः' प्रतिग्रहे इतिकर्तव्यता । हिरण्यान्ने चाऽऽयुरोषतो दहत इत्यर्थः । 'यस्मात्तस्मात्' यतः कुतश्चिदविशुद्धादपि । 'प्रसङ्गः' अत्यासक्तिः ।

1 ४. १८७
2 अविज्ञाय गृ. र., ४६७
3 धर्म्यं गृ. र., ४६७
4 प्राज्ञः इति ना. को
5 दद्यात् गृ. र., ४६७
6 गृहम् गृ. रत्ना., ४६७
7 वाप्युषतः गृ. र., ४६७
8 नरः गृ. र., ४६७

याज्ञवल्क्यः[1]

प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति[2] पुष्कलान् ॥

यमः

[3]सर्वदेवाभिगमनात् सर्वयज्ञनिषेवणात् ।
गवां कोटिप्रदानाच्च श्रेयांस्तस्याऽप्रतिग्रहः[4] ॥

व्यासः

प्रतिग्रहरुचिर्न[5] स्याद्यानार्थं[6] तु समाहरेत् ।
स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम् ॥

यमः

यश्च याचनको नित्यं न स स्वर्गस्य भाजनम् ।
उद्वेजयति भूतानि यथा चौरस्तथैव सः ॥

महाभारते

धर्मार्थं यस्य वित्तेहा तस्याऽनीहा गरीयसी ।

1 १. २१३

2 तान् सम्प्राप्नोति इति या. अप., पृ. ४०६

3 वेद for देव in ना. को.

4 श्रेयस्तस्याप्रतिग्रहः ।
यश्च याचनको नित्यं न स स्वर्गस्य भाजनम् ।
उद्वेजयति भूतानि यथा चौरस्तथैव सः ॥ इति गृ. रत्ना., ४६८
श्रेयान् हस्तस्य निग्रहः ना. को.

5 मतिर्न ना. को.

6 यात्रार्थं गृ. र., ४६८

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥

'धर्मार्थमि'ति आवश्यककर्मातिरिक्तधर्माभिप्रायम् ।

प्रयागप्रतिग्रहे तीर्थस्य निष्फलत्वमभिधाय मत्स्यपुराणे

तस्मात्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्वेषु अप्रमत्तो भवेद् द्विजः ॥

इति प्रतिग्रहविधिः ॥

# १४

# अथ क्षत्रियवैश्यकर्मवृत्तयः[1]

तत्र मनुः[2]

त्रयो धर्मा निवर्तन्ते ब्राह्मणाः[3] क्षत्रियं प्रति ।
अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥
वैश्यं प्रति तथैवेते निवर्तेरन्निति स्थितिः ।
न तौ प्रति हि तान् धर्मान् मनुराह प्रजापतिः ॥
शस्त्रास्त्रभृत्त्वं क्षत्रस्य [4]वणिक्पशुकृषिर्विशः ।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥
वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य[5] तु रक्षणम् ।
वार्त्ता कर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥

ब्राह्मणस्य इमे ब्राह्मणाः । 'वार्त्ता' कृषिपशुपाल्यवाणिज्याः । 'विशिष्टानि' श्रेष्ठानि ।

पराशरः [ १, ६७, ७० ]

क्षत्रियेण प्रजाः पाल्याः शस्त्रपाणिः प्रचण्डवान् ।

1 कर्मधर्मवृत्तयः इति. ना. को.

2 १०. ७७

3 ब्राह्मणात् इति उ. मातृकायां पाठः ना. को. च.

4 पालः for वणिक् in ना. को.

5 रक्षणं क्षत्रियस्य तु इति गृ. रत्ना., ४६९

निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥
लौहकर्म[1] तथा रत्नपशूनां परिपालनम् ।
वाणिज्यं कृषिकर्मान्तं[2] वैश्यवृत्तिरुदाहृता ॥

'प्रचण्डवान्' वीरपुरुषोपेतः ।

दानमध्ययनं यज्ञ इत्यनुवृत्तौ शङ्खलिखितौ—

पूर्वधर्म एव क्षत्रियः । शस्त्रार्जनक्षतत्राणव्यवहार-दण्डरक्षणानुशासनमिति वृत्तयः[3] ।

पूर्वधर्म एव वैश्यः । कृषिः पशुपाल्यं वाणिज्यं योनि-पोषणं वृद्धिप्रयोग इति वृत्तिः ।

'पूर्वधर्मः' अध्ययनयज्ञदानानि । शस्त्रेणार्जनं 'शस्त्रा-र्जनम्' । क्षतात् त्राणं 'क्षतत्राणम्' । 'व्यवहारो' वादिप्रति-वादिनोः सन्देहहरणम् । 'अनुशासनं' वर्णाश्रमाणां स्व-धर्म्मे व्यवस्थापनम् । 'योनिपोषणं' वृद्ध्यर्थं गवादिपाल-नम् । 'पशुपाल्यं' वेतनेन पशुरक्षणम् ।

हारीतः

धनुर्वेदो व्रतस्नातः क्षत्रियोऽध्ययनयजनदानधर्माऽशि-

1 लौहकर्म गृ. र., ४६९ दोहकर्म. ना. को.

2 धर्मान्तं इति गृ. रत्ना., ४६९

3 वृत्तिः गृ. र., ४६९ धर्मशिष्टपरिपालनाशिष्टनिग्रहरतोऽभिजितषड्भा-गवृत्तिर्व्रतैकदेशी । वैश्योऽध्ययनयजनदानधर्मकृषिपशुपाल्यवणिग्वृत्तिः इति गृ. रत्ना., ४७०

ष्टनिग्रहतोऽभिजितषड्भागवृत्तिः। वेदव्रतैकदेशी। वैश्योऽध्ययनयजनदानधर्मा कृषिपशुपाल्यवणिग्वृत्तिः।

'धनुर्वेदः' स्नानाधिगतशस्त्रविद्यः। एवं वेदव्रतयोरपि। अभिजितानां शत्रोर्भूम्यादीनां षष्ठभागग्रहणम्। 'वेदव्रतैकदेशी' वेदव्रतयोरेकदेशेनाऽपि कृतार्थः।

ब्रह्माऽदधादित्यनुवृत्तौ बौधायनः[1]

क्षत्रबलमध्ययनयजनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्य वृद्ध्यै। विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणो वृद्ध्यै।

पैठीनसिः

अध्ययनं यजनं दानं तेजः संग्रामे चाऽपलायनमीश्वरभावश्च धर्मः क्षत्रियस्य।

'तेजः' प्रतापित्वम्। 'ईश्वरभावः' अपरवशत्वम्।

आपस्तम्बः[2]

स्वकर्म[3] ब्राह्मणस्याऽध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छोऽन्यच्चाऽपरिगृहीतम्।

एतान्येव क्षत्रियस्याऽध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि।

1 १. १८. ३, ४

2 २. १०. ५–८

3 धर्म for कर्म in ना. को.

क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्षवाणिज्याधिकम् ।

द्विजातीनामध्ययनेज्यादानमित्यनुवृत्तौ 'राज्ञोऽधिकं रक्षणं सर्वभूतानाम्' इत्यादि प्रक्रम्य गौतमः[1]

क्षत्रियश्चेदन्यः तमुपजीवेत्तद्वृत्त्या ।

'अन्यो' जातिमात्रसम्बद्धः। 'तं' राजानम् । 'तद्वृत्त्या' शस्त्रधारित्वेन ।

देवलः

[2]क्षत्रधर्मोऽध्ययनेज्यादानैर्देवपितृपूजनम् । ब्राह्मणशुश्रूषणं वैश्यशूद्रपरिपालनम् । [3]बलिकरशुल्कषड्भागोपजीवनम् । वर्णाश्रमसंस्थापनं, पापनिग्रहो गुणवत्परिग्रहो व्यवहारवर्जनम् । धर्मचारित्रानुपालनं हस्त्यश्वरथप्रहरणशिक्षाभ्यासः । शास्त्रोपायाश्रयत्वं कोशदण्डावेक्षणं परचक्रापणाटवीतस्करदूष्यमान्याप्तकुलीनाध्यक्षप्रतिषेधलब्धशूरनिजैश्वर्यधैर्यमुत्साहशौर्यं शक्तत्वमयाचन-

1 १. २. १९

2 अध्ययनेषु दानैः गृ. र., ४७०

3 वणिक्छुल्कोपजीवनं वर्णाश्रमव्यवहारसंस्थापनं पापनिग्रहो गुणवत्परिग्रहो व्यवहारार्जनं धर्मचरितानुपालनं, हस्त्यश्वरथप्रवणशिक्षाभ्यासः । शस्त्रोपायाश्रयत्वं कोषदण्डावेक्षणम् । परचक्रापणाटवीतस्करदम्भमानाप्तकुलीनाध्यक्षप्रतिषेधलब्धशूरनिजैश्वरदण्डप्रणयनं धर्मविशुध्यै चाधैर्यमुत्साहः । शौर्यं शक्तत्वं, अयाचनमिति इति गृ. रत्ना., ४७० वणिक् शुल्क. for बलिकर in ना. को.

मिति। वैश्यधर्मोऽध्ययनयजनप्रदानैः धर्मानुष्ठानं, ब्राह्मणक्षत्रियशुश्रूषा, पापवर्जनं, कलत्रपोषणं, कर्षणं, पशुपालनं, भारोद्वहनपण्यव्यवहारनर्तनगायनतालावतरणरङ्गोपजीवनं चेति।

'बलिः' उपायनम्। 'करः' कारुकृषीवलेभ्यो नियतधनादानम्। 'शुल्कः' तरादिपण्यम्। 'षड्भागोपजीवनं' धान्यादीनामिति शेषः। 'संस्था' मर्यादा। 'शिक्षा' शास्त्रम्। 'उपायाः' सामादयः। 'गायनम्' अत्र [1]गीतम्। 'तालावतरणम्' अत्र वादनम्। 'रङ्गो' मल्लयुद्धभूमिः। इह तु मल्लविद्योपलक्ष्यते।

बौधायनः[2]

वैश्यः कुसीदमुपजीवेत्। पञ्चविंशतिस्त्वेव पञ्चमाषिकी स्यात्।

'पञ्चविंशतिः' कार्षापणानाम्।

मनुः[3]

वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम्।
वार्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे॥
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः॥

1 गानं for गीतम् in. ना. को.

2 १. १०. २२.

3 ९. ३२६

न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नाऽन्येन रक्षितव्याः कथञ्चन ॥

मणिमुक्ताप्रवालानां लौहानां तान्तवस्य च ।
गन्धानां च रसानां च विद्यादर्घबलाबलम् ॥

बीजानामुप्तिविच्च स्यात् क्षेत्रबीजगुणस्य च ।
मानयोगांश्च जानीयात्तुलायोगांश्च सर्वशः ॥

सारासारं च भाण्डानां देशानां च गुणागुणम् ।
लाभालाभं च पण्यानां पशूनां च विवर्धनम् ॥

भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥

धर्म्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् ।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥

'लौहाः' ताम्रादयः। 'बलाबले' न्यूनाधिक्ये। 'बीजानामुप्तिवित्' सम्यक् सस्योत्पत्यनुकूलघनविरलबीजवपनवेत्ता, स्वक्षेत्रबीजगुणस्य वेत्ता स्यादिति शेषः। 'मानयोगाः' मानप्रकाराः। 'तुलायोगाः' तुलाधारणप्रकाराः। 'भाण्डानां' विक्रेयाणाम्। 'सारम्' अत्र तद्रूपमेव चिरकालस्याऽपि। 'भृत्याः' कर्मकराः। 'भृतिः' कर्मानुरूपं वेतनम्। 'स्थानयोगात्' तद्रूपावस्थानोपायात्।

ब्राह्मणस्य वैश्यवृत्तिविधानानन्तरं मनुः[1]

जीवेदेतेन राजन्यः सर्वेणाऽप्ययनं गतः ।

1 १०. ९५

न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥

'अयनं गतः' आपद्गतः । 'अभिमन्येत' अङ्गीकुर्यात् ।

[ तथा[1] ]

वैश्योऽजीवन् स्वधर्मेण शूद्रवृत्त्याऽपि वर्तयेत् ।
अनाचरन्नकार्याणि निवर्तेत च शक्तिमान् ॥

'अकार्याणि' उच्छिष्टाद्यपसारणादीनि ।

तथा

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥

'उत्कृष्टः' अत्र ब्राह्मणः ।

कालिकापुराणे

कृषिगोरक्षवाणिज्यं किल वैश्यस्य संमतम् ।
तथाप्यनडुद्भ्यां (?) कृषिं नैव समाचरेत् ॥
पुङ्गवाभ्यां द्विषड्भाभ्यां प्रहरार्द्धप्रमाणतः ।
द्वौ द्वौ योज्यान्तरेकैकं कारयेद्धर्मतो द्विजः ॥
पिण्याकं तृणतोये तु तेषां यत्नात् प्रकल्पयेत्[2] ।
धूमकं रूपनं चैव[3] कृत्वैवं कारयेत्ततः ॥

1 [ ] अत्रान्तर्गतो भागः ना. कोशे दृश्यते
2 प्रदापयेत् for प्रकल्पयेत् in ना. को.
3 धूमं कण्डूयनं चैव, ना. को.

वैणवीमपि भूमिं तु अधोमूत्रगमाय च ।
कुर्वन्नेव न सीदेत्तु कृषिं वैश्यो महामुने ॥
राज्ञः षड्भागमुत्सृज्य पञ्चमं कर्षकस्य च ।
शिल्पिनः प्रकृतीश्चैव दायाद्यांस्तत्र तर्प्य च ॥
शेषमात्मनि युञ्जीत खलक्षेत्रेषु बुद्धिमान् ।
पशूनां पालनं कुर्यान्निवातं च निवेशनम् ॥
विविक्तं च समं शुभ्रं स्तम्भैर्युक्तमकर्कशैः ।
अजाविकांश्च गौरीणां महिषीणां च सङ्ग्रहम् ॥
कुर्य्याद्यन्न विरोधि स्यादन्येषां वै कदाचन ।
श्वसूकरखरोष्ट्राणां मार्जारनकुलादिषु ॥
स्वधर्ममाचरन् वैश्यो नैव कुर्यात्प्रतिग्रहम् ।
लवणं मधु मद्यं च तिलं दधि घृतं पयः ॥
मधूच्छिष्टं तथा लाक्षां चर्म नीलीं तथा विषम् ।
शस्त्रं मांसं तथा हिङ्गु त्रेधां वा वर्णिकां तथा ॥
गुडपिण्याकसिद्धान्नं वृन्ताकादिफलानि च ।
शस्त्रास्त्रमुदकं देवान् शुक्तानि विविधानि च ॥
शैलेयान् कुतपान् वैश्यस्त्वेवमादि न विक्रयेत् ॥

महाभारते[1]

तिलधान्यरसांश्चैव न विक्रीणीत वै क्वचित् ।
वाणिज्यार्थमुपासीत[2] वैश्यः सत्पथमाश्रितः ॥

1 आदि., १४१, ५६

2 वणिक्पथमुपासीनः. इति. ना. को.

# अथ द्रव्याणां धर्माधर्मस्वत्वानि

तत्र मनुः[1]

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

'वित्तागमाः' धनोपायाः । 'दायः' अन्वयागतं धनम् । 'लाभो' निध्यादेः । 'जयः' अत्र सङ्ग्रामे शत्रोरभिभवः । 'प्रयोगः' कुसीदम् । 'कर्मयोगः' कृषिवाणिज्यादि ।

गौतमः[2]

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु च ब्राह्मणस्याऽधिकं लब्धम् । क्षत्रियस्य विजितम्, निर्विष्टं वैश्यशूद्रयोः ।

'स्वामी' भवतीति शेषः । 'क्रयं' क्रीतं धनम् । 'संविभागः' [3]मित्रदाय इति भर्तृयज्ञः । 'परिग्रहः' अनन्यपूर्व आरण्यमहिषादेः । 'अधिगमः' आकरादिभ्यो[4] लब्धम्,

1 १०. ११५

2 २. १. ३९

3 भर्तृदाय गृ. र., ४७१

4 आकराधिलब्धः इति गृ. रत्ना, ४७१

एतानि सर्ववर्णसाधारणानि धर्म्याणि। 'ब्राह्मणस्याधिकं' असाधारणं प्रतिग्रहादिलब्धम्। 'विजितं' सङ्ग्रामेऽधिकं क्षत्रियस्य। 'निर्विष्टं' कर्मकरणोपात्तम्।

नारदः [ ४, ४३-५५ ]

धनमूलाः क्रियाः सर्वा यत्नः तस्याऽर्जने मतः।
रक्षणं वर्धनं भोगस्त्रयः तस्य विधिः क्रमात्॥
तत्पुनस्त्रिविधं ज्ञेयं शुद्धं [1]शबलमेव च।
कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पुनः॥
श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्।
धनं सप्तविधं शुद्धमुदयो[2] यस्य तद्विधः॥
कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः।
कृतोपकारादाप्तं च शबलं समुदाहृतम्॥
पार्श्विकद्यूतचौर्यार्तिप्रतिरूपकसाहसैः।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम्॥
तेन क्रयो विक्रयश्च दानं ग्रहणमेव च।
विविधाश्च प्रवर्तन्ते क्रियाः सम्भोग एव च॥
यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च॥
तत्पुनर्द्वादशविधं [3]प्रतिवर्णाश्रमात्स्मृतम्।

1 शुक्लमिति वैजयन्ती पाठः

2 उदयस्तस्य इति गृ. रत्ना.; उपायोऽप्यस्य इति ना. को.; शुक्लमुद्योगः इति मुद्रित नारदीये.

3 वर्णाश्रयात् गृ. र., ४७२

साधारणं स्यात्त्रिविधं शेषं नवविधं विदुः[1] ॥
क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया[2] ।
अविशेषेण वर्णानां सर्वथा त्रिविधं धनम् ॥
वैशेषिकं धनं विद्याद्ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ॥
त्रिविधं क्षत्रियस्याऽपि प्राहुर्वैशेषिकं धनम् ।
युद्धोपलब्धं काराच्च दण्डाच्च व्यवहारतः ॥
वैशेषिकं धनं ज्ञेयं वैश्यस्याऽपि त्रिलक्षणम् ।
कृषिगोरक्षवाणिज्यैः शूद्रस्यापि[3] त्वनुग्रहात् ॥
सर्वेषामेव वर्णानामेष धर्म्यो धनागमः ।
विपर्ययादधर्म्यः स्यात् न चेदापद्गरीयसी ॥

'श्रुतेनोपात्तम्' अध्ययनादिना लब्धम्। 'शौर्येण' जयादिना। 'तपसा' जपहोमदेवताराधनादिना। 'कन्यागतं' कन्यया सह श्वशुरादेर्लब्धम्। 'शिष्यागतं' गुरुदक्षिणादि। 'याज्यागतं' आर्त्विज्यलब्धम्। 'अन्वयागतं' दायलब्धम्। 'उदयः' फलम्। 'तद्विधः' शुद्धः। 'अनुवृत्तिः' सेवा। 'पार्श्विकम्' उत्कोचादिलब्धम्। 'आर्तिः' पीडा। 'प्रतिरूपकं' द्रव्याभासाः। 'साहसं' पोतयात्रादि। व्याजोऽत्र द्रव्यान्तरमिश्रीकरणम्। 'तेन' त्रिविधेन। 'शेषं' असाधारणम्। 'कारः' करः। 'व्यवहारो' न्यायः। 'अनुग्रहात्' शुश्रूषानिबन्धनात्।

1 स्मृतम् इति गृ. र., ४७३
2 अर्धमिदं गृ. रत्नाकरे न दृश्यते
3 एषामनुग्रहात् गृ. र., ४७३

विष्णुः [ ५८, १–१० ]

अथ गृहाश्रमिणस्त्रिविधोऽर्थो भवति—शुक्लः शबलो सितश्च। शुक्लेनाऽर्थेन यदौर्द्ध्वदैहिकं करोति, [1]तद्देवत्वमासाद्याऽश्नाति। यच्छबलेन तन्मानुष्यम्। यत् कृष्णेन तत् तिर्यक्त्वम्। वृत्त्युपात्तं सर्वमेव शुक्लम्। अनन्तरवृत्त्युपात्तं शबलम्। [2]अन्तरितवृत्त्युपात्तमनुत्तमवृत्त्युपात्तं च कृष्णम्।

क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया।
अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम्॥
उत्कोचशुल्कसम्प्राप्तमविक्रेयस्य विक्रयात्।
कृतोपकारादाप्तं च शबलं समुदाहृतम्॥
पार्श्विकं द्यूतचौर्याप्तं प्रतिरूपकसाहसैः।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम्॥

बुधः

न्यायागतेन द्रव्येण कर्म कुर्यादध्ययनयाजनप्रतिग्रहरिक्थक्रयसंविभागप्रतिग्रहाधिगमाः।

बृहस्पतिः [ आप०, २४ ]

वृत्त्युपायेन[3] यल्लब्धं कुर्यात्पालनवर्धनम्[4]।
भोगं च बन्धुभिः सार्द्धं दीनानाथार्थिभिस्तथा॥

1 तद्देवत्वमासादयति इति विष्णुस्मृतौ
2 एकान्तरवृत्त्युपात्तं च कृष्णं गृ. र., मुद्रित विष्णौ च
3 उपात्तेन लब्ध्वार्थं इति गृ. रत्ना., ४७३
4 प्राणविवर्धनम् ना. को.

विष्णुपुराणे

पाकसंस्था हविस्संस्थाः सोमसंस्थाश्च संस्थिताः
धने यतो मनुष्याणां यतेताऽतो धनार्जने ॥

महाभारते

अर्थेन[1] हि विहीनस्य पुरुषस्याऽल्पमेधसः ।
सर्वाः[2] क्रिया विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।
मृतेभ्यः [3]प्रमृता यान्ति दरिद्राः पापकारिणः ॥
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात्सुखम् ।
श्रद्दधानाः सुदान्ताश्च धनाढ्याः[4] शुभकारिणः ॥
अहिरण्यमदासीकमल्पान्नाद्यमगोरसम्[5] ।
गृहं कृपणवृत्तीनां नरकस्याऽपरो विधिः ॥
धर्मेणाऽर्थः समाहार्यो धर्मलब्धं त्रिधा धनम् ।
कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः ॥
एकेनांऽशेन धर्मस्तु कर्तव्यो भूतिमिच्छता ।
एकेनांऽशेन कामश्चाऽप्येकमंशं विवर्धयेत् ॥

1 धनेन तु गृ. र., ४७४

2 उच्छिद्यन्ते क्रियाः सर्वाः गृ. र., ४७४, ना. को. च.

3 प्रसृताः उद. मा

4 दान्ताश्च गृ. र., ४७४

5 अहिरण्यमदाश्रीकं इति उद. मा.

मार्कण्डेयपुराणे [ ३४, ११-१२ ]

पादेनाऽर्थस्य[1] पारत्र्यं कुर्यात्सञ्चयमात्मवान् ।
अर्धेन चाऽऽत्मभरणं नित्यनैमित्तिकान्वितम्[2] ॥
पादं चाऽर्धार्धमर्थस्य मूलभूतं विवर्धयेत् ।
एवमाचरतः पुत्र अर्थः साफल्यमृच्छति ॥

भविष्यपुराणे

वित्तसाध्यं न यः कुर्याद्धर्ममाढ्योऽपि हि द्विजः ।
न[3] स तत्फलमाप्नोति प्रलोभाक्रान्तमानसः ॥
तस्मात् त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं च धर्मार्थमनित्यं जीवनं यतः ॥

अगर्हितेन कर्मणा धनान्यादाय, स्वाध्यायप्रकर्षोपलब्धेन वा ब्रह्मर्षिनिमित्तेन वा अद्रिसागरा(?) गहनहव्यनियमाभ्यासादेव प्रसादोपलब्धेन वा गृहस्थो गार्हस्थ्यं प्रतिपालयेत् ॥

1 पादेन तस्य प्राबल्यं गृ. र., ४७४

2 नैमित्तिकं तथा इति गृ. रत्ना., ४७४

3 न तत् फलमवाप्नोति गृ. र., ४७५

१६

# अथ शूद्रकर्मधर्मवृत्तयः

तत्राऽनुपात्तशुश्रूषावाक्येषु द्विजात्यधिकारो वेदितव्यः सापेक्षेषु । धर्म इति वाक्यशेषः ।

तत्र मनुः[1]

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः ॥
शुचिरुत्कृष्टवर्णेषु मृदुवागनहङ्कृतः ।
ब्राह्मणापाश्रयो नित्यमुत्कृष्टिं जातितोऽश्नुते ॥

उत्कृष्टावत्र क्षत्रियवैश्यौ । 'ब्राह्मणापाश्रयः' वृत्यर्थं क्षत्रियादिशुश्रूषापरोऽपि ब्राह्मणे निवेदितात्मा । 'जातित उत्कृष्टिः' जात्युत्कर्षः ।

बृहस्पतिः [ सं. ५२९ ]

शौचं ब्राह्मणशुश्रूषा [2]नित्यमक्रोध एव च ।
शूद्रकर्म तथा मन्त्रो नमस्कारोऽत्र [3]वेदितः ॥

1 ९. ३३४

2 सत्य for नित्य in ना. को.

3 देशितः इति गृ. रत्ना., ४७५

आपस्तम्बः[1]

शुश्रूषा शूद्रस्येतरेषां च वर्णानाम् । पूर्वस्मिन् वर्णे निःश्रेयसं भूयः ।

पराशरः [ १, ७१ ]

शूद्रस्य द्विजशुश्रूषा प्रथमं धर्मलक्षणम् ।
यदन्यत्कुरुते किञ्चित्तद्भवेत्तस्य निष्फलम् ॥

हारीतः

न शूद्राय वृत्तिं प्राहुस्त्रिवर्णशुश्रूषैवाऽस्य वृत्तिः । दानं धर्ममित्येके ।

[ मनुः १०, १२१–१२३. ]

शूद्रस्तु[2] वृत्तिमाकांक्षन् क्षत्रमाराधयेद्यदि ।
धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो [3]जिजीविषेत् ॥
स्वर्गार्थमुभयार्थं [4]च ब्राह्मणानेव धारयेत् ।
जातब्राह्मणशब्दो[5] हि सा ह्यस्य कृतकृत्यता ॥
विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ।
यदतोऽन्यद्धि कुरुते [6]तद्भवत्यस्य निष्फलम् ॥

1 १. १. ७, ८

2 मनुः—शूद्रस्तु इति गृ. र., ना. कोशे च

3 जिजीविषुः या. अप. १६१, ना. कोशे च

4 वा विप्रमाराधयेत्तु सः गृ. र., ४७६, वा ब्राह्मणं न विरोधयेत् इति या. अप., १६२

5 यातब्राह्मणशब्दो हि स ह्यस्य गृ. र., ४७६, या तु ब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता या. अप. १६२, या न ब्राह्मण. इति. ना. को.

6 तद्भवेत् तस्य या. अप., १६२

प्रकल्पिताऽस्य[1] तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः ।
शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च[2] ।
पुलकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥

'आराधयेत्' धारयेत् । 'जातब्राह्मणशब्दः' प्राप्तो ब्राह्मणस्याऽयं शुश्रूषक इति व्यपदेशो येन स तथा। 'अतोऽन्यत्' ब्राह्मणसेवनादन्यद्व्रतोपवासादि । 'तैः' द्विजातिभिः । 'स्वकुटुम्बात्' स्वकुटुम्बार्थाद्धनात् । 'शक्तिः' सामर्थ्यम् । 'दाक्ष्यं' कार्येषु कौशलम् । 'भृत्यस्य परिग्रहं' पुत्रदारादि । 'उच्छिष्टम्' अतिथ्यादिभुक्तशेषम् । एतच्चोच्छिष्टाशनमकृतदारपरिग्रहस्य। इतरस्य पाकयज्ञाधिकारात् । 'पुलकाः'असारधान्यानि । 'परिच्छदाः'छत्रोपानत्प्रभृतयः ।

गौतमः[3]

शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके। श्राद्धकर्म, भृत्यभरणं, स्वदारवृत्तिः, परिचर्या चोत्तरेषां, तेभ्यो वृत्तिं लिप्सेत । जीर्णान्युपानच्छत्रवासःकूर्चादीन्युच्छिष्टाशनं, शिल्पवृत्तिश्च यं चाऽऽर्यमाश्रयेत् भर्तव्यस्तेन क्षीणोऽपि । तेन चोत्तरस्तदर्थोऽस्य निचयः स्यादनुज्ञातोऽस्य नमस्कारो मन्त्रः । पाकयज्ञैः स्वयं यजेतेत्येके ।

1 कल्प्यते तस्य इति गृ. रत्ना., ४७६
2 इतरे तु प्रतिषेधाः सङ्कोचाभावानुरोधेनान्यशूद्रविषया इति गृ. रत्ना., ४७६
3 २. १. ५१

'एकजातिः' एकजन्मा, उपनयनरूपजन्माभावात् । 'उत्तरेषाम्' उत्कृष्टानां ब्राह्मणादीनाम् । 'कूर्चः' तृणमयमासनम् । 'तेन' अर्थेन । 'क्षीणो' वृत्तिहीनः । 'तेन' शूद्रेण । 'उत्तरः' आर्यः । क्षीण इत्यनुवर्तते । 'तदर्थः' आर्यार्थः । 'अस्य' शूद्रस्य । 'निचयो' धनसञ्चयः । 'स्वयं' स्वयमेव कुर्यात् । न पत्नीपुत्रादिना कारयेदित्यर्थः । 'पाकयज्ञै'रिति ।

वसिष्ठः[1]

एतेषां परिचर्या शूद्रस्याऽनियता वृत्तिरनियतकेशवेषाः । सर्वेषां वा मुक्तशिखावर्जम् ।

'एतेषां' त्रैवर्णिकानाम् । 'अनियता' एतावद्दातव्यमिति नियमरहिता । 'अनियतकेशवेषाः' सर्वे अनियताः । केशवेशाश्च शूद्रस्य इत्यन्वयः । 'सर्वेषां' ब्राह्मणादीनाम् । 'मुक्तशिखावर्जमि'ति । मुक्तशिखात्वं न केनाऽपि कर्तव्यमित्यर्थः ।

बौधायनः[2]

[3]शूद्राणामार्याधिष्ठितानामर्द्धमासि मासि वा वपनम् । आर्य्यवदाचमनकल्पः ।

1 २. २०

2 १. १०. २०

3 अधिष्ठानात् मासि मासि वापनमार्यवत् इति गृ. रत्ना., ४७७

'आचमनकल्पः' आचमनेतिकर्तव्यता । 'उपवीतं' वस्त्रविन्यासादिः । 'आर्यपरतन्त्राणां' न स्वतन्त्राणां शिल्पादिजीविनाम् ।

मनुः[1]

शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम् ।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं तु भोजनम् ॥

'न्यायवर्तिनां' द्विजशुश्रूषापराणाम् । 'शौचकल्पः' सूतकापगमाचमनादिप्रकारः ।

याज्ञवल्क्यो[2] विश्वामित्रश्च प्रथमे

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत् ।
शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन्[3] ॥
भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः[4] ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥

'भार्यारतिः' भार्यायामेव परमस्य रतिर्न सामान्यस्त्रीपरस्त्रीषु । श्राद्धकरणं 'नमस्कारेण मन्त्रेण' नम इत्यनेन मन्त्रेण चतुर्थ्यन्तदेवतासहितेन ।

1 ५. १४० ४७८

2 १. १२० याज्ञवल्क्यः—शूद्रस्य इति गृ. रत्ना., ४७८

3 हितमाचरेत् या. अप.,

4 भार्यारुचिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः इति गृ. रत्ना., श्राद्धक्रियापरः या. वी. २०८, या. अप., १६३

मनुः[1]

अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् ।
पुत्रदारात्ययं[2] प्राप्तो जीवेत् कारुककर्मभिः ॥
यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कारुककर्माणि शिल्पानि विविधानि च ॥

'अत्ययः' कृच्छ्रम् ।

पराशरः [ १, ७२ ]

लवणं मधु [3]मद्यं वा तक्रं दधि घृतं पयः ।
न दुष्येच्छूद्रजातीनां [4]कुर्यात् सर्वेषु विक्रयम् ॥

कालिकापुराणे

विक्रयं सर्ववस्तूनां[5] कुर्वन् शूद्रो न दोषभाक् ।
मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चमम् ॥

अयं च मध्वादिविक्रयनिषेधः शूद्रस्य नात्यन्तापदि बोद्धव्यः[6] ।

1 १०. ९९

2 दारात्यये प्राप्ते इति या. अप., १६२

3 तक्रं वा दधि मद्यं गृ. र., ४७६

4 क्वचित् गृ. र., ४७६

5 पण्यानामिति गृ. रत्ना., ४७६

6 अयं च सर्वनिषेधः शूद्रस्यानापदि नात्यन्तापदि बोद्धव्य इति कल्पतरुः । मद्ये विधिनिषेधयोर्दर्शनात् तादृशविषयपरमेवेदमुचितमिति तु प्रमाणविदः इति गृ. रत्ना., ४७६

व्यासः

न चेह शूद्रः पततीति निश्चयो
न चैव संस्कारमिहाऽर्हतीति च।
श्रुतिप्रयुक्तं न च धर्ममश्नुते
[1]न चापि धर्मात् प्रतिषेधनं श्रुतौ ॥

'न चेह शूद्रः पतती'ति मांसादिविक्रयेणापि। 'संस्कारः' इहोपनयनम्। 'श्रुतिप्रयुक्तं' श्रौतमग्निहोत्रादि। 'धर्मात्' श्रुतौ कथितात्।

मनुः[2]

न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति।
नाऽस्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥
धर्मेप्सवस्तु धर्मज्ञाः सतां धर्ममनुष्ठिताः।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥
यथा यथा हि [3]सद्वृत्तमातिष्ठत्यनसूयकः।
तथा [4]तथेमं चाऽमुञ्च लोकमाप्नोत्यनिन्दितः ॥
शक्तेनाऽपि हि शूद्रेण न कार्यो धनसञ्चयः।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥

'मन्त्रवर्जं' वैदिकमन्त्रवर्जम्।

1 न चैव धर्मात् गृ. र., ४८०

2 १०. १२६

3 यद्वृत्तं इति गृ. रत्ना., ४८०

4 तथैनं चामुं च लोकं गृ. र., ४८०

आपस्तम्बः[1]

पूजा वर्णज्यायसां कार्या, वृद्धतराणां च, हृष्टो दर्पति। हृप्तः स्वधर्ममतिक्रामति। धर्मातिक्रमे खलु पुनर्नरकः।

'पूजा' नमस्कारादिका। 'वृद्धतराणां' सजातीयानामपीत्यर्थः।

गौतमः[2]

सर्वे चोत्तरोत्तरं परिचरेयुरार्यानार्ययोर्व्यतिक्रमे कर्मणस्साम्यम्।

'आर्यानार्ययोः' उत्कृष्टापकृष्टजातीययोः स्वकर्मव्यतिक्रमे साम्यम्। परस्परं पूज्यपूजकभावो नाऽस्तीत्यर्थः।

मनुः[3]

अनार्यमार्यकर्माणमार्यश्चाऽनार्यकार्मिणः।
सम्प्रधार्याऽब्रवीद्धाता न समौ नाऽसमाविति॥

'न समौ' जातितः एकस्योत्कृष्टत्वात्। 'नाऽसमौ' उत्कृष्टजातेरपि ब्राह्मणादेः नीचकर्मकारित्वात्। तेन तस्येतरेण शुश्रूषादिकं न कर्तव्यमिति तात्पर्यार्थः।

विष्णुपुराणे

पारतन्त्र्यं समस्तेषु तेषां कार्येषु वै ततः।

1 १. १२. २–३

2 २. १. ६८

3 १०. ७३

जयन्ति ते निजान् लोकान् क्लेशेन महता द्विजाः ॥
द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।
निजान् जयति वै लोकान् शूद्रो धन्यतरस्ततः ॥
भक्ष्याभक्ष्येषु नाऽस्याऽस्ति पेयापेयेषु वै पुनः ।
नियमो मुनिशार्दूल तेनाऽसौ साध्वितीरितम् ॥

नरसिंहपुराणे[1] शूद्राधिकारे

अयाचितः प्रदाता स्यात्कृषिं वृत्यर्थमाश्रयेत् ।
पुराणं [2]श्रृणुयान्नित्यं नरसिंहस्य पूजनम् ॥

महाभारते

दूराच्छूद्रेणोपचर्यः ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च ॥

पैठीनसिः

ब्राह्मं प्राजापत्यं च स्थानं ब्राह्मणस्य, ऐन्द्रं राजन्यस्य, मारुतं वैश्यस्य, गान्धर्वं शूद्रस्य ।

स्वे स्वे कर्मण्यभिरताः स्वं स्वं स्थानं व्रजन्ति ते ।

इति भट्टहृदयधरात्मजमहासान्धिविग्रहिक-
भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
गृहस्थकाण्डे वृत्तिपर्व समाप्तम्[3] ॥

1 ५८. ११. अयाचितं प्रदातव्यं कृषिं वृत्यर्थमाचरेत् । ग्रहाणां मासिकं कार्यं पूजनं न्यायधर्मतः ॥ इति मुद्रितनरसिंहपुराणपाठः

2 शृणुयाच्चैव, या. अप., १६२.

3 The colophon is omitted in ना. को.

१७

# अथ स्नातकव्रतानि

तत्र मनुः[1]

अतोऽन्यतमया वृत्या जीवंस्तु स्नातको द्विजः ।
स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥

'अन्यतमया वृत्ये'ति । अनुवादकत्वादेकत्वमविवक्षितम् । तेनाऽनेकवृत्तिजीवनेऽप्यविरोधः । 'व्रतम्' इदं मया कर्तव्यमिदं न कर्तव्यमिति शास्त्रविहितः सङ्कल्पविशेषः । 'वेदोदितं' प्रत्यक्षानुमेयवेदबोधितम् । 'स्वकं' स्वाश्रमविहितम् । 'नित्यं' यावज्जीवम् । 'अतन्द्रितः' अनलसः । 'यथाशक्ति' असम्भवे किञ्चिदङ्गहानेनाऽपि ।

व्यासः

वर्णाश्रमाश्रितो धर्मो वेदकर्माश्रितो मतः ।
विद्वान् हि वैदिकं कर्म कुर्वाणोऽभीष्टमश्नुते ॥
प्रधानं[2] वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठोऽतिप्रमाणं[3] बाधयन् यात्यधोगतिम् ॥

1 ४, १३–१४.
2 प्रमाणं, गृ. र., ४८२.
3 गुणभूतः, गृ. र., ४८२.

'वेदकर्माश्रितः' वैदिककर्माश्रितः। 'गुणनिष्ठः' स्मृत्याचारनिष्ठः। 'अतिप्रमाणं' वेदम्।

मनुवसिष्ठौ[1]

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा।
नाशयन्त्याशु पापानि महापातकजान्यपि॥

'वेदाभ्यासः' अत्र ब्रह्मयज्ञादिः[2]।

आपस्तम्बः[3]

योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च प्रतिपादयिता च तीर्थे यन्ता वाऽतीर्थे यतो भयं न स्यात्। सङ्ग्रहीता मनुष्यान्, भोक्ता च धर्माविप्रतिषिद्धान् भोगानेवमुभौ लोकावभिजयति।

'योक्ता' उद्योगी। 'धर्मयुक्तेषु' विहितेषु नाऽधर्मनिष्प्रयोजनयोः। 'तीर्थे' पात्रे। 'यन्ता' अपात्रदानादुपरतः। 'यत' इति। भयहेतोस्तस्करादेरपात्रस्याऽपि दातव्यमित्यर्थः। 'मनुष्यान्' कर्मकरादीन्। 'भोगान्' कुङ्कुमादीन्।

संवर्तः

कुर्य्याद्गृह्याणि कर्माणि स्वभार्यापोषणं परम्।
ऋतुकालाभिगामी स्यात्प्राप्नोति परमां गतिम्॥

परं धर्ममाहुरिति शेषः।

1 मनुः—इति गृ. रत्ना., ४८२.; मनु., ११. २४५; वसि., २७. ७.

2 ब्रह्मयज्ञादन्य इति ना. को.

3 २०. १८–२३.

सुमन्तुः

शेषान्नमृतुगामित्वं पञ्चयज्ञार्थकर्म[1] च ।
तुल्यैश्च सह सम्बन्धो गृहस्थस्य विधीयते ॥

'तुल्यैश्च सह सम्बन्धः' असत्युत्तमे बोद्धव्यः ।

मनुः[2]

उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥
उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्जयेत् ।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवाये तु शूद्रताम् ॥

'प्रत्यवाये' विपरीताचरणे ।

बृहस्पतिः[3]

सत्यं समधिकं कुर्यादुपेयादीश्वरं सदा ।
वैरं निर्हेतुकं वादं न कुर्यात् केनचित्सह ॥
ज्ञातिबन्धुविवाह्येभ्यो मित्रमभ्यधिकं स्मृतम् ।
समानमसमानं वा न[4] कुर्वीत प्रयत्नतः ॥
शोकारातिभयत्राणप्रीतिविस्रम्भभाजनम् ।
आपद्धनं[5] च मित्रं च लोके बन्ध्वधिकं[6] हि तत् ॥
असमानोऽधिविस्रम्भो विश्वासः तस्य गर्हितः ।

1 यज्ञाः स्वकर्म च इति गृ. रत्ना., ४८३.
2 ४. २४४–२४५.
3 'सख्यं समाधिकैः' इति बृ. आप. २५–२७ अ.
4 प्रकुर्वीत, इति गृ. रत्ना., ४८४ ; बृ. आप. २६.
5 बलं च, गृ. र., ४८४ ; बृ. आप. २७.
6 बह्वधिकम् , गृ. र., ४८४.

वसिष्ठः[1]

आहारनिर्हारविहारयोगाः
सुसंवृता धर्मविदा तु कार्याः ।
वाग्बुद्धिवीर्याणि तपस्तथैव
धनायुषी गुप्ततमे तु कार्ये ॥

'निर्हारः' मूत्रपुरीषोत्सर्गः । 'विहारः' स्त्रीसेवा । 'योगः' समाधिः । 'वाग्गुप्तिः' असत्यालापादिपरिवर्जनेन । 'बुद्धिगुप्तिः' अशुभसङ्कल्पादिपरिवर्जनेन । वीर्यं' सामर्थ्यम् । तस्य रक्षा अस्थाने विनियोगाभावः । 'तपो' ब्रह्मचर्यादि । तस्य रक्षा विस्मयाकरणम् । 'गुप्ततमे' अप्रकाशिततमे ।

दक्षः

आयुर्वित्तं गृहच्छिद्रं मन्त्रो मैथुनमौषधम् ।
तपो धर्मोऽवमानं [2]च नव गोप्यानि सर्वदा ॥
प्रायोग्यमृणशुद्धिश्च दानाधमनविक्रियाः ।
कन्यादानं वृषोत्सर्गो रहःपापं च कुत्सितम् ॥

'गृहच्छिद्रम्' अनर्थहेतुरभ्यसूयादि । 'प्रायोग्यं' वृद्ध्या धनप्रयोगः । 'ऋणं' ऋणग्रहणम् । ऋणस्यैव शुद्धिः । 'दानं' भूम्यादेः स्थावरस्य । 'आधमनम्' आधिः ।

मनुः[3]

वयसः कर्मणोऽर्थस्य श्रुतस्याऽभिजनस्य च ।
वेषवाग्बुद्धिसारूप्यमाचरन्विचरेदिह ॥

1 ६, ९.
2 तपो धर्मो विमानं च इति गृ. रत्ना., ४८४.
3 ४, १८.

'सारूप्यम्' औचित्यम्। तेन वय आद्युचिता वेषादयः कर्तव्या इत्यर्थः।

विष्णुः [७१, ५–७]

वयोऽनुरूपं वेषं च कुर्यात्। श्रुतस्याभिजनस्य [धनस्य] च देशस्य च। नोद्धतः॥

मनुवसिष्ठौ [म. ४, १४५–१४६]

मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः॥
मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्।
जपतां जुह्वतां चैव विनिपातो न विद्यते॥

'मङ्गलाचारः' प्रातर्गोरोचनालम्भनादि। 'विनिपातः' इष्टवियोगादि।

विष्णुः [२३. ५७–५९]

गावः पवित्रं माङ्गल्यं गोषु लोकाः प्रतिष्ठिताः।
गावो वितन्वते यज्ञं गावः सर्वाघसूदनाः॥
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना।
षडङ्गमेतत् परमं मङ्गलं[1] सर्वदा गवाम्॥
शृङ्गोदकं गवां पुण्यं सर्वाघविनिषूदनम्॥

शङ्खलिखितौ[2]

अथ रक्षोघ्नानि अजाबलिसुवर्णरजतताम्रचन्दनमणयः। सर्पिः सर्षपक्षौमकृष्णाजिननागयवलाजादर्शप्रियङ्गुगोरोच-

1 माङ्गल्यं गृ. र., ४८६.
2 शङ्खलिखिताविव्येतत् गृ. रत्नाकरे (पृ. ४८६) न दृश्यते.

नामनःशिलाः । गौः पूर्णकुम्भनागशमीपलाशपुष्पदर्भाणि[1] च सदा स्वाध्यायधन्यः, त्रयाणां च वर्णानां पूर्वरात्रे जागरणम् ।

'नागः' हस्ती । 'दर्भाः' कुशाः । 'पुष्पाणि' नीलोत्पलादीनि ।

पृथिवीं प्रति लक्ष्मीवाक्ये विष्णुः[2]

वसाम्यथाऽर्के च निशाकरे च तारागणाढ्ये गगने विमेघे ।
[3]तथा लसल्लम्बपयोधरे च शक्रायुधाढ्ये सतडित्प्रकाशे ॥
तथा सुवर्णे विमले च रौप्ये रत्नेषु वस्त्रेष्वमलेषु भूमौ[4] ।
प्रासादमालासु च पाण्डुरासु देवालयेषु ध्वजभूषितेषु ॥
सद्यः कृते वाप्यथ गोमये नु मत्ते गजेन्द्रे तुरगे प्रकृष्टे[5] ।
वृषे तथा दर्पसमन्विते च विप्रे तथैवाऽध्ययनोपपन्ने[6] ॥
सिंहासने चाऽमलके च बिल्वे छत्रे च शङ्खे च सदैव[7] पद्मे ।
दीप्ते हुताशे विमले च खड्गे आदर्शबिम्बे च सदा स्थिताऽहम् ॥
पूर्णोदकुम्भेषु सचामरेषु सतालवृन्तेषु [8]च भूषणेषु ।
भृङ्गारपत्रेषु[9] मनोहरेषु[10] मृदि स्थिताऽहं च [11]नवोद्धतायाम् ॥

1 नागदर्भपुष्पाणि । सदा स्वाध्यायो धन्यः । त्रयाणां वर्णानां पूर्वरात्रो जागरणं गृ. र.,

2 ९९., ९–२३. The Editor of गृ. र. has failed to note the citation as from विष्णुस्मृति.

3 मेघे—तथालम्बपयोधरे च शक्रायुदाढ्ये च तडित्प्रकाशे इति मुद्रित कोशे.

4 भूमे इति मु. को.

5 प्रहृष्टे इति गृ. रत्ना., ४८७, मु. कोशे च.

6 अध्ययनप्रपन्ने इति मु. को.

7 तथैव पद्मे इति मु. को.

8 विभूषणेषु गृ. र., ४८७ ; विभूषितेषु इति मु. को.

9 भृङ्गारपात्रेषु इति मु. को.

10 मनोरमेषु गृ. र., ४८७.

11 नवोद्धृतायाम् इति गृ. रत्ना., ४८७, मु. को. च.

क्षीरे तथा सर्पिषि शाद्वलेषु क्षौद्रे तथा दध्नि पुरन्ध्रिगात्रे ।
देहे कुमार्याश्च तथा सुराणां तपस्विनां यज्ञकृतां च देहे ॥
शूरे च संग्रामविनिर्गतेऽहं[1] स्थिता मृते स्वर्गमितः प्रयाते[2] ।
वेदध्वनौ चाऽप्यथ शङ्खशब्दे पुण्याहशब्दे[3] च सवाद्यघोषे ॥
राजाभिषेके च तथा विवाहे यज्ञे [4]नरे स्नातशिरस्यशुष्के ।
पुष्पेषु शुक्लेषु च पर्वतेषु फलेषु [5]रम्येषु सरिद्वरासु ॥
सरस्सु पूर्णेषु तथार्जुनीषु[6] सशाद्वलायां भुवि पद्मषण्डे[7] ।
बालेषु वत्सेषु[8] शिशौ प्रहृष्टे साधौ नरे धर्मपरायणे च ॥
आचारसेविन्यथ शास्त्रवित्वे[9] विनीतवेषे च तथा सुवेषे ।
सुशुद्धदन्ते मलवर्धिते च [10]मिष्टाशने चातिथिपूजके च ॥
स्वदारतुष्टे निरते च धर्मे सत्वोत्करे[11] चात्यशनाद्विमुक्ते ।
सदा सुपुण्येषु[12] सुगन्धिगात्रे[13] नित्यानुलिप्ते[14] च विभूषितेषु[15] ॥
[16]सत्ये स्थिते भूतहिते निविष्टे क्षमायुते[17] क्रोधविवर्जिते वा ।

1 शूरे .... विनिर्गते च इति मु. को.

2 प्रयाते इत्यनन्तरं ना. कोशे पञ्चोत्तरशततमं पत्रं त्रुटितम् । पञ्चोत्तरशततमे पत्रे. सुविभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु इत्यारभ्यते.

3 स्वाहास्वधायामथ वाद्यशब्दे इति मु. को.

4 यज्ञे वरे स्नातशिरस्यथापि इति मु. को.

5 पक्वेषु गृ. र., ४८८.

6 तथार्जुनीषु इति मु. को.

7 पद्मखण्डे इति मु. को.

8 बाले च वत्से च गृ. र., ४८८ ; वने च वत्से इति मु. को.

9 नित्ये इति गृ. र. (पृ. ४८८.) मु. को. च.

10 मृष्टाशाने इति मु. को.

11 धर्मोत्कटे इति मु. को.

12 सदा त्सुपुण्ये च इति गृ. र; सदा सुपुष्पे इति मु. को.

13 सुगन्धिपात्रे इति गृ. र., पृ.४८८.

14 सुगन्धिलिप्ते इति मु. को.

15 विभूषिते च इति गृ. र., ४८८, मु. को. च.

16 सत्यस्थिते इति गृ. र., ४८८.

17 क्षमान्विते इति मु. को.

[1]सुसंयतार्थे परकार्यदक्षे कल्याण[2]चित्तेषु सदा सुनीते ॥

'लम्बपयोधरे' लम्बमानस्तनधारिणि।

'कृते' संस्कृते। 'अर्जुनीषु' गोषु।

महाभारते

वसामि सत्ये सुभगे सुदान्ते दक्षे[3] नरे कर्मणि वर्तमाने।
[4]अक्रोधिने दैवपरे कृतज्ञे जितेन्द्रिये नित्यमुदीर्णसत्त्ये[5] ॥
नाकर्मशीले पुरुषे वसामि न नास्तिके साङ्कृतिके कृतघ्ने।
नभिन्नसत्वे [6]न नृसंशवृत्ते न चापि चौरे न च नग्नमूर्खे[7] ॥

ये [8]चाल्पतेजो बलसत्त्वसारा
हृष्यन्ति [9]कुप्यन्ति च यत्र यत्र[10]।
न देवि तिष्ठामि तथाविधेषु
नरेष्वसम्प्राप्तमनोरथेषु[11] ॥
यश्चात्मनः प्रार्थयते न किञ्चि-
द्यश्च स्वभावोपहृतन्तरात्मा[12]।
तेष्वल्पसन्तोषपरेषु[13] नित्यं
नरेषु नाहं निवसामि देवि ॥

1 स्वयं यथार्थ इति गृ. र. ४८९; स्वकार्यदक्षे इति मु. को.

2 चित्ते च सदा विनीते इति गृ. र. ४८९, मु. को. च.

3 प्रगल्भे इति गृ. र. ४८९.

4 अक्रोधने इति गृ. र. ४८९.

5 Lacuna in text filled by गृ. र. ४८९.

6 न भिन्नवृत्ते इति गृ. र. ४८९.

7 न च नग्नमूर्खे इति गृ. र. ४८९.

8 ये वा न तेजोबलसत्वसारा इति गृ. र. ४८९.

9 कुर्वन्ति इति गृ. र. ४८९.

10 यत्र तत्र इति गृ. र. ४८९.

11 मनोरथेषु इति गृ. र. ४८९.

12 स्वभावोपकृतान्तरात्मा इति गृ. र. ४९०.

13 तेष्वल्पसङ्कल्पपरेषु इति गृ. र. ४९०; 'सन्तोषपरेषु' इति अपरपाठः तत्रैव दृश्यते.

वसामि धर्मशीलेषु धर्मज्ञेषु कृतात्मसु ।
वृद्धसेविषु दान्तेषु धर्मज्ञेषु [1]महात्मसु ॥
स्त्रीषु [2]दक्षासु दान्तासु देवद्विजपरासु च ।
वसामि[3] सत्यबालासु स्वभाववितासु च ॥
प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्जयामि ॥
लोलामधोक्षीमवगाहिनीञ्च व्यपेतशीलां कलहप्रियांश्च ।
निद्राभिभूतां सततं शयानामेवं विधां स्त्रीं परिवर्जयामि ॥
सत्यासु नित्यं प्रियदर्शनासु सौभाग्ययुक्तासु गुणान्वितासु ।
[4]वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु ॥
यानेषु कन्यासु [5]विभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि[4] फुल्लासु च पद्मिनीषु नक्षत्रवेदीषु च [6]शारदीषु ॥
शैलेषु गोष्ठेषु तथा [7]रणेषु सरस्सु फुल्लोत्पलपङ्कजेषु ।
नदीषु[4] हंसस्वरनादिनीषु क्रौञ्चावगुष्टस्वरशोभितासु ॥
विस्तीर्णकूलद्रुमशोभितासु[8] तपस्विसिद्धद्विजसेवितासु ।
[4]वसामि नित्यं सुबहूदकासु [9]सुनक्रमकराकुलितोदकासु ॥

1 सविज्ञेषु महात्मसु इति गृ. र. ४९०.

2 कान्तासु इति गृ. र. ४९०.

3 Line missing in गृ. र.

4 These ślokas are omitted hy गृ. र.

5 The gap caused by the loss of folio 105 is resumed in folio 106 from here in ना. को.

6 नारदीषुना. ना. को.

7 रणेषु—Udaipur.

8 माण्डितासुना. ना. को.

9 सिंहैर्गनैश्चाना. ना. को.

मत्ते गजेन्द्रे वृषभे नरेन्द्रे
सिंहासने सत्पुरुषे च नित्यम् ।
[1]यस्मिन् गृहे हाव्यति हूयते च
गोब्राह्मणे चार्च्यते देवताश्च ॥
[2]काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन् गृहे वासमुपैमि नित्यम् ।
स्वाध्याययुक्तेषु[3] द्विजेषु नित्यं क्षत्रे [4]च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि शूद्रे च शुश्रूषणनित्ययुक्ते ॥
नारायणे त्वेकमना वसामि
सर्वेण भावेन शरीरभूता ।
अस्मिन्[5] धर्मः सुमहान् हि [6]विष्णौ
ब्राह्मण्यता[7] चात्र तथा प्रियत्वम् ॥
नाहं [8]शरीरेण वसामि देव नैतन्मया शक्यमिहाभिधातुम् ।
यस्मिन् स्वभावेन वसामि पुंसि स वर्धते धर्मयशोऽर्थकामैः ॥

[9]तथा इन्द्रं प्रति श्रीरुवाच

असुरेष्ववसं पूर्वं सत्वधर्मनिबन्धना ।
विपरीतान् सुतान् बुद्ध्वा त्वयि वासमरोचयम् ॥

1 यस्मिन् गृहे हूयते हव्यते च इति गृ. र. ४९१.
2 कालेषु इति गृ. र. ४९१.
3 क्ते द्विजपुङ्ग वे च—ना. को.
4 तु, गृ. र. ४९१.
5 यस्मिन्, गृ. र. ४९१. ; तस्मिन् हि—ना. को.
6 विशिष्टौ—ना. को.
7 निविष्टो ब्रह्मण्यता, गृ. र., ४९१.
8 नाहं शरीरेषु वसामि देवि, इति गृ. र. ४९१.
9 इत आरभ्य गृ. रत्नाकरे न दृश्यते.

सभासदां तु वृ[1]द्धानां सत्याः कथयतां कथाः ।
प्राहसश्च चाभ्यसूयश्च सर्ववृद्धान् गुणावराः ॥
उच्चैश्चाप्यवदन्नात्रौ नीचैस्तत्राग्निमज्वलन् ।
पुत्राः पितॄनभ्यवदन् स्त्रियश्चाभ्यवदत् पतीन् ॥
नाशौचमनुरुध्यन्त तेषां मूढजनास्तथा ।
मनसा कर्मणा वाचा भक्तमासीदनावृतम् ॥
विप्रकीर्णानि धान्यानि तथा मूषिकभोजनम् ।
अपावृतं पयो ऽतिष्ठदुच्छिष्टाश्च स्पृशं घृतम् ॥
कुद्दालदातृपिटकं प्रकीर्णं कांस्यभाजनम् ।
द्रव्योपकरणं सर्वं नाऽ[2]नुवेक्षत् कुटुंबिनी ॥
प्रकारागारविध्वस्ता[3] न च तत्प्रत्यवेक्षतः ।
आश्रमस्था विकर्मस्थाः प्रद्विषन्ति परस्परम् ॥
ये च वेदविदो विप्रा [4]विस्पष्टमनृताश्च ये ।
निरन्तरविशेषास्ते बहुमानावमानयोः ॥

महाभारते

हारमाभरणं वेषं गतिस्थितिमवेक्षितिम् ।
आसेवन्ते भुजिष्यान्वै दुर्जनाचरितं विधिम् ॥
स्त्रियः पुरुषवेषेण नराः स्त्रीवेषधारिणः ।
क्रीडारतिविहारेषु परां मुदमवाप्नुवन् ॥
प्रभवभ्यपुरादायानर्हेभ्यः प्रतिपादितान् ।
नाभ्यवर्तन्त नास्तिक्या[5]द्दतितं सम्भवेष्वपि ॥

1 त्तानां—ना. को.
2 न्व—ना. को.
3 ध्वंसानू—ना. को.
4 मृजवश्च—ना. को.
5 वर्तन्तः—ना. को.

श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानुशासनम् ।
अन्वशासच्च भर्तारं सम्मुखी याति जल्पनैः ॥
प्रयत्नेनापि चारक्षेद्वित्तं पुत्रस्य वै पिता ।
व्यभजच्चापि संरम्भात् दुःखवासं तथा वसन् ॥
तैश्चैव[1] सादिताचारा नाचारेषु विपर्यये ।
नाऽहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः ॥

तथा

गृहे पारावता[2] धन्याः शुका वै सारिकास्तथा ।
गृह एते प्रशस्ताः स्युः तथा वै तैलपायिकाः ॥

हारीतः

आद्या व्याहृतयस्तिस्रः [3]स्वाहा स्वधा नमो वषट् ।
यस्यैते[4] वेश्मनि सदा ब्रह्मलोकस्य एव सः[5] ॥

तथा

यस्य वेदमयं चक्षुः [6]वाचं च व्याहृतीमयम् ।
तेजोमयं[7] शरीरं च सकस्मादवसीदति ॥

पैठीनसिः

[8]हुताग्निहोत्रस्य कृताह्निकस्य
समाप्तजप्यस्य पथि स्थितस्य ।

1 तेष्वेवमानाचारानायरेत्सु—ना. को.
2 'तथा भारतवाक्यम्' इति गृ. र., ४९१.
3 स्वधा वा नमकावषट्—ना. को.
4 यस्यैत, गृ. र., ४९२.
5 "'आद्या' भूर्भुवःस्वरिति व्याहृतयः" इति गृ. र. ४९२.
6 बीजञ्च, गृ. र. ४९२.
7 तपोमयं, गृ. र. ४९२.
8 कृताग्निहोत्रस्य, गृ. र. ४९२.

ये ब्राह्मणस्योपरि दिव्यलोकाः
काङ्क्षन्ति [1]ये वै ऋषयः समस्ताः ॥

[2]**विष्णुः** [८१, ९०]

श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः ॥

[2]**मनुः** [४–१७८]

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन[3] गच्छन् न रिष्यति ॥

येनानुष्ठानप्रकारेण 'न रिष्यति' न बाध्यते ।
इदं च वैकल्पिकविषयम् ।

[2]**हारीतः**

कर्मणा प्राप्नुया[4]ल्लोकान्कर्मणा मुच्यतेऽशुभात् ।
कर्मणा सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति[5] ॥
अहिंस्रे [6]कर्मणि शुभे मोक्षं गच्छति पण्डितः ।
एतद्वः कथये विप्रा नाकर्मा किञ्चिदाप्नुयात् ॥

'अहिंस्रे' अविहिता हिंसारहिते । 'पण्डितो'ऽत्र परमात्मज्ञः । 'अकर्मा' चाऽऽश्रमकर्मरहितः ।

**वृद्धशातातपः**

श्वःकार्यं [7]सद्यः कुर्वीत पूर्वाह्णे चापराह्णिकम् ।

1 तान्वै, गृ. र. ४९२.
2 गृ. रत्नाकरे न दृश्यते.
3 नागच्छन्प्रदुष्यति—ना. को.
4 नाकान्—ना. को.
5 सेप्सितम्—ना. को.
6 ह्येगच्छति—ना. को.
7 अद्य, गृ. र., ४९३.

न हि प्रतीक्षते मृत्युः कृतं वास्य न वाऽकृतम् ॥

इदं चादरातिशयार्थमनियतकालविषयम्[1] ।

मनुः [४—१५९-१६१]

यद्यत्परवशं कर्म [2]तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशन्तु स्या[3]त्तत्तत्सेवेत यत्नतः ॥
[4]सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥
यत्कर्म कुर्वतो ऽस्य स्यात् परितोषोन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥

[5]यत्स्ववशं परप्रार्थनायत्तम् । एतच्च यथा [6]यथाकथंचिद्धनसंभवे सन्तोषपरताप्रतिपादनार्थम् । 'यत्कर्म कुर्वतः' इत्यादिना आत्मतुष्टेः । पुनर्वचनं स्नातकव्रतत्वज्ञापनार्थम् ।

लघुहारीतः

वनेऽपि दोषाः प्रभवन्ति रागिणां
　गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
　निवृत्तरागस्य गृहं तपोवनम् ॥

सत्कर्मोद्देशक्रमे [7]दक्षः ।

सन्ध्यास्नानं जपो होम स्वाध्यायो देवतार्चनम् ।

1 'इदं श्वकार्यादावावश्यककरणार्थम्' इति गृ. र. ४९३.
2 तत्प्रयत्नेन, गृ. र. ४९३. Kullūka accepts the text.
3 एतत्, गृ. र. ४९३.
4 The following two verses are omitted in ना. को.
5 यत्परवशं गृ. र., ४९३.
6 कथञ्चित्, गृ. र. ४९३.
7 गृ. रे. न दृश्यते.

वैश्वदेवेक्षणातिथ्यमुद्धृत्तं वाप्य शक्तितः ॥

'ईक्षण'मतिथि प्रदीक्षणम्। 'उद्धृतं वाप्य शक्तितः'। अतिथिभोजनासामर्थ्यें स्तोकप्यन्नमुद्धरेदित्यर्थः।

[1]यमः

किं ब्रह्मचर्यैर्यदि दारसेवी
किञ्चोपवासैः यदि शेषभोजी।
मौनेन किं स्याद्यदि सत्यवादी
सत्येन किं स्याद्यदि [2]वानृशंसः ॥

हारीतः

सत्यवादी, सदा तुष्टः, ऋतुकालाभिगामी, नित्यं स्नानशीलो, नित्यं चाक्रोधनो, [3]ऽपरोपताप्य कुहको,[3] नित्योदकी, नित्ययज्ञोपवीती, नित्यं स्वाध्यायी, धर्मान्वेषी, पतितान्नवर्जी, [4]वीतराग-लोभ-मोहो, [5]वित्तशाठ्यविवर्जितो, ऽनसूयको, गृहस्थो भवति।

'अकुहकः' अमायावी। [6]'खर्वः' वक्रः। 'नित्योदकी सोदककमण्डलुधारी।

कश्यपः

[7]आहिताग्निः, [8]भवत् स्वदारनिरतः, स्नानान्नृतुकालाभिगमी, देव-पितृ-भूत-मनुष्य-ब्रह्मयज्ञानुपसेवमान,

1 Omitted by ना. को.
2 चानृशंसः, गृ. र. ४९४.
3 परोपताप्यकुहको खर्वो, गृ. र., ४९४.
4 'निवृत्तरागमोहः अनृतसाध्यवर्जितः अनसूयकः गृहस्थो भवति' इति गृ. र. ४९४.
5 अनृत—ना. को.
6 शठः—ना. को.
7 गृ. र. ४९४. omits 'भवत्' and 'स्नानात्'.
8 भवेत—ना. को.

**एकद्वित्रिचतुर्णां[1] ब्राह्मणानामातिथ्यं कुर्वाणः, [2]व्रत-नियम-जप्य-होम-मन्त्रपरो, मातापितृभक्तः, [3]भृत्यापत्ययोः शेषान्नभोजी, न चासूयको, यत्किञ्चित् किञ्चाशी, तोलक-भेदक-वेधक-सूचकान् परिहरमाणः श्रेयसा युज्यते ।**

'व्रतं' अत्र यमाः । 'जप्यमन्त्राः' सावित्र्यादयः । 'यत्किञ्चाशी' न रसलोलुपः । 'भेदकः' समयादेः । 'वेधकः' परमर्मणः । 'सूचकः' पिशुनः ।

[4]**वासिष्ठहारीतबौधायनाः** [८-१७]

**नित्योदकी नित्ययज्ञोपवीती**
**नित्यस्वाध्यायी पतितान्नवर्जी ।**
**ऋतौ च गच्छन् विधिवच्च जुह्वन्**
**न ब्राह्मणश्च्यवते ब्रह्मलोकात्[5] ॥**

**उशनाः**

**तत्र वेदविद्याव्रतस्नातकः शुचिर्नित्योदकी नित्ययज्ञोपवीती, [6]उभयकालं नित्यसन्ध्यामुपासीत स्नानशीलः[7] ॥**

**गौतमः** [१-९-६८]

**सत्यधर्मा, आर्यवृत्तः, शिष्टाध्यापकः, शौचशिष्टः, श्रुतिनिरतस्स्यात्, नित्यमहिंस्रो मृदुर्दृढकारी दमदानशीलः ।**

1 र्यां—ना. को.

2 व्रतनियमहोमजप्यमन्त्रपरो मातापितृभक्तिपरो भृत्यापत्ययोः शेषान्नभोजी न चासूयको यत्किञ्चाशी तोलकभेदकवेधकसूचकान् परिहरमाणः श्रेयसा युज्यते ; इति गृ. र. ४९५.

3 कृत्या—ना. को.

4 गृ. र. न दृश्यते.

5 इति—ना. को.

6 कालसन्ध्यामुपासीनः, गृ. र., ४९५.

7 सन्ध्यामुपासीनः, गृ. र., ४९५.

एवमाचारो मातापितरौ पूर्वा[1]परान् संबन्धान् दुरितेभ्यो मोक्षयिष्यन् स्नातकः शश्वत् ब्रह्मलोकात् न च्यवते ।

'सत्यधर्मा' सत्यसन्धः । 'आर्यवृत्तः' आर्यप्रियकारिचरितः । 'शिष्टाध्यापकः' साधूनामध्यापयिता । 'शौचशिष्टः' शौचे यत्नवान् । 'मृदुः' पारुष्यरहितः । 'दृढकारी' आरब्धस्य समापयिता । 'मोक्षयिष्यन्' मोक्षयितुम् । एवमाचार इति [2]सम्बन्धः ।

[3]विष्णुः

त्रिवर्गसेवां सततान्नदानं सुरार्चनं ब्राह्मण[4]तर्पणं च ।
स्वाध्यायसेवां पितृतर्पणं च कृत्वा गृही शक्रसदः प्रयाति ॥

मनुः [४–१७५]

सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा ।
[5]शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः ॥

'शिष्या' शासनीयाः पुत्रादयः। 'बाहुसंयमः' बाहुमूलेन परस्याबाधनम् ।

पराशरः[6]

यावज्जुहोत्यधीते च ददात्यध्यापयत्यपि ।
[7]जपत्यर्चति देवांश्च तावत्तु द्विज उच्यते ॥

1 र्वान्समुद्धरन्दु—ना. को.

2 Omitted in ना. को.

3 तथा इति गौतमवाक्यत्वेन गृ. रत्नाकरे दृश्यते। गौतमस्मृतौ न दृश्यते। विष्णुस्मृतौ दृश्यते च । मनुः विष्णुश्च—ना. को.

4 पूजनं गृ. र. ४९५, ना. को.

5 शिष्यान् शिष्याच्च इति गृ. र., ४९५.

6 पराशरस्मृतौ न दृश्यते.

7 यजत्यतिथिदेवांश्च, गृ. र. ४९६, ना. को.

यमः

ऋषय ऊचुः ।

किं लक्षणो भवेद्धर्मः क्व वा धर्मः प्रतिष्ठितः ।
कः सर्वसम्मतो धर्मः किं च धर्मपरायणम् ॥

यम उवाच ।

तपःपरमको धर्मो [1]दानेज्या लोभलक्षणः ।
[2]मर्यादायां स्थितो धर्मः [3]संस्थया च प्रवर्तते ॥
सत्यं [4]सदुदितः धर्मः सत्यं धर्मपरायणम् ।

'तपःपरमकः' तपःप्रधानकः । 'संस्था' मर्यादा । 'सत्यं' भूतार्थवादित्वम् । द्वितीयसत्यशब्देनात्र ब्रह्मोच्यते[5] ।

दक्षः

विभाग[6]शीलता यस्य क्षमायुक्तो दयालुकः ।
गृहस्थस्तु[7] समाख्यातो न गृहेण गृही भवेत् ॥
दया लज्जा धृतिः श्रद्धा [8]प्रज्ञा त्यागः कृतज्ञता ।
एते यस्य गुणाः सन्ति गृहस्थो [9]मुक्त उच्यते[10] ॥

1 दानेच्छा, गृ. र. ४९६.
2 यमादाय, गृ. र. ४९७.
3 संस्थायै, गृ. र. ४९७.
4 सर्वहितो, गृ. र. ४९७.
5 'द्वितीयसत्यशब्दो ब्राह्मणपरः' इति गृ. र. ४९७.
6 विभागशीलो, गृ. र.
7 गृहस्थः सः, गृ. र. ४९७.
8 पूजा, गृ. र. ४९७.
9 मुख्य उच्यते, गृ. र. ४९७ ; धर्म उच्यते—ना. को.
10 'पूजात्याग' इति स्थाने 'प्रज्ञा योगः' इति क्वापि पाठः इति गृ. र. ४९७.

**यमः**

शौचमध्ययनं दानं [1]नित्यं विषय[2]संज्ञकः ।
अत्र यत्नेन संभाव्यं ब्राह्मण्यं प्राप्य दुर्लभम् ॥

अत्र शौचादिषु यत्नेन यत्नवता [भाव्यं इत्यर्थः[3]]

**शातातपः**

भवेच्छौचपरो नित्यं तथा [4]देहे जितेन्द्रियः ।
अक्रोधः सर्वभूतेषु साधुकारी प्रियंवदः ॥

**बृहस्पतिः[5]**

सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम् ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षो [6]विशिष्यते ॥
तपो धर्मः कृतयुगे यज्ञं त्रेतायुगे स्मृतम् ।
द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः ।

'तिष्यः' कलिः ।

कृते [7]यदब्दाद्धर्मं स्यात्त्रेतायां तु ऋतुत्रयात् ।
द्वापरे तु त्रिपक्षेण कलावह्ना च तत्फलम्[8] ॥

1 सत्यं विषयसंयमः—ना. को.

2 विषयसंयमः, गृ. र.

3 Comment in [ ] from गृ. र., ४९७, needed to complete sentence.

4 तथा चेह, गृ. र. ४९७.

5 संस्कारकाण्ड, ३–५:—'सत्यं ज्ञानं तपो दानमेतद्धर्मस्य साधनम। धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते' ॥

6 विधीयते, गृ. र. ४९७, ना. को.

7 'कृते यदब्धो धर्मः स त्रेतायां ऋतुमाप्नुयात्' इति बृह. संस्का. ५; 'कृते षडब्दात् यो धर्मः स त्रेतायां' इति गृ. र. ४९८, ना. को.

8 'अह्ना तु तद्भवेदि'ति मुद्रित बृहस्पतिः, पृ. २३२.

[1]दानेन भोगी भवति मेधावी वृद्धसेवया।
अहिंसया च दीर्घायुरिति[2] प्राहुर्मनीषिणः ॥

यमः

[3]दया धर्मेण दानेन [4]तपसा ब्रह्मचर्यया।
शमयित्वेन्द्रियग्रामं ब्रह्मलोकमवाप्नुयात् ॥

मनुः [४–२४६]

दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन्।
[5]अहिंसादमदानाभ्यां जयेत्स्वर्गं तथा व्रतैः ॥

हारीतः

दमो दया दानं दृढव्रतत्वं चेति।

ब्राह्मणस्य कुलश्रुतशीलवृत्तावस्थानं दम[6] इत्याचक्षते।

सर्वभूतानुकम्पनं दया। संविभागो दानम्।

त्रिसंध्यमस्कन्नं देवतार्चन-जप-होम-ध्यान[7]-नियमानुष्ठानं दृढव्रतत्वम्। त्रिसन्ध्यं वै नियमिनां पाप्म। शीर्यते तपोभूयस्त्वमुपैति ब्रह्म प्रकाशतां गच्छति। तस्मात्त्रिसन्ध्यं नियमी स्याद्ब्राह्मणस्येति।

'ब्राह्मणस्य' ब्राह्मणग्रहणमेतेषु तस्य यत्नातिशयार्थम्। 'शीलं' ब्राह्मण्यतादि। 'अस्कन्दनं' सर्वाङ्गोपेतं

1 बृह. आपद्धर्मकाण्ड, २४. (पृ. ३६९).
2 'इत्थम्' इति मुद्रित बृह. गृ. र. (पृ. ४९८) च.
3 यदा (?), गृ. र.
4 'व्रतेन' 'ब्रह्मचर्यया', गृ. र. ४९८.
5 'अहिंसो', गृ. र. ४९८, कुल्लूकपाठश्च.
6 इत्याहुः, गृ. र., ४९८.
7 होमाध्ययन, गृ. र. ४९८, ना. को.

अस्खलितं वा। देवतार्चनजपहोमाध्ययनान्येव नियमाः। 'तेषामनुष्ठानं'[वा 'नियमानुष्ठानं[1]] त्रिसन्ध्यमिति सन्ध्यात्रितयकाले। यथायोगमेषामनुष्ठानं कर्तव्यमित्यर्थः।

पुनर्हारीतः

स्थितिरविच्छिन्नवेदावेदिता अयोनिसङ्करिता अविच्छिन्नार्षेयत्वं चेति कुलगुणाः। वेदाङ्गानि धर्मोध्यात्मविज्ञानं स्थितिश्चेति षड्विधं श्रुतम्।

क्षमा दमो दया दानमहिंसा गुरुपूजनम्।

शौचं स्नानं जपो होमस्तपः स्वाध्यायः सत्यवचनं संतोषो दृढव्रतत्वं चेति।

गौतमः[2]

सर्वत एवात्मानं गोपायीत[3]।

यमः

धर्मक्षेत्रं शरीरं हि यत्नेन परिपालयेत्।
शरीरात् स्रवते धर्मः पर्वतात् सलिलं यथा॥

व्यासः

विषयेषु न सज्जेत मनःसंयममाचरेत्।
मनःसंयममातिष्ठन् ब्रह्मलोकमवाप्नुयात्॥

1 [ ] from गृ. र. ४९९.
2 ९, ३४.
3 येत्—मस्करि पाठः.

विष्णुः[1]

दमयमेनातिष्ठेत्। दमश्चेन्द्रियाणां प्रकीर्तितः। दान्तस्यायं लोकः परश्च।

विष्णुपुराणे [३, १२, २-३]

सदानुपहते वस्त्रे प्रशस्ताश्च [2]वनौषधीः।
गारुडानि च रत्नानि बिभृयात्प्रयतो नरः॥

[3]सुशुद्धामलकेशश्च सुगन्धिश्चारुवेषधृक्।
सिताः [4]सुमनसो [5]हृष्टा बिभृयाच्च [6]नरः सदा॥

मार्कण्डेयपुराणे [३४, ५४]

न चापि रक्तवासाः स्यात् चित्रासितधरोऽपि वा।
न च कुर्याद्विपर्यासं वाससो न च भूषणे॥
वर्ज्यं च विदशं वस्त्रमत्यन्तोपहतं च यत्।
'अत्यन्तोपहतं' सुरादिलिप्तम्[7]।

महाभारते

अन्यदेव भवेद्वासः शयनीये सदैव तु।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि॥

'रथ्यासु' यथेष्टचेष्टासु।

1 ७२, १–३. ग. रत्नाकरे न दृश्यते.
2 तथौषधीः, गृ. र. ४९९.
3 'प्रस्निग्धा' इति मुद्रित गोरखपुरकोशे.
4 स्वजनमोहित्या—ना. को.
5 हृद्या बिभृयाच्च सदा नरः, गृ. र., ४९९.
6 सदा नरः—ना. को.
7 'मद्यादिलिप्तम्' इति गृ. र. ५००.

प्रचेताः[1]

न सुवर्णमनग्न्यं धारयेत् ।

कालिकापुराणे

[2]कायस्थितेन हेम्ना तु कर्म यत्कुत्सितं नरः ।
आचरेत्तदयं तस्य वज्रकल्पं भविष्यति ॥
अनामांगुलिकायां तु धारयेद्दक्षिणे करे ।

'कायस्थेन' इति दक्षिणकरानामांगुलिका। व्यतिरिक्ताङ्गस्थेन सुवर्णेन कुत्सितकर्म न कुर्यात्। तथाकरणे पापाधिक्यं भवतीति तात्पर्यार्थः[3] ।

भविष्यपुराणे

यः कुर्यात्सर्वकर्माणि वस्त्रपूतेन वारिणा ।
स मुनिः स महासाधुः स याति परमां गतिम् ॥

तथा

सोपानत्को देवगृहमारोहेद्यस्तु मानवः ।
स याति नरकं घोरं तामिस्रं नाम नामतः ॥

[4]महाभारते

शिरःस्नातस्तु तैलेन नांगं किञ्चिदपि स्पृशेत् ।
तिलपिष्टं[5] च नाश्नीयात् तथायुर्विंदते महत् ॥

1 गृ. रत्नाकरे न दृश्यते.

2 कायस्थेनैव, गृ. र. ५०१.

3 "कायोऽत्रानामाङ्गुलिकाऽन्यः कायभागः, तत्र सुवर्णं धारयता कुत्सितं कर्म कृतम्। तत्कुत्सितेन कर्मणा जपापेक्षयाऽधिकपापो भवतीत्यर्थः। एतच्च दीक्षितं विहाय।" गृ. र. ५०१.

4 गृ. र. च न दृश्यते। भविष्यपुराणवचनत्वेन तत्र दृश्यते (पृ. ५०२).

5 पिण्डं च, गृ. र., ५०२.

स्नातस्य वर्णकं [1]हृद्यं तत्प्रदद्याद्विशांपते ।
प्रियङ्गु[2]कलिकाभ्याञ्च बिल्वेन तगरेण च ।
पृथगेवानुलिप्तेन[3] केसरेण च बुद्धिमान् ॥

पद्मपुराणे सप्तर्षिशपथेषु—

अनृतौ मैथुनं [4]यातु दिवा स्वप्नं [5]निषेवतु ।
अन्योन्यातिथ्य[6]मभ्येतु बिसस्तैन्यं[7] करोति यः ॥

तथा

गोब्राह्मणांश्च तीर्थानि पर्वतांश्च नदींस्तथा ।
देवांश्चैव [8]हृदा वन्दन् न प्रेतो जायते नरः ॥

याज्ञवल्क्यः [२—२५५]

गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।

भविष्यपुराणे

श्लेष्ममूत्रपुरीषाणि समुत्सृजति यस्तु वै ।
देवस्यायतने भानोः स गच्छेन्नरकान्[9] क्रमात् ॥

[10]मार्कण्डेयपुराणे [३४, ३०]

उच्छिष्टो नालपेत्किंचित्स्वाध्यायं च विवर्जयेत् ।

1 कृत्यं नित्यं कुर्वीत, गृ र. ५०२.
2 चन्दनाभ्यां च, गृ. र., ५०२.
3 पृथगेवालिप्येत, गृ. र., ५०२.
4 याति, गृ. र. ५०२.
5 निषेवते, गृ. र.
6 अभ्यते, गृ. र.
7 विशस्तौल्यं, इति गृ. र. ५०२.
8 सदा वन्दन्, गृ. र. ५०२, ना. को.
9 नरकं क्रमात्, गृ. र. ५०२.
10 भविष्यपुराणवचनत्वेनैव गृ. र. ५०२. दृश्यते.

तथा [३४, ४४]

नोत्क्षिप्तपादजंघस्तु प्राज्ञस्तिष्ठेत् कथंचन ।

विष्णुपुराणे [३, १२, ८–९, १२, १६, १९, २९]

प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरं नरः[1] ।
न कुर्याद्दन्तसंघर्षं न [2]कुष्णीयाच्च नासिकाम् ॥
नासंवृतमुखो जृम्भेत्छ्वास-कासौ न वर्त्तयेत् ।
नोच्चैर्हसेत् सशब्दञ्च न मुञ्चेत् पवनं बुधः ॥
[3]न हुंकुर्याच्छवं घ्रात्वा शवगंधो हि [4]शोभनः ।
उपसर्पेत् न च व्यालं[5] चिरन्तिष्ठेन्न चोत्थितः ॥
अतीव जागरस्वप्ने तद्वत् स्थानाशने बुधः ।
न सेवेत तथा शय्यां व्यायामं च नरेश्वर ॥
दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्जयेत् ।
अवश्यायञ्च राजेन्द्र पुरो वातातपौ तथा ॥
मुक्तकच्छश्च नाचामेद्देवाद्यर्चांश्च वर्जयेत् ।
श्लेष्मसिंहानिकोत्सर्गौ नान्नकाले प्रशस्यते ॥
बलिमङ्गल्यजप्यादौ न होमे न महाजने ।

'देवाद्यर्चां मुक्तकच्छ' इत्यनुषंगः । 'महाजने' महाजनमध्ये ।

देवीपुराणे

न विषं भक्षयेत्प्राज्ञो न भुजंगैश्च क्रीडयेत् ।

1 शिखरं तरोः, गृ. र. ५०२, ना. को.
2 न कुञ्जीयाच्च, गृ. र. ५०२.
3 न फूत्कुर्याच्छवं प्रात्वा शवगन्धो हि सोमजः, इति गृ. र. ५०३.
4 सोमजः, ना. को.
5 व्यालां, गृ. र. ५०३.

नेत्राञ्जनं निषेवेत दन्तधावनपूर्वकम् ॥

विष्णुपुराणे [३, १२, ६-७]

दिधिषूपतितोन्मत्त[1]बहुवैरातिकीटकैः ।
बन्धकी[2] बन्धकीभर्तृक्षुद्रानृत[3]कैनर्तकैः [?] सह ॥
तथातिव्ययशीलैश्च [4]परिवादरतैः शठैः ।
बुधो मैत्रीं न कुर्वीत नैकः पंथानमाव्रजेत् ॥

'अतिकीटकः' अतिकृपणः । 'बन्धकी' व्यभिचारिणी ।

न कुर्यान्मैत्रीमित्यनुवृत्तौ मार्कण्डेयपुराणे [३४, ८९]

न सर्वशङ्किभिर्नित्यं न च देव[5]परैर्नरैः ।

वायुपुराणे

यदाकाशः स्मृतो भीमस्तस्मान्नासंवृते क्वचित् ।
कुर्यान्मूत्रं पुरीषं वा न भुंजीत पिबेत[6] वा ॥
मैथुनं चापि न चरेदुच्छिष्टानि च वर्जयेत् ।

'उच्छिष्टानि' उपभुक्तशिष्टानि ।

मार्कण्डेयपुराणे [३४, ७]

[7]न यज्ञं न तपांसी वा पुरुषस्य विभूतये ।
भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्तते ॥

1 रङ्गवैरातिकीटकैः, गृ. र. ५०३. विद्विष्टपतितोन्मत्त इति मुद्रित वि. पु.
2 बन्धुभृच्छूद्र, बन्धकी भर्तक्षुद्र इति गृ. र. (५०३). पाठौ.
3 कथैस्सह—ना. को., मुद्रित वि. पु. च.
4 परदाररतैः शठैः, गृ. र. ५०४.
5 परायणैः—ना. को.
6 पिबेन्नरः, गृ. र. ५०४.
7 यज्ञदानतपांसीह पुरुषस्य न भूतये इति गृ. र. ५०४, ना. को., मुद्रित कोशे च,

वायुपुराणे

एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।
एकं प्राणं बहून्वापि कामं तस्यापि[1] पातकम् ॥
यस्मिंस्तु निहतेऽभद्रे एधंते बहवः सुखम् ।
तस्मिन् हते ऽशुभे नास्ति पातकश्चोपपातकम् ॥

महाभारते

[2]यः प्रवृत्तिं श्रुतिं मोहाच्छास्त्रञ्च मुनिभाषितम् ।
[3]द्वेषयत्यनभिज्ञाय तं विद्यात् ब्रह्मघातकम् ॥

महाभारते

बलिं प्रति श्रीवाक्यानि[4]—

यदा [5]शुश्रूषया वृद्धां परिवारेण योज्यते ।
पुत्रश्च पितरं मोहात्प्रेषयिष्यति कर्मसु ॥
ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनम् ।
शूद्रश्च ब्राह्मणीं भार्यामुपयास्यति निर्भयः ॥
वियोनिषु च बीजानि मोक्ष्यन्ते पुरुषाः सदा ।
सङ्करं कांस्यभाण्डैश्च बलिश्चापि कुपात्रकैः ॥
चातुर्वर्ण्यं यदा कृत्स्नमुन्मर्यादं भविष्यति ।
एकैकस्ते तदा पाशः क्रमशः परिमोक्ष्यते ॥

1 तस्यास्ति पातकम्, गृ. र. ५०४.

2 'यः प्रवृत्तां श्रुतिं हन्यात् शास्त्रञ्च मुनिभाषितम्' इति गृ. र. ५०४.

3 भूषयन्ननभिज्ञाय, गृ. र. ५०४; दूषयं—ना. को.

4 कुम्बघोणे मुद्रितकोशे, शान्तिपर्वणि, २३२ सर्गे द्रष्टव्यस्थाने न लब्धानि इमानि श्रीवाक्यानि.

5 शुश्रूषया वृद्धः, गृ. र. ५०५.

विष्णुपुराणे

देवादिनिश्वासहतं शरीरं यत्तस्य वेश्म च ।
न तेन सङ्करं कुर्याद्गृहासनपरिच्छदैः ॥

'देवादिनिश्वासहतं' यथोचितपूजाविरहात् ।

[[1]इति श्रीगृहस्थकाण्डे स्नातकव्रतानि]

1 [ ]—ना. को.

# अथ यमनियमाः

तत्र मनुः—[४–२०४]

यमान् सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान् भजन्[1] ॥

इदं च यमनियमयोर्युगपदुपनिपाते विहितत्वाविशेषाद्विकल्पप्रसङ्गे बोद्धव्यम् । 'सततम्' आपद्यपि ।

व्यासः

अहिंसा सत्यवचनं ब्रह्मचर्यं अकल्कता ।
अस्तेयमिति पञ्चैते यमाश्चैव व्रतानि च ॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
[2]अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च ॥

ब्रह्मचर्यमत्र प्रतिनिषिद्धमैथुनवर्जनम् । 'अकल्कता' दम्भरहितत्वम्[3] ।

1 "नियमापेक्षया यमानुष्ठानगौरवज्ञापनार्थं इदम् । न तु नियमनिषेधनार्थम्" इति कुल्लूकः । "अतो मानेन यमानां सेवोच्यते, नापि नियमानां असेवा । उभयेषां तैः शास्त्रैर्विहितत्वात्" इति मेधातिथिः ॥ 'केवलान् नियमान् कुर्वाणः पततीति युज्यते । ततो यमसहिता एव नियमाः कार्या इत्यर्थः; । 'सततं' अद्यापि इति गृ. र. ५०६.

2 अप्रमादो हि, गृ. र. ५०६.

3 "ब्रह्मचर्यमिह प्रतिषिद्धमैथुनत्यागः ध्यानमात्मचिन्तनं । कल्कशब्दो दम्भपरः ।" इति गृ. र. ५०६.

**शङ्खलिखितौ**

अक्रोध आर्जवं शौचं व्यवहारो गुरुशुश्रूषा चेति नियमाः पञ्च ।

'व्यवहारः' शास्त्रार्थाचरणम्[1] । अक्रोधादीनामत्रान्तर्भावेप्यादरार्थं पुनर्वचनम् ॥

**याज्ञवल्क्यः [३—३१२-३]**

ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति[2] यमाः स्मृताः ॥
स्नानमौनोपवासेज्या[3] स्वाध्यायोपस्थनिग्रहाः[4] ।
[5]नियमा गुरुशुश्रूषा शौचाक्रोधा[6]प्रमादता[7] ॥

'ध्यानं' परमात्मचिन्तनम् । 'माधुर्यं' प्रियवादित्वादि । 'अप्रमादता' [8]स्वकर्तव्येष्ववधानम् ।

**हारीतः**

अहिंसा सत्यमस्तेयं शौचं ब्रह्मचर्यमिति नियमाः ।

1 नुष्ठानम्—ना. को.
2 अकर्तव्येषु विधानम्—ना. को.
3 दमश्चैव इति गृ. र. ५०६.
4 परोसेज्या इति गृ. र. ५०६.
5 निग्रहाः इति मिताक्षरापरार्कपाठः
6 नियमः, गृ. र. ५०६.
7 अप्रमादिता इति गृ. र., मिताक्षरापरार्कमित्रमिश्रपाठः
8 अस्तेयं' देवतार्थं कुसुमातिरिक्तचौर्याभावः इति वीरमित्रोदयः । "क्वचिद्विशेषोप्यस्ति । यथा विवाहादिष्वभ्यनुज्ञातस्याप्यनृतवचनस्य निवृत्यर्थं सत्यत्वविधानम् । पुत्रशिष्यादिकमपि न ताडनीयमिति एवमर्थं अहिंसाविधानम्" इति **विज्ञानेश्वरः** ।

कूर्मइवाङ्गानि कर्मभ्यः संहृत्य रूपेभ्यो दृष्टिं, मूक इव [1]वाच्येभ्यो वाचं, कर्मेन्द्रियबुद्धीन्द्रियाणि मनश्च संयम्याऽहिंसा भवति ।

एवं ह्याह—

कर्मणा चक्षुषा चैव वाचाथ मनसा तथा ।
यो वै न कुरुते पापं [2]सा चाऽहिंसा चतुर्विधा ॥ इति

देवलः

तत्र दशविधा हिंसा । उद्वेगजननं, सन्तापजननं, रुजाकरणं, शोणितोत्पादनं, पैशुन्यकरणं, सुखापकरणं, अतिक्रमः, संरोधो, हितप्रतिषेधो, वध, इति ।

तत्र श्लोकः

कायक्लेशं मनोदुःखं वधं वा प्राणिनां पुनः ।
यत्र वर्धयति द्वेषात्सा हिंसेति समासतः ॥

'उद्वेगो' मनसो ऽस्वास्थ्यं । 'सन्तापो' यस्मिन् दुःखे उत्पन्ने [3]आकुलितमेवात्मानं मन्यते । 'रुजा' शरीरदुःखम् । 'अतिक्रमो' मान्यावमाननम् । 'संरोधः' स्वेच्छाचारनिषेधः । 'हितप्रतिषेधः' दुःखापनायकभेष[4]जनिषेधः ।

महाभारते

यूकमत्कुणदंशादीन् खादतश्चात्मनस्तनुम् ।
पुत्रवत्परिरक्षन्ति ते नराः स्वर्गगामिनः ॥

1 वाचालेभ्यः, गृ. र. ५०६.
2 सा ह्यहिंसा, गृ. र. ५०७.
3 ज्वलितमिव—ना. को.
4 जातिप्रतिषेधः—ना. को.

हारीतः

[1]आत्मा सन्नस्यैषा वाक् सती यया वदति यत्सतः ।
[2][सती वदति तदेतत्सतीयं सत्यमित्याचक्षते ॥

यथाग्निः घृताहुतिहुतो दीप्यते, एवं सत्याभिधाप्यात्मा ब्रह्मान्नदत्तमाग्निं प्रतिवदन्दीपयति । अथ यथाद्भिरग्निं ध्वंसयंस्तमांसि प्रतिपद्यते एवमनृतं ध्रुवं वदन् तमांसि प्रतिपद्यते] तस्मान्नानृतं ब्रूयात्[3] । सोमक्रय-कन्याविवाह-भय-मैथुन-बालसंज्ञपन [[4]गोब्राह्मणहिते च ब्रुवन् मिथ्यान्न लिप्यते । एवं ह्याह ।

यत्र प्राणिवधो नास्ति यच्च नित्यमनिन्दितम् ।
स्वभावतश्च यत्सत्यं तत्सत्यवचनं स्मृतम् ॥[5]]

यथा वाचा आत्मा वदतीत्यन्वयः । 'आत्मनो हितं' यद्व [स्तु सती वदति तत्सत्यं । 'बालसंज्ञपनं' बालसंतोषणम् ।][6] 'अनिन्दितम्' अश्लीलतादिरहितम् । स्वभावतश्छलरहितम् ।

[7]मनुयमौ [४–१३८]

सत्यं ब्रूयात्प्रियंब्रूयान्न ब्रूयात्सत्यमप्रियं ।

1 अयं भागो गृ. र. न दृश्यते.
2 [ ] अयं भागो गृ. र. न दृश्यते.
3 'तस्मात् नानृतं वदेत् । सोमविक्रयविवाहमैथुनं बालप्रबोधनं' इति गृ. र. ५०७.
4 [ ] अयंभागश्च गृहस्थरत्नाकरे न दृश्यते.
5 तत्सत्यवचनमिति त्रुटितस्थले बीकानीरकोशो पठति.
6 [ ] अयं भागो न दृश्यते गृ० रत्नाकरे.
7 मनुः इति, गृ. र. ५०७.

प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः[1] ॥

एतेन प्रियं सत्यं च [2]मिलितं द्वयं वक्तव्यमित्युक्तं भवति ।

यमः

सुभाषितसहस्राणि सुभाषितशतानि च ।
सर्वाण्यत्याहृतस्येह कलां नार्हन्ति षोडशीम् ॥
दया हि सर्वभूतानामनृतेन च शाम्यति ।
सत्येनापि विनश्येत हिंसा यत्र प्रवर्तते ॥
एतेन सत्यानृतनिन्दया मौनप्राशस्त्यमुक्तम् ।

हारीतः

ऋतमिति [3]सद्भूताभिधानं भवति । नात्र ऋतमस्तीत्यनृतम् । तच्चतुर्विधं भवति । [4]पणितानृतं, प्रत्ययानृतं, सुकृतानृतं, साधारणानृतं, इति । क्रयविक्रयकितववृत्तिवृत्तित्वं पणितानृतं । तस्मान्न व्यसनादिभिः क्रीणीयात् न विक्रीणीयात् । न कितववृत्तिः स्यात् ।

एवं ह्याह ।

विक्रयी शंसते पण्यं क्रयी निन्दति [5]सद्गुणम् ।

1 'अप्रियं' यथा 'ब्राह्मण कन्या ते गर्भिणी' तदसत्यं न ब्रूयात् । सत्यमपि कन्यागर्भग्रहणं अप्रियत्वादप्रकाश्यम् । सत्यां गतौ तूष्णीं आसितव्यम् । ननु गर्भिण्यामगर्भिणीति वक्तव्यं प्रियत्वात् अत आह—'प्रियं च न नृतं ब्रूयादिति । एवं च यस्य प्रथमः साक्षात्कारः तेन तत्र तूष्णीमासितुं लभ्यते—मेधातिथिः.

2 संवलितम्—ना. को. .

3 सम्भूताभिधानं, गृ. र. ५०८.

4 साक्ष्यानृतं, पणितानृतं, सुकृतानृतं, साधारणानृतमिति । गृ. र. ५०८.

5 तद्गुणान्, इति गृ. र. ५०८.

व्याजयोगाच्च कितवमश्रद्धेयं प्रजापतिः इति

विश्रम्भानृतं साक्ष्यनृतं व्यवहारानृतमिति त्रिविधं प्रत्ययानृतम् ।

[1]यद्विश्रंभाद्वक्त्रात् कीर्तिं करोति कारयति वा विश्रंभानृतमित्युच्यते ।

यत् साक्षि[2]कर्मण्यवस्थितोऽनृतमध्यवस्यति ज्ञानलभ्यपलपति कूटसाक्षितां चोपैति तत्साक्ष्यनृतमित्युच्यते ।

द्वयोर्विवदमानयोर्मैत्र्या द्वेषा[3]ल्लोभाद्भयात्प्रमादाद्वा, यत्पक्षांतरमुपैति, यत्संभूतं व्युदस्या[4]संभूतं स्थापयति तत्संव्यवहारानृतमित्युच्यते ।

एवं ह्याह ।

[5]विश्रंभात्त्रि[6]तयं हन्ति पञ्च मिथ्यावसायतः ।
क्षणात् सप्तयुगं हन्ति [7]त्वनृते व्यवहारतः ॥

'व्यसनं' वञ्चना । 'मिथ्यावसायो' 'ऽनृतवचनम्' । 'ज्ञानापलापो' मृषासाक्षित्वं च । 'युगं' जन्म ।

1 यद्विश्रम्भाद्वक्त्रात् कीर्तिं करोति कारयति वा तद्विश्रम्भानृतमित्युच्यते—गृ. र. ५०८.
2 कर्मण्यवस्थितोऽनृतं व्यवस्यति जानन्नप्यपलपति कूटसाक्ष्यं वोपैति—गृ. र. ५०८.
3 लोभाद्वा संभूतं व्युदस्यासंभूतं व्यवस्थापयति तत् व्यवहारानृतमित्युच्यते—गृ. र. ५०८.
4 सद्भ—ना. को.
5 विश्रंभात् त्रियुगं हन्ति पञ्च मिथ्यापलापतः, गृ. र. ५०८.
6 त्रियुगम्—ना. को.
7 त्वनृते—गृ. र. ५०८.

[1]**यमः**

पंच पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेत् ॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
[2]पशुवत् क्षौद्रघृतयोर्यच्चान्यपशुसंभवम् ॥
गोवद्वस्त्रेषु सर्वेषु शयनेऽथासनेषु[3] च ।
अश्ववत्सर्व[4]यानेषु खरोष्ट्राश्वतरेषु च ॥
आदित्यचन्द्रावनलानिलौ च
द्यौर्भूमिरापो हृदयं यमश्च ।
पश्यन्ति नित्यं पुरुषस्य वृत्तं
तस्मान्न वाच्यं त्वनृतं कदाचित् ॥
यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।
तपो वेदाः स्मृतिस्त्यागः स तेभ्यः सर्वमश्नुते ॥

'पञ्च पश्वनृते हन्तीति' पश्वादिविषयमनृतं वदन् पञ्चादिसंख्याकान् बान्धवान् 'हन्ति' नरके पातयति । उत्तरोत्तरं निन्दातिशयदर्शनं दोषभूयस्त्वख्यापनार्थम् । 'भोगे च मैथुने' मिथुनसंपाद्ये भोग इत्यर्थः । 'सर्वं च पशुसंभवं' क्षीरदध्यादि । 'सर्वेषु' आविकादिषु ।

1 गृ. र., ५०९ ascribes the first three s'lokas to Nārada, and the first two are found in *Nāradasmṛti*, ed. Jolly, p. 104.

2 गृ. रे., ५०९ अधिकपाठः—अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च—यमः.

3 नेष्वा—ना. को.

4 दानेषु इत्यपरपाठः.

देवलः

अनृतं द्विविधं असत्यं विसंवादश्चेति । तत्र दृष्टश्रुतकृताना[1]मन्यथा वचनमसत्यम् । प्रागभ्युपगतानां [2]असंकीर्तनं विसंवाद इति ।

रागाद् द्वेषाद्भयाल्लोभाद्दाक्षिण्याच्छङ्कया क्रिया ।
[3]दम्भात्प्रमादतश्चापि[4] नरस्योत्पद्यते ऽनृतम् ॥
परप्राणोपघा[5]तार्थे परद्रव्या[6]पहारतः ।
विशिष्येऽनृतवादस्तु न [7]वृथा कथनादिषु ॥
तस्मादनृतहेतूं [8]स्तानात्मन्युत्पादयेत् क्वचित् ।
[9]उत्पन्नां वा प्रशमयेत् कारणैस्तद्विघातिभिः ॥

हारीतः

[10]दानानृतमिज्यानृतं तपोऽनृतमिति त्रिविधं सुकृतानृतम् । अन्नधान्यार्थवासोरत्नहिरण्यपशुगोऽश्वकन्याभूम्यभयदानानामेकतमं दत्वा यो न ददाति न प्रतिपद्यते मया दत्तमिति तद्दानानृतमित्युच्यते ।

1 अन्यथाचरणम् , गृ. र. ५१०.
2 असंप्रवर्तनम्—गृ. र. ५१०. ना. को.
3 दर्पात्—ना. को.
4 एव—गृ. र. ५१०.
5 घातार्थम्—गृ. र. ५१०.
6 अपहारकः—गृ. र. ५१०.
7 वृथा—गृ. र. ५१०.
8 तानात्मन्युत्पादयेत् ; उत्पन्नात्मा—ना. को.
9 उत्पन्नार्थान्—गृ. र. (पृ. ५१०). गृ. र. ५१०.
10 दानानृतमिज्यानृतं, तपोनृतमिति त्रिविधं कृतानृतम् । अन्नधान्यवासो रत्नहिरण्यगोऽश्वकन्याभूम्यभयदानानामेकतमं वा यो न ददाति न प्रतिपद्यते न मया दत्तमित्युच्यते । इति गृ. र. ५१०.

एवं ह्याह—

[1]अन्नानृते जन्म हन्ति द्वे तु वासोऽनृते तथा।
त्रीणि रत्नानृते [2]हन्याच्चतुरं काञ्चनानृते॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
एतत्तु द्विगुणं हन्ति कृत्वा भूम्यनृतं नरः।
ततश्च द्विगुणं भूयोऽभयं दत्वा हिनस्ति यः॥

यो यक्ष्य इत्युक्त्वा न यजेत, महान्तं वा क्रतुमभिसमीक्ष्य स्वल्पेनैवेष्ट्वा, न सर्वस्वमुपयुनक्ति तत्र त्रैधातवी प्रायश्चित्तिः।

[3]यस्तु तप उपेत्य न यथार्थं तपस्यति अन्यथा वा चरते असमाप्तको वा निवर्तेत तत्राऽग्नेयो विधिः। चान्द्रायणं वा साधारणं नाम। यथा गोब्राह्मणहितमापत्कल्पः स्वैराभिधानं भवति। एवं त्वाह—

न [4]मर्मयुक्तं वचनं हिनस्ति
न स्वैरवाक्यं न च मैथुनार्थे।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि॥

[5]अर्थो तत्र प्रतिउक्तधनादन्यः। 'दत्वा' प्रतिश्रुत्य। 'साधारणत्वं' गुणदोषाणामनुबन्धात्। यथा गोब्राह्मण-

1 अन्नानृते जन्महानिः, गृ. र. पृ. ५१०; अर्थहृते—ना. को.
2 हन्ति चतुरः, इति. गृ. र. ५१०, ना. को.
3 यस्तु तप उत्पत्य न यथार्थं तपस्यति अन्यथा वा चरते। असमाप्तकारी निवर्तते तत्राग्नेयो विधिः चन्द्रायणं वा साधारणं नाम। यो गोब्राह्मणहितमापत्कल्पः स्वैराभिधानं भवति। एवं ह्याह—इति ग्र. र. ५११.
4 नर्म, गृ. र. ५१०.
5 अन्नधान्यार्थे तत्रान्नपदमन्नार्थपरम्, गृ. र. ५१०.

हितानृतमनुज्ञातमपि गुरोरहितं सदोषमितरत्रादोषं एव-मापदनृत[1]चौराभिधानानृतयोरपि ।

यमः

न नर्मयुक्तं वचनं हिनस्ति [2]न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि[3] ॥

देवलः

विवाहे [4]ब्रह्महासार्थं प्राणिनां जीविताय वा ।
आत्मनः प्राणहेतो वा न सीदेदनृतं वदन् ॥

[5]'विहारे' मैथुने। 'ब्रह्महासार्थं' ब्राह्मणार्थं हासार्थं च ।

गौतमः [३—५—२१]

विवाहे [6]मैथुननर्मान्तसंयोगेष्वदोषमेकेऽनृतं ननु खलु गुर्वर्थेषु, सप्त पुरुषान् इतश्च परतश्च हन्ति मनसा गुरोरनृतं वदन्नल्पेष्वप्यर्थेषु ।

याज्ञवल्क्यः [१–१३२]

न संशयं प्रपद्येत ना[7] कस्मादप्रियं वदेत् ।
नाहितं नानृतञ्चैव न स्तेनः स्यान्न [8]वार्धुषी ॥

1 स्वैराभिधानानृतयोरपि, गृ. र. ५११, ना. को.

2 न स्त्रीषु नित्यं न, गृ. र. ५११, ना. को.

3 पञ्चानृतं नास्ति गुरोर्हितं च इति बीकानीरकोशः, ना. को.

4 ब्राह्मणस्यार्थे, गृ. र. ५१२, ना. को.

5 विवाहे, गृ. र. ५१२, ना. को.

6 मैथुने नर्मार्तिसंयोगेषु, गृ. र. ५१२.

7 अदोषमेके, नानृतं वदेद् गुर्वर्थेषु, सप्तमं पुरुषमितश्च परतो हन्ति मनसापि गुरोरनृतं वदन्नर्थेषु न कस्मै च, गृ. र. ५१२.

8 वार्धुषिः, इति या. वीरमित्रोदये.

अथ देवलः

ततः स्थूलमध्यक्षुद्राणां त्रिविधानां पदार्थानां प्रसह्य तूष्णीं वा प्रच्छन्नं वा हरणं स्तेयम् ।

रत्नक्षेत्रवेश्महेमरूप्याभरणादीनि स्थूलानि, [1]चतुष्पदद्विपदान्नधान्यं लोहवस्त्रकार्षापणोपकरणादीनि मध्यानि । दन्तश्रृङ्गदारुचर्मपाषाणमृण्मयादीनि क्षुद्राणि ।

'प्रसह्य' बलात्कारेण । 'तुष्णीं हरणं' स्वामिनाऽदृश्यमानस्य बलात्कारं विना यद्धरणम्[2] ।

हारीतः

द्विविधमेव [3]द्रव्यमाहुः—सचेतनं निश्चेतनञ्च । जंगमं स्थावरं च । सचेतनं जंगमम् । निश्चेतनमप्यतैजसमणिशैलौषधिवानस्पत्यं मृण्मयं रसमयं चैवं भूतस्य दशविधानात् स्तेयं भवति ।

अदत्तादानात् अनतिसृष्टग्रहणात्, अनिर्देशोपयोगात्, भृत्येभ्यो भृत्यदानात्, याचितानिर्यातनान्यासापलापनात्, छद्मव्यसनयोः अनुपायग्रहणाच्चेति प्रतिश्रुत्यादानाद् देवताऽनभिसंबन्धाच्चैतद्दशविधं भवति ।

एवं ह्याह—

प्रतिश्रुत्याप्रदानेन दत्तस्याऽऽछादनेन च ।
विविधान् नरकान् याति तिर्यग्योनौ च जायते ॥

1 चतुष्पादान्नवस्त्रलोहकार्षापणोपकरणानि मध्यानि, इति गृ. र. ५१२.

2 'प्रच्छन्नम्' समक्षं वञ्चयित्वाहरणम्, इति गृ. र. ५१२.

3 सचेतनं जङ्गमं निश्चेतनं—जरायुजमाप्यं तैजसमपि शैलौषधं वानस्पत्यं मृण्मयं रसमयं च एवं संभूतस्य दशविधानात् स्तेयं भवति, इति गृ. र. ५१३.

[1]वाचा यच्च यत्प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणन्तद्धर्मसंयुक्तमिह लोके परत्र च ॥

स्वामिना ऽदत्तस्यादानं 'अदत्तादानम्'। परिमाणादतिरिक्तग्रहणं 'अनतिसृष्ट ग्रहणम्'। देवपितृमनुष्यार्थे भिक्षित्वा स्वयमुपयुञ्जतो 'अनिर्देशोपयोगः'। भृत्यानां कर्म कारयित्वा 'भृतेरदानम्'।

याचित्वा[2]नेच्छामीत्यनिर्यातनं 'याचितानिर्यातनम्'। विद्यामित्रकुलप्रत्ययात् न्यस्तस्यापलपनं 'न्यासापलपनम्'। कूटमानतुलातस्करत्वं 'छद्म' 'व्यसनाद्' अब्रह्मचारिणो हिरण्यादीनामात्मार्थं प्रतिग्रहो, यतीनां चानुपायग्रहणम्।

स्तेयिनो हि प्रमीताः पूर्वधनिनामुपकाराय जायन्ते। तस्मात्स्तेनं न कुर्यान्न कारयेन्नानुमन्येत ।

'सचेतनं जीवाधिष्ठितम्'। तच्च द्विविधं स्थावरं जंगमं च। गतिमत्पुरुषगवादि 'जंगमम्', जरायुजाण्डजस्वेदजरूपम्। वृक्षादि उद्भिज्जं, स्थावरम् 'निश्चेतनं' जीवानधिष्ठितम्। 'आप्यं' शङ्खादि। 'तैजसं' सुवर्णादि। व्रीहियवादि 'औषधम्'। 'वानस्पत्यं' तृणकाष्ठादि,। 'मृण्मयं' घटादि। 'रसमयं' क्षीरगुडादि। दशविधत्वं वक्ष्यमाणा दत्तादानादिप्रकारेण। 'प्रतिश्रुत्यादानं' 'तवेदं मया देयं' इति प्रतिज्ञाय यददानम्। 'देवतानभिसम्बन्धः' 'इदं यागाय द्रव्यमिति' निधाय, तस्य देवतयाऽनभिसम्बन्धो यागाकरणात्। 'धर्मसंयुक्तं' यत्प्रतिज्ञातमित्य-

1 वाचा यच्च प्रतिज्ञातमिति गृ. र. ५१३.
2 नेष्यामि, इति गृ. र. ५१३.

न्वयः । 'कारयित्वा' कर्म्मेति शेषः । 'अनिर्यातनं' अप्रत्यर्पणम् । उपकाराय जायन्ते पशु[1]दायादिभावेनेति शेषः ।

यमः

सुवर्णमेकं गामेकां भूमेरप्येक[2]मंगुलम् ।
हरन्नरकमाप्नोति यावदा[3]भूतसंप्लवम् ॥
हिरण्यं पशुदानानि स्त्रियो वासांसि यो हरेत् ।
सपर्यायेण यातीमान्नरकानेकविंशतिम् ॥

'नरकांश्च' प्रायश्चित्तकाण्डे[4] वक्ष्यामः ।

आपस्तम्बः [ध. सू., २-२-६]

स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिन् लोकेऽपरिमिते निरये वृत्ते जायते । चण्डालो ब्राह्मणः पौल्कसो राजन्यः, वैणो वैश्यः ।

स्तेनः सन् लोके यो प्रसिद्धः ।

[5]गौतमः [२-४-१४-२२]

क्षुद्रपश्वनृते साक्षी दश हन्ति । गोश्वपुरुषभूमिषु दशगुणोत्तरम् । सर्वं वा भूमौ । हरणे नरकः । भूमिवत् अप्सु । मिथुनसंयोगे च । पशुवन्मधुसर्पिषोः । गोवद्वस्त्रहिरण्यधान्यब्रह्मसु । यानेष्वश्ववत् हरणे ।

1 दासत्वेन, गृ. र. ५१४.
2 अर्धं, गृ. र. ५१४.
3 आहूत, इति गृ. र.
4 A reference to a section of the *Kṛtyakalpataru* of which no manuscript has yet been found. Caṇḍeśvara adds the similar reference to a section of his own digest: 'नरकाश्च राजप्रतिग्रहप्रस्तावे तत्रैव प्रागुक्ताः ।'
5 गौतमवचनं न दृश्यते गृ. रत्नाकरे.

'क्षुद्र' पश्वादीनाम्। 'मिथुनसंयोगे' विवाहे। 'ब्रह्म' वेदः।

विष्णुः [५२-१५-१७]

[1]यद्यत्परेभ्यस्त्वादद्यात्पुरुषस्तु निरङ्कुशः।
तेन तेना [2]ऽथ हीनःस्याद्यत्र यत्राभिजायते॥
जीवितं धर्मकामौ च धने यस्मात्प्रतिष्ठितौ।
तस्मात्सर्वप्रयत्नेन[3] धनहिंसां विवर्जयेत्॥
प्राणिहिंसापरो यस्तु धनहिंसापरस्तथा।
महद्दुःखमवाप्नोति धनहिंसापरस्तयोः॥

यमः

देवद्रव्यापहर्तारं [4]ब्रह्मस्वहरणे रतम्।
पुरुषं पापकर्माणं नरकः प्रतिपद्यते॥
यस्तु लब्धं पुनर्दद्याद्देवद्रव्यं यतस्ततः।
गुरुद्रव्यं द्विजद्रव्यं सोऽश्वमेधफलं लभेत्॥
यदेतद्धनमित्याहुः प्राणा[5]ह्येते बहिश्चराः।
स तस्य [6]हरते प्राणान् यो यस्य हरते धनम्॥
अप[7]हृत्य परस्यार्थं यस्तु दानं प्रयच्छति।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम्॥

1 यद्यत् परेभ्यो न दद्यात्, इति गृ. र. ५१४.
2 अथ हीनः स्याद्यत्र तत्र, इति गृ. र; विहीनः स्यात् इति मुद्रित विष्णौ, पृ. १२२.
3 प्रकारेण, ना. को.
4 परस्व, इति गृ. र. ५१४.
5 ह्यैते, गृ. र., ५१५.
6 हरति, गृ. र., ५१५.
7 कृत्य, ना. को.

परस्वपरितुष्टास्तु [1]जीविता नरकाश्च ये ।
तेषां रजः पतेद्यत्र तदमेध्यतरं भवेत् ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
ब्रह्मस्वहर्ता नरके[2]पतनं परिवर्तते ॥

तथा

षष्टिवर्षसहस्राणि ब्रह्महा नरकं पतेत् ।
यश्च ब्राह्मणवृत्तिघ्नो यो वै पतति याजकः ॥

बृहस्पतिः[3]

शोद्ध्यं शुद्ध्यति मृत्तोयैः प्रायश्चित्तैश्च पातकम् ।
ब्रह्मस्वन्यास[4]हर्तारौ तमदत्वा न शुद्ध्यतः ॥
ब्रह्महा [5]वित्तहा चोभौ समौ स्यातां न वा ऽसमौ ।
कल्पान्ते ब्रह्महा [6]शुद्ध्येद्वित्तहा न कदाचन ॥
एवं ज्ञात्वा परस्वानि मनसापि न चिन्तयेत् ।
परस्त्रियो विशेषेण धर्मसारमिदं स्मृतम् ॥
[7]जात्यन्धो बधिरश्चैव मूकः सङ्कुचिताङ्गुलिः ।
परदारापवादेषु परच्छिद्रानुहिंसने ॥
[8]एवं वृत्तस्तु पितरौ त्रायते महतो भयात् ।
वितत्येह यशो दीप्तं ब्रह्मलोके महीयते ॥

1 जीवितान्तकरास्तु ये, गृ. र., ५१५ ; न्तकराश्च ये, ना. को.
2 सततं, पङ्क्तिभेदः इति गृ. र., ५१५.
3 आपद्धर्मकाण्डम्, ३०, ४५, ३१, २९, ४८.
4 हर्ता वा दमं कृत्वा न शुध्यति, गृ. र.
5 वृत्तिहा, गृ. र.
6 शुध्येत् वृत्तिहा, गृ. र.
7 जातान्धः इति मुद्रित बृ. गृ. र. ५, ५१६, ६, च ; ना. को. च.
8 नैवं विधस्तु स्वपितॄन्, गृ. र.

**यमः**

देवद्रव्यं गुरुद्रव्यं यद्द्रव्यं पार्षदं भवेत् ।
[1]हृत्वाऽमुत्र नरो लोभाद्गृध्रोच्छिष्टेन जीवति ॥
चाण्डालो [2]निजगौ गाथां मनुः स्वायंभुवः पुरा ।
प्रभवामीति योऽश्नाति बहु[3]सामान्य[4]मेककः ॥
शुनां रजस्वलानां च छर्दितं मलदूषितम् ।
तस्य संसरतो लोके वृत्तिरेषा[5] विधीयते ॥
चण्डालो भूत्वा जीवतीत्यन्वयः* [6] ।

[7]**दानबृहस्पतिः—**

[8]हरते हारयेद्भूमिं मन्दबुद्धिस्तमो वृतः ।
[9]स रुद्धो वारुणैः पाशैस्तिर्यग्योनिषु जायते ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
[10]षष्ठिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥
[11]षष्ठिवर्षसहस्राणि स्वर्गे गच्छति भूमिदः ।

1 हृत्वा—गृ. र., ५१७; ब्रह्मस्वं चापि यो भुङ्क्ते—ना. को.
2 विजगौ गां च, गृ. र. ५७६.
3 सामान्यमेककः, गृ. र. ५७६.
4 न्यसेव, ना. को.
5 एका गृ. र. ५१६.
* देवद्रव्यादिकं हृत्वा चाण्डालः सन् गृध्रोच्छिष्टेन जीवति इति मनुः 'विजगौ' उक्तवानित्यर्थः—गृ. र. ५१७.
6 त्यर्थः, ना. को.
7 'बृहस्पतिः' इति गृ. र. ५१७.
8 आपद्धर्मकाण्ड, ३९; हर्ता हारयते इति दा. कौ. पाठः.
9 सबद्धो इति, गृ. र. ५१७; दा. कौ., ना. को. ४१.
10 आप. धर्म ३८, उत्तरार्द्धम्—सविष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते.
11 आप. धर्म. ४०—स्वर्गे वसति भूमिदः.

[1]आहर्ता चानुमन्ता च तान्येव नरकं वसेत् ॥
[2]तडागानां सहस्रेण अश्वमेधशतेन च ।
गवां कोटिप्रदानेन भूमिहर्ता न शुद्ध्यति ॥
[3]अन्यायेन हृता भूमिरन्यायेन च हारिता ।
हरन्तो हारयन्तश्च हन्युस्त्रिपुरुषं कुलम् ॥
[4]ब्रह्मस्वं प्रणयाद्भुक्तं [5]हन्यादासप्तमं कुलम् ।
विक्रयेण च भुक्तं तद्दशपूर्वान् दशापरान् ॥
[6]ब्रह्मस्वे मा मतिं कुर्यात्प्राणैः कण्ठगतैरपि ।
अग्निदग्धानि रोहन्ति ब्रह्मदग्धं न रोहति ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥
[7]लोहचूर्णाश्मचूर्णे च विषं च जरयेन्नरः ।
ब्रह्मस्वं [8]त्रिषु लोकेषु कः पुमान् जरयिष्यति ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णसर्पाश्च जायन्ते ब्रह्मदायापहारकाः ॥

ब्रह्मपुराणे

[9]सामान्यां दक्षिणां लब्ध्वा [10]गृह्णात्येको विमोहितः ।

1 उच्छेत्ता, गृ. र. ५१७.
2 आप. धर्म. ४१.
3 आप. धर्म. ३३.
4 आप. धर्म. ४४.
5 दह्या, ना. को.
6 आप. धर्म. ४२, ४३.
7 आप. धर्म. ३४, ३५.
8 पर, ना. को.
9 सामान्य, गृ. र.
10 एकम्, गृ. र.

नास्तिक्यभावनिरतः [1]स च प्रेतोऽभिजायते ॥

हारीतः

अस्तेयं परमो धर्म इति [2]धर्मविदो विदुः ।
पर[3]द्रव्यापहर्तॄणां न शुभा विद्यते गतिः ॥

1 उसन् सवै, गृ. र.
2 वेद, ना. को.
3 द्रव्यस्य हन्तॄणां इति गृ. र. ५१८.

# अथ स्तेयापवादः

तत्र आपस्तम्बः [१, २८, १–५]

यथाकथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ। तथा काण्वपौष्करसादी। सन्त्यपवादाः परपरिग्रहेष्विति वार्ष्यायणिः। शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति। अतिव्यवहारो [1]व्यरुद्धो भवति।

शिवोषायुग्यघासोऽस्वामिनः प्रतिषेधे।

सर्वत्राऽऽनुमतिपूर्वमिति हारीतः।

यथा कथञ्चित् इत्यर्थे यथाकथेति छांदसः प्रयोगः। एवं विधिं परपरिगृहीतमदीयमानं, परेण परिग्रहः परस्वं, 'अभिमन्यते' स्वीकरोति। 'शम्योषा' मुद्गचणकादीनां बीजकोषः। 'उषा' अभ्यषाख्यायवादिकणिशाः। 'युग्यानां' वाहनानाम्। 'घासो' यवसः। एवं विधिं यस्तु परिगृहीतमादीयमानं परेण तत्स्वामिनां 'प्रतिषेधयन्ति' निवारयन्ति। 'अतिव्यवहारो' अतिमात्रग्रहणम्। 'विरुद्धो' निषिद्धः[2]।

1 विरुद्धो—ना. को.

2 Text and commentary corrupt in all manuscripts. Their omission in *Gṛhastharatnākara* may be noted. Haradatta's commentary is accordingly given below: 'यथा कथा च' आपदि अनापदि वा

**यमः**

अस्तेयमग्नये काष्ठमस्तेयञ्च [1]तृणं गवे ।
कन्याहरणमस्तेयं यो हरत्यनलङ्कृताम् ॥
[2]पुष्पे शाकोदके काष्ठे तथा मूलफले तृणे ।
अदत्तादानमेतेषामस्तेयन्तु यमोऽब्रवीत् ॥
तृणं काष्ठं फलं पुष्पं प्रकाशं वै [3]हरेद् द्विजः ।
[4]गोब्राह्मणार्थे गृह्णन्वै न स पापेन लिप्यते ॥

**मनुः**[5] [८, ३३९]

वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च ।
तृणं च गोभ्यो [6]घासार्थमस्तेयं मुनरब्रवीत् ॥

'वानस्पत्यं' वनस्पतिप्रभवं पत्रादि । 'अग्न्यर्थं' आहितस्याग्नेः समिन्धनार्थम् ।

भूयांसमल्पं वा, 'परपरिग्रहं' परस्वं, 'अभिमन्यते' ममेदमस्तु इति बुद्धौ कुरुते, सर्वथा स्तेन एव भवतीति कौत्सादयो मन्यन्ते ॥ वार्ष्यायणिस्तु मन्यते केषुचित् परपरिग्रहेषु स्तेयस्याऽपवादाः सन्तीति ॥ तानेवोदाहरति—"शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति" इति ॥ 'शमी' बीजकोशी; तस्या 'मुष्यन्ते' दह्यन्ते कालवशेन पच्यन्ते इति 'शम्योषाः', कोशीधान्यानि मुद्गमाषचणकादीनि । युगं वहतीति 'युग्यः', शकटवाही बलीवर्दः, तस्य घासो भक्षस्तृणादिः 'युग्यघासः' । एते अदीयमानाः 'स्वामिनो न प्रतिषेधयन्ति,' स्वामिनः प्रतिषेधं न कारयन्ति । एतेष्वदीयमानेषु न प्रतिषेद्धुं अर्हन्तीत्यर्थः ॥ स्वयं ग्रहणेऽपि न स्तेयदोष इति यावत् ॥ शम्योषादिष्वपि अतिव्यवहारो, 'व्यृद्धौ' दुष्टो भवति, अतिमात्रापहारे स्तेयदोषो भवतीत्यर्थः ॥ सर्वेषु द्रव्येषु, सर्वास्ववस्थासु स्वाम्यनुमतिपूर्वमेव ग्रहणमिति हारीताचार्यो मन्यते ॥

1 गवे तृणं—गृ. र. ५१९.

2 पुष्पकाष्ठोदके शाके—गृ. र. ५१९.

3 हरन् वरः गृ. र. ५१९.

4 "यो हरति वरो गुणवानिति शेषः । 'अनलङ्कृतां' अन्यस्मै विवाहयितुं अलङ्कृता या तदन्याम्"—गृ. र. ५१९.

5 ८. ३३९.

6 ग्रासा—ना. को.

देवलः

अस्तेयमग्नये काष्ठमस्तेयं पशवे तृणम् ।
अस्तेयं फलमारण्यमस्तेयं पार्थिवं जलम् ॥

'पार्थिवं' भूमिष्ठं परकूपादिस्थितमुत्सृष्टम्[1] ।

गौतमः[2]

गोऽग्न्यर्थे [3]तृणमेधन् वीरुद्वनस्पतीनां पुष्पाणि स्वयमाददीत । फलानि [4]वाऽपरिवृत्तानाम् ।

'अपरिवृत्तानां' अपरिरक्षितानाम् ।

याज्ञवल्क्यः[5]

द्विजस्तृणैधःपुष्पाणि सर्वतः समुपाहरेत् ।

'सर्वतः' रक्षितादपि ।

हारीतः

पूर्वाश्रमयोर्नैक्षुद्वयग्रहणे स्तैन्यम् ।

तथा [6]मूत्रपुरीषादीनां पाण्योः शाकपरिमाणे एकपाणेः । [7]शमीनां बहवस्तद्वत् एके । [8]रक्ष्यवृक्षाणां तत्स्थानतक्षणे स्तोकग्रहणे वा अन्येषां सुमनसां वार्चापिनहने अग्न्यर्थे तृणकाष्ठानां यवसोदकेन गवां च अस्तैन्यम् ।

1 मनुत्स—ना. को.
2 २. ३. २५.
3 तृणमेधं—गृ. र., ५२०.
4 चापरिवृत्तानां इति गृ. र., ५२०.
5 २. १६६.
6 मूत्रपुरीषाणां । गृ. र., ५२०.
7 शमीनां बहवस्तद्वदेके.
8 'रक्षावृक्षाणां तत्स्थानतक्षणेऽस्तैन्यम् । अन्येषां च सुमनसां अर्चापिनहने । अग्न्यर्थे तृणकाष्ठानां यवसोदकेन गवां चास्तैन्यम्'—इति गृ. र., ५२०.

'पाण्योः शाकपरिमाणे' पाणिद्वयपरिमिते शाके। पाणिः शमीनां परिमाण इत्यनुषङ्गः। एकपाणिपरिमितानां शमीनां इत्यर्थः। 'रक्ष्यो' रक्षणीयः। 'अर्चापिनह्नं' प्रतिमाच्छादनम्।

शंखलिखितौ

तिल-मुद्ग-माष-[1]यवगोधूमादीनां [2]शस्यमुष्टिग्रहणेष्वदोषः पथिकानामप्यप[3]थ्यदलानां तथेक्षोर्मूलकयोः शाकपुष्पफलप्रचायने च। विदितस्य प्रकाशं गृह्णतो न दोषः।

'शस्यं' फलम्। 'अपथ्य[4]दलानां' संबलरहितानाम्। 'विदितस्य' आख्यातस्य साधुत्वेनेति शेषः।

बृहस्पतिकात्यायनौ[5]

त्रपुणेर्वारुके द्वे तु पञ्चाम्रं पञ्चदाडिमम्।
खर्जूर[6]बदरादीनां [7]मुष्टिं गृह्णन्न [8]दोषभाक्॥

'उर्वारुकं' कर्कटी।

नारदः[9]

शालि[10]व्रीहि [11]प्रसूनानां मुष्टिर्ग्राह्यो विधीयते।

1 मसूरयवगोधूमानां शस्यमुष्टिग्रहणेषु पथिकानामप्यपञ्चदलानां तथेक्षोर्मूलकयोः पुष्पफलप्रचयने च विदितस्य प्रकाशं गृह्णतो न दोषः—गृ. र.

2 सम्यक्—ना. को.

3 थ्यदानानाम्—ना. को.

4 दानानां—ना. को.

5 बृह. आपद्धर्म,—४९; कात्यायन—८२२, अ.

6 दाडिमादीनां—गृ. र., ५२१.

7 षष्ठिं—ना. को

8 दुष्यति इति गृ. र., ५२१.

9 मुद्रितनारदस्मृतौ न लब्धम्.

10 व्रीहिमसूराणां—गृ. र., ५२१.

11 मसूराण्यं—ना. को.

यवगोधूमयोर्वापि [1]यदि वा मुद्गमाषयोः ॥
[2]अनिषद्धैर्गृहीतव्यो मुष्टिरेकः पथि स्थितैः ।
शाकं शाकप्रमाणेन गृह्यमाणं न दुष्यति ॥
ग्रहीतव्यानि पुष्पाणि देवतार्चनकारणात् ।
अदत्तादायिनं विद्याद्यदि त्वधिकमिच्छति ॥

'शाकप्रमाणं हारीतोक्तं मुष्टिद्वयम् ।

वृद्धमनुः

चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।
[3]अनिर्बद्धैर्गृहीतव्यो मुष्टिरेकः पथि स्थितैः ॥

'अनिर्बद्धैः' असंबद्धैः अस्वामिभिरिति ।

यमः

पथिकः क्षीणवृत्तिस्तु द्वाविक्षू द्वे च मूलके
आददानः परक्षेत्रे न दोषं ब्राह्मणोऽर्हति ॥

1 यद्वाऽथो—गृ. र., ५२१.
2 एतेषां मानवैर्मुष्टिः गृहीतव्या—गृ. र. ५२१.
3 अनिरुद्धैः—गृ. र., ५२१.

## २०

# अथ शौचम्

तत्र हारीतः

शौचं नाम धर्मादिपथो ब्रह्मायतनं श्रियोधिवासो, मनसः प्रसादनं, देवानां प्रियं, शरीरे [1]क्षेत्रज्ञदर्शनं बुद्धिप्रबोधनम्। तच्च शौचं द्विविधमुपरिष्टाद्वक्ष्यामः।

एवं ह्याह—

शुचिं देवा हि रक्षन्ति पितरः शुचिमन्वयुः।
शुचेर्बिभ्यति रक्षांसि ये चान्ये दुष्टचारिणः॥

'धर्मादिपथः' धर्मस्य प्रथमो मार्ग उपाय इति यावत्। शुचेरेव कर्मण्यधिकारात्। 'ब्रह्मायतनं' वेदाश्रयः। क्षेत्रज्ञं आत्मानं दर्शयतीति 'क्षेत्रज्ञदर्शनम्'। 'द्विविधं' हारीतेनैव वक्ष्यमाणं बाह्यमाभ्यन्तरञ्च।

तत्र बाह्यं कुलशौचमर्थशौचं शारीरं च। तत्र कुलशौचं सूतकाद्यशौचविरहः। अर्थशौचं भोजनादिद्रव्याणां शुद्धिः। शारीरं शौचं अमेध्यादिलेपप्रक्षालनम्।

1 क्षेत्रदर्शनं—इति गृ. र., ५२२.

आभ्यन्तरशौचं पञ्चविधम्। तद्यथा मानसं चाक्षुषं घ्राणं वाच्यं स्वाद्यं चेति। तत्र मानसम्—अपुण्याभिधानदोषविरहः[1]।

दक्षः

शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः॥

हारीतः[2]

भ्रष्टशौचं नरं दृष्ट्वा प्रहरन्तीह राक्षसाः।
यक्षाः पिशाचा भूतानि ये चान्येऽप्येवमादयः॥
[3]ज्ञानं दानं तपस्त्यागः मन्त्रकर्मविधिक्रियाः।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः॥

[4]यमः

इष्टं निवेदितं दत्तं भुक्तं जप्तं तपः श्रुतम्।
यातुधानाः [5]प्रलुप्यन्ति शौचभ्रष्टात् द्विजन्मनः॥

शातातपः

शौचहीनाश्च ये विप्रा न च यज्ञोपवीतिनः।
[6]हुतं दत्तं तपस्तेषां विनश्येन्नाऽत्र संशयः॥

1 गृ. र., ५२३ अत्राधिकपाठम्—"चक्षुरादिशौचश्चानवलोक्यानवलोकनादिविरहः। चाक्षुवत् स्पर्शनीयमप्यत्र द्रष्टव्यं न्यायसाम्यात्.

2 The following four lines of Hārita are omitted by ना. को.

3 स्नानं दानं—गृ. र., ५२३.

4 यम इति न दृश्यते, हारीतवचनत्वेन "इष्टं" इति पद्यमपि दृश्यते—गृ. र., ५२३.

5 प्रलुम्पन्ति—गृ. र., ५२३.

6 कृतं इति गृ, र., ५२३.

२१

# अथ ब्रह्मचर्यम्

तत्र हारीतः

ब्रह्मचर्यं नाम दिव्यमानुषीणां तथा चित्रार्थकाष्ठ-पोतस्थ-मृण्मयादीनामप्यप्रार्थनमस्मरणमसङ्कल्पनमनभिप्रेक्षणमसङ्कीर्तनमनभिभाषणमनभिगमनमसंदर्शनमसमागमश्चासाम्।

तच्च ब्रह्मचर्यं चतुर्विधं भवति। [1]तत्र परदारवर्जनं नित्यम्। स्वदाराभिगमनं कृष्णम्। पर्वनियमवर्जं रक्तम्। ऋतुकालाभिगमनं शुक्लम्। ऊर्द्ध्वरेतस्त्वं विमलम्।

एवं ह्याह—

कृष्णेनेमं जयेल्लोकं मध्यं रक्तेन वै जयेत्।
शुक्लेन तु जयेत्स्वर्गं विमलान्मोक्षमाप्नुयात्॥

'दिव्या' ऊर्वश्याद्याः शास्त्रावगताः। 'पोतस्थाः' पोतं प्रतिमाकरणं रजतादि तत्स्थाः तन्निर्मिताः। 'अप्रार्थनं' सा मे भूयात् इत्याशंसाविरहः। 'असङ्कल्पं' एवं करिष्यामीत्यभिधानाभावः। 'अनभिप्रेक्षणं' अभिमुखानभिलोकनम्। 'असंदर्शनं' सकलावयवानवलोकनम्। 'असमागमः' असन्निधानम्। पर्वनियमवर्जं, पर्वणि अमावास्यादौ, नियमे व्रतादौ इति यमाः।

1 'कृष्णं रक्तं शुक्लं विमलमिति'—गृ. र. ५२४.; शुक्लं, कृष्णं रक्तं विमलमिति ना. को. च.

# २२

# अथ नियमाः

[1]तत्र हारीतो यमश्चान्त्यश्लोके

क्रोधनियम[2]श्चार्जवमकल्पता संतोषो गुरुशुश्रूषा चेति [3]नियमाः। ततो नियमाः, वाङ्नियमः [4]कर्मनियमश्चेति। क्रोधनियमाः मानसात्क्रोधात् चित्तपरितापात् पीड्यमानस्य कार्श्यवैवर्ण्यवैरूप्यादयो व्याधयः संभवन्ति।

अहङ्कारेर्ष्याऽसूया-द्वेष-परोपतापादीनि च क्रोधरूपाणि। वाग्लक्षणादप्रियपरुषवादिता नानाविधवाक्प्रदानादयः। कर्मलक्षणाः केशग्रहणसंप्रहारादयः। अपरशरीर [5]प्रयोगकराश्चेति।

यैरुपसृष्टः सन् विद्वानप्यवसादं उपैति तस्मादेतान्वर्जयेत्।

1 तत्र हारीतः—गृ. र., ५२५.

2 वर्जनमकल्कता—गृ. र., ५२५.

3 नियमः—गृ. र., ५२५.

4 कर्मनियमो वाङ्नियमश्चेति क्रोधनियमः। मानसात् क्रोधात् चित्तपरितापात् पीड्यमानस्य वैवर्ण्यवैकृत्यादयो व्याधयः संभवन्ति—इति गृ. र., ५२५.

5 विप्रयोग—गृ. र., ५२५.

एवं ह्याह—

[1]आक्रुष्टस्ताडितः क्षिप्तः क्षमते यो न कुप्यति।
स तस्य दुष्कृतं दत्वा सुकृतं सर्वमाप्नुयात्॥ इति

'तस्य' आक्रोशनादेः।

यमः

[2]अक्रोधनो यजति जुहोति यद्वा तपस्तप्यति वैरोचने-[3]स्तद्धरतेऽस्य सर्वं मोघश्रमो भवति।

'अस्य' क्रोधनस्य। 'वैरोचनिः' बलिः।

हारीतः

[4]निष्कृतिर्नियमो जैह्मं नियमश्चार्जवम्। छद्म माया व्याजयुक्ता[5]धिकृतिः। काठिन्य [6]शाठ्यवैषम्यादौष्यं सद्भावयुक्तं [7]जैह्मं तदेते सन्नियम्यार्जवं भवति।

एवं ह्याह—

जैह्मं मृत्युपदं प्राहुर्निष्कृतिं तमसः पदम्।
सर्वभूतात्मभूतत्वादार्जवं ब्रह्मणः पदम्॥

स्मयनियमः सूनानियमः सेवानियमो ऽदंभनियमः चैत्यकल्कता।

1 आक्रुष्टस्ताडितः क्षिप्तः क्षमते यो न कुप्यति। स तस्य दुष्कृतं दत्वा सुकृतं सर्वमाप्नुयात्। इति। तस्य आक्रोशनादिकर्तुः, गृ. र., ५२५.

2 यत् क्रोधनो जपति यज्जुहोति यद्वा तपः तप्यति, गृ. र. ५२५.

3 तमुद्धरो, ना. को.

4 कृतिर्नियमो, गृ. र., ५२५.

5 निष्कृतिः, गृ. र., ५२५.

6 असाध्य, गृ. र., ५२५.

7 ह्येतन्नियमार्जवं भवति, इति गृ. र., ५२५.

ज्ञान-दान-तप-ऐश्वर्य-भोग-विशेषैः स्मयं वर्जयेत्। स्मयोपपन्नास्तेजसावपन्नाः संभवन्ति। [1]पञ्चसूनासंभूतं पापमयमित्युच्यते। अर्थिनो हि प्रेतभूता बीजवज्जायन्ते। तस्मान्नात्मार्थे [2]सूनाः कारयेत्। [3]त्रिविधशिल्पप्रयोगैः सेवाविशेषैः। परान् अन्नार्थं नोपचरेत्। अविद्वान् विद्वत्तां ख्यापयत्यदाता दानं, अयज्वा यज्ञं, अतपस्वी तपो नाश्रम्याश्रमार्थं लिप्सन्। तेनैव वृत्तानां दुष्कृतं भवति।

एवं ह्याह—

किं तेन न कृतं पापं चौरेणात्मापहारिणा।
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते॥

'छद्म' छलम्। 'माया' कौटिल्यम्। 'व्याजः' अर्थान्तरोपन्यासः। 'काठिन्यम्' निष्करुणता। 'शाठ्यं' अपार्थाय हृदये रागादिप्रदर्शनम्। 'वैषम्यं' निगूढपरद्रोहाभिसंधानम्। 'दौष्ट्यं' परसुखासहिष्णुत्वम्। एते निष्कृतिः जैह्मं स्मयो दर्पः। 'अवपन्नाः' हीनाः 'बीजवज्जायन्त' इति। यथा बीजात्समानमेव कार्यं जायते, तथा आधिनोऽपि समानरूपा एव जायन्ते। अर्थग्रहणाद्विद्यार्थमदोषः। एवं वृत्तानां विद्वदानीनां प्रतिपद्यत इत्यन्तर्भावितण्यर्थः।

1 पञ्चसूनासम्पन्नं सभूतं पापमयमित्युच्यते, गृ. र., ५२६.

2 सूनां, गृ. र., ५२६.

3 विविधशिल्पप्रयोगैः सेवाविशेषैः परान् अत्यर्थं नोपाचरेत्। अविद्वान् विद्वत्तां ख्यापयति अदाता दानं, अयज्वा यज्ञम्। अतपस्वी तपोऽनाश्रम्याश्रममलिप्सन्। तेनैवं वृत्तानां दुष्कृतं कृतं भवति। एवं ह्याह—इति गृ. र. ५२६.

**मनुः**[1]

न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं [2]सञ्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम् ॥
प्रेत्येह चेदृशा विप्रो गर्ह्यते ब्रह्मवादिभिः ।
छद्मनाचरितं [3]तच्च व्रतं रक्षांसि गच्छति ॥
अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति ।
स लिङ्गिनां हरत्येनस्तिर्यग्योनौ च जायते ॥

**यमः**

सर्वत्र विद्यते व्याजो धर्मे व्याजो न विद्यते ।
व्याजोपहृतधर्माणां स्वर्गे वासो न विद्यते ॥
तपो न कल्कोऽध्ययनं न कल्कः
　स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्कः
　तान्येव भावोपहृतानि कल्कः ॥

'कल्कः' पापम् । 'स्वाभाविकः' नौपाधिकः । 'प्रसह्य वित्ताहरणं' मन्त्रः भ्रान्त्या [4]न कर्मणा वा स्वाम्यननुमतवस्तु-ग्रहणम् ।

**अत्र हारीतः**

सूनानियमी सेवानियमी [5]स्तेयाविक्रेयविक्रयी अया-

1 ४. १९८–२००.
2 प्रच्छाद्य, गृ. र. ५२६.
3 यच्च व्रतं रक्षांसि यच्छति, गृ. र. ५२७.
4 नर्मणा वा स्वाम्यननुमतवस्तुग्रहणं, गृ. र. ५२७.
5 स्तेयाविक्रयविक्रयी, गृ. र. ५२७.

ज्ययाजनासत्प्रतिग्रह-शूद्रश्रावण-भृतकाध्यापना[1]नुयोगप्र-तिग्रहनिवृत्यालोभनियमी संतुष्टो भवति ।

एवं ह्याह—

संतोषः परमो धर्मः संतोषः परमं [2]सुखम् ।
संतोषः परमं श्रेयः संतोषः परमं यशः ॥
संतोषः परमा सिद्धिः संतोषः परमं सुखम् ॥

इति।

'शूद्रश्रवणं' [सुपात्रताख्यापनार्थं शूद्रस्याग्रे वेदादि-पाठः।] 'अनुयोगः प्रतिग्रहः' पाटनिकापूर्वकः 'प्रति-ग्रहसंतोषः परमो' धर्म इति धर्मादीनां संतोषमूल-कत्वात् तदभेदेनोपचारः ॥

गुरुशुश्रूषा नाम शासनधर्मनिमित्तं क्रियते। तत्र ज्ञाननिष्क्रियार्थं गुरुशुश्रूषां कुर्यात्। शुश्रूषास्वरूपनिवृत्तौ ब्रह्मचारिकाण्डे अभिहितौ ॥

पुनर्हारीतः

यमेषु नियमेषु वा [3]प्रसन्न-
स्तिष्ठति [याति]लोकान् वरिष्ठान् ।
भ्रष्टस्तेभ्यो विविधा याति योनीः
यासूत्पन्नो मज्जते यातनासु ॥

1 अर्थयोगपरिग्रहनिवृत्या लोभनियमे संतुष्टो भवति, गृ. र. ५२७.
2 पदं । संतोषः परमं कर्म संतोषः परमं तपः गृ. र., ५२७.
3 अप्रमत्तस्तिष्ठति याति, गृ. र. ५२८.

[1]तस्माद्धीरः शुश्रुवान् न्यायवृत्तो
यस्मिन् यशो न व्यथते नापि धर्मः ।
धर्मो ह्येकः सुसहायो जनानां
य एतान् घोरात् त्रायते[2]मृत्युदुर्गात् ॥ इति

'तेभ्यो' यमनियमेभ्यः । 'शुश्रुवान्' श्रुतवान् ।

इति भट्टश्रीमल्लक्ष्मीधरविरचिते गृहस्थकाण्डे यम नियमाः ।

1 तभ्यो धीरः शुश्रूषावान्, गृ. र. ५२८.

2 मृत्युयोगात् इति, गृ. र. ५२८.

## २३

# अथ कुलनाशकानि

तत्र [1]यम शातातप दानव्यासाः—

देवद्रव्यविनाशेन [2]ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
'देवद्रव्यं' देवतोद्देशेन यत् त्यक्तं वस्तु ।

यमः

[3]गोभिः पशुभिरश्वैश्च कृष्या वसुसमृद्धया ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

[मनुः][4]

शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनं चैव नास्तिक्येन च कर्मणा ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥
मन्त्रतस्तु समृद्धानि कुलान्यल्प[5]धनान्यपि ।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥

1 यमादयः, गृ. र. ५२९.
2 परस्वहरणेन, गृ. र. ५२९.
3 कुविवाहैः क्रियालोपैः वेदानध्ययनेन च, गृ. र. ५२९.
4 मनुरिति बीकानीरकोशे, मनुस्मृतौ ३, ६४-६६.
5 धनानि च, गृ. र. ५२९.

'शिल्पं' चित्रादिकर्म, 'व्यवहारः' ऋणप्रदानादि, 'यानैः' शकटादिभिः। 'सेवा' अन्यभावेन परराधनम्। 'नास्तिक्यकर्म' नास्ति स्वर्गादिफलमेतेन कर्मणेति [1]बुद्धिः॥

दक्षः

अनृतं पारदार्यं च तथाऽभक्ष्यस्य भक्षणम्।
अगम्यागमनं चैव हिंसा स्तेयं तथैव च॥
अश्रौतधर्माचरणं मैत्रधर्मबहिष्कृतम्।
एतानि नव कर्माणि [2]पातकानि च वर्जयेत्॥

'मैत्रधर्मबहिष्कृतं' मैत्रीधर्मयोर्बहिष्करणं त्याग इत्यर्थः॥

1 बुध्या व्यापारः इति, गृ. र. ५२९.
2 विकर्माणि विवर्जयेत्, गृ. र. ५३०.

# २४

# अथ निवासः

तत्र बृहस्पतिः

निवासमुख्यो [1]विप्राणामाचारः समुदाहृतः ।
गुणदोषसमुद्भूतिर्लोके संसर्गजा स्मृता ॥
[2]भूमिमाल्यकुशधान्यशष्पाम्बुद्विजनैगमे ।
निष्कण्टके [3]धार्मिके च वसेत्स्थाने निरामये ॥

'शष्प' अत्र घासः । 'नैगमो' वाणिजकः । 'कण्टको'ऽत्र चौरादिः ॥

'धार्मिके' धार्मिकबहुले । 'निरामये देशे' स्वभावजरोगशून्ये ॥

आपस्तम्बः [१, १९, २२]

[4]प्रभूतैधोदके ग्रामे यत्राऽऽत्माधीनं प्रयमणं तत्र [5]वासो धर्म्यो ब्राह्मणस्य ।

1 वर्णानां इति बृह. आपद्ध, ५० ; वर्णानां, गृ. र. ५३०.

2 भूमिमाल्यकुशाधान्याम्बुद्विजनैगमे, बृह. आपद्ध, ४६.

3 धार्मिक्ये, गृ. र., ५३०.

4 प्रभूतं 'एधः' उदकं च यस्मिन् ग्रामे तत्र वासो धर्म्यः । अत्रापि न सर्वत्र । किं तर्हि ? यत्रात्माधीनं प्रयमणं प्रायत्यं मूत्रपुरीषप्रक्षालाधीनानि तत्र । यत्र कूपेष्वेवोदकं तत्र बहुकूपेऽपि न वस्तव्यम् । ब्राह्मणग्रहणात् वर्णान्तरस्य न दोषः ॥ (हरदत्तः)

5 वासो ब्राह्मणस्य, गृ. र. ५३१.

**'प्रयमणं' पवित्रीकरणं जलगोमयकुशादि ॥**

**बौधायनः [२, ६, ३१–३३]**

**[1]प्रभूतैर्यवसैधोदक [समित्] कुशमाल्योपनिष्क्रमण-माढ्यजनाकुलमनलससु[2]समृद्धमार्यजनाधिष्ठितमदस्युप्रति-वेशं ग्रामं वासयितुं यतेत धार्मिकः ॥**

**उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः[3] ।**
**उषित्वा द्वादश समाः [4]स शौद्रं धर्ममृच्छति ॥**

**पुररेणुगुण्ठितशरीरस्त[5]त्पूर्णनेत्रवदनश्च नगरे वसन् [6]सन्नियतात्मा सिद्धिमवाप्स्यतीति । [7]न तदस्ति ।**

**रथाश्वगजधान्यानां गवां चैव रजः शुभम् ।**
**[8]अप्रशस्तं [9]समूहन्याः श्वाजाविभिरवाससाम् ॥**

**'उपनिष्क्रमणं' निर्गमनमार्गः। 'अनलसः' उद्यमी। 'अदस्युप्रतिवेशं' असन्निहितचौरम्। 'उद-पानोदके' कूप एवोदकं यत्रेत्यर्थः। 'नगरे' पुरे[10]। 'पुरः'**

1 'एधः' इन्धनादि। 'यवसः' दोह्यानां गवादीनां भक्ष्यः। 'उपनिष्क्रमणं' विहार-भूमिः। 'आढ्याः' धनवन्तः। 'अलसाः' निरुत्साहाः। तद्विपरीता 'अनलसाः'। 'आर्याः' पण्डिताः। 'दस्यवः' चोराः तैः अप्रवेश्यं अधृष्यम्। तत्र हि धर्माश्रमाविरोधेन जीवेन सुकरं भवति। तत्र धार्मिको नित्यं निवसेत् ॥ (**गोविन्दस्वामी**)

2 समृद्धमदस्युप्रवेशं ग्राममावसितुं यतेत धार्मिकः, गृ. र. ५३१.

3 वृषलीशब्दः प्राक् प्रदानात् रजस्वलाया वाचकः (**गोविन्दस्वामी**).

4 शौद्रं साधर्म्यं, गृ. र. ५३१.

5 तत्परिपूर्णं; गृ. र., ५३१.

6 सुनियतात्मा, गृ. र., ५३१.

7 न च तदस्ति, गृ. र., ५३१.

8 समूहिन्यादिरजसां संपर्कस्यापरिहार्यतया नगरे न वस्तव्यमिति तात्पर्यम् इति, गृ. र. ५३१.

9 समूहिन्याः, गृ. र., ५३१.

10 पुरं च विवादरत्नाकरे विवृतं इति, गृ. र., ५३१.

मार्कण्डेयपुराणोक्तं [४९, ४३] यथा—

सोत्सेधमुच्चप्राकरं सर्वतः परिखावृतम् ।
योजनार्द्धार्द्धविष्कम्भमष्टभागायतं पुरम् ॥

इति तात्पर्यार्थः ॥

यमः

एककूपोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
वर्षेण [1]शूद्रीभवति कृष्णवर्णमुपाश्रितः ॥

'कृष्णवर्णः' शूद्रः ।

आपस्तम्बः [१, ३२, १८–२१]

क्षुद्रान् [2]क्षुद्राचरितांश्च देशान्न सेवेतादसतां समाजांश्च । समाजं चेद्गच्छेत्प्रदक्षिणीकृत्योऽपेयात् । नगरप्रवेशनानि वर्जयेत् ।

'क्षुद्रान्' जलादिना सङ्कुचितप्रचारदेशान् । 'क्षुद्राचरितान्' निषादादिभिरध्युषितान् ॥ 'नगरप्रवेशनानि' नगरं प्रविश्यते यैः प्रदेशैः तानि । वासार्थं न सेवेतेत्यर्थः ॥

मनुः [४, ६०–६१, ७९]

नाऽधार्मिके वसेद्ग्रामे [3]व्याध्यादिबहुले भृशम् ।
नैकः प्रपद्येताध्वानं न चिरं पर्वते वसेत् ॥
न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते ।

1 शूद्रो, गृ. र. ५३१.

2 क्षुद्रचरितान् देशान् न वसेत् । असतां समाजं चेद्गच्छेत् प्रदक्षिणीकृत्योपेयात् । नगरप्रवेशनानि च वर्जयेत् इति गृ. रत्ना:, ५३१.

3 न व्याधि, गृ. र., ५३२.

[1]न पाषण्डजनाक्रान्ते नोपसृष्टेऽन्त्यजैः नृभिः ॥
न संवसेच्च पतितैर्न चांण्डालैर्न [2]पुल्कसैः ।
न मूर्खैं र्नावलिप्तैश्च[3] नान्त्यैर्नान्त्यावसायिभिः ॥

'अधार्मिकजनावृते' अधार्मिकजना येषु ग्रामेषु तैर्वेष्टितेषु ।

विष्णुः [७१, ६४–६८]

न शूद्रराज्ये निवसेत् । नाऽधार्मिकजनाकीर्णे ।
न संवसेत्[4] वैद्यहीने नोपसृष्टे [5]न चिरं पर्वते ॥

उशनाः

नष्टपतिताऽभिशस्तलोकनिन्दिताचारैः न सह संवसेत् ॥

व्यासः

तत्र [6]तेन न वस्तव्यं यत्र नास्ति चतुष्टयम् ।
ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी ॥
तत्र तावन्न वस्तव्यं यत्रैतत् त्रितयं सदा ।
जिगीषुः पूर्ववैरी च जनश्च सततोत्सवः ॥

मार्कण्डेयपुराणे [३४, ११३–११६]

जितामित्रो नृपो यत्र बलवान् धर्मतत्परः ।
तत्र नित्यं वसेत् प्राज्ञः कुतः कुनृपतौ सुखम् ॥

1 न पाषण्डिजनाकीर्णे नोपसृष्टेन्त्यजैर्नृभिः, गृ. र., ५३२.

2 पुक्कसैः, गृ. र., ५३२.

3 वा नान्त्यैर्नान्त्या, गृ. र., ५३२.

4 संवत्सरिकवैद्यविहीने । नोपसृष्टे न चिरं पर्वते, इति गृ. र., ५३२.

5 'उपसृष्टो' व्याध्यभिभूत इति केशववैजयन्ती.

6 तावन्न, गृ. र. ५३२.; मार्कण्डेयपुराणे च, ३४, ११२, १७, दृश्यते.

[1]पौराः सुसंहताः यत्र सततं न्यायवर्तिनः ।
यत्रामात्सरिणो लोकास्तत्र वासः सुखोदयः ॥
यस्मिन् कृषीबला राष्ट्रे प्रायशो नातिभोगिनः ।
यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः ॥

तथा

वसेन्नित्यं सुशीलेषु सहवासिषु पण्डितः ।
[2]यत्र अप्रधृष्यो नृपतिर्यत्र सस्यप्रदा मही ॥

महाभारते

यत्रागमयमानानामसत्कारेण पृच्छताम् ।
प्रब्रूयात् ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान् ॥
'आगमयमानानां' तर्जनं कुर्वताम् ।
शिष्योपाध्यायिकावृत्तिर्यत्र स्यात्सुसमाहिता ॥
यथावच्छास्त्रसंपन्ना कस्तं देशं परित्यजेत् ।
[3]आकाशस्था ध्रुवं यत्र दोषं ब्रूयुर्विपश्चितः ॥
आत्मपूजा[4]भिकामा वै को वसेत्तत्र पण्डितः ।
'[5]आकाशस्था' अप्रशस्तुभाः ॥

तथा

यत्र सन्तापिता लुब्धैः प्रायशो धर्मसेतवः ।
प्रदीप्तमिव चैलान्तं कस्तं देशं न संत्यजेत् ॥

1 यत्राप्रधृष्यो नृपतिर्यत्र शस्यप्रदा मही । पौराः इति, गृ. र. ५३३.
2 पूर्वं दृश्यते, गृ. र. ५३३.
3 आकाशस्थो ध्रुवन् यत्र ब्रूयाद्दोषं विपश्चितः, गृ. र. ५३३.
4 अतिकामो वै, गृ. र. ५३३.
5 आकाशस्थो निमित्तशून्यः, गृ. र. ५३३.

'धर्मसेतवः' धर्ममर्यादाव्यवस्थापकाः। 'चैलं' वस्त्रम्।

यत्र धर्म[1]मनाशङ्काश्चरेयुर्वीतमत्सराः।

चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु।
धर्ममर्थनिमित्तञ्च चरेयुर्यत्र मानवाः॥
न तत्र तु वसेज्जातु ते हि पापकृतो [2]जनाः।
कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः॥
[3]व्यवधावेत्ततस्तूर्णं सपर्यास्तरणादिव।
'व्यवाधावेत्' वेगेनापसरेत्।
यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः।
कुटुम्बिनामग्रभुजस्त्य[4]जेत्तद्राष्ट्रमात्मवान्॥
श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्याः सनातनाः।
याजनाध्या[5]पनभुजो यत्र तद्राष्ट्रमावसेत्॥
स्वाहा स्वधा वषट्कारा यत्र सम्यगनुष्ठिताः।
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन्॥
अशुचीन्यत्र पश्येत ब्राह्मणान् वृत्तिकार्षितान्।
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवा[6]मिषम्॥
प्रीयमाणा नरा यत्र पप्रच्छेयुरयाचिताः।
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान्॥
दण्डो यत्राविनीतेषु[7] सत्कारश्च कृतात्मसु।

1 अनाशङ्क्य, गृ. र. ५३३.

2 नराः, गृ. र. ५३४.

3 व्यवधारेत् ततस्तूर्णं समर्प्यास्तरणादिव, गृ. र. ५३४.

4 त्यजेद्राष्ट्रं तत्, गृ. र. ५३४.

5 अध्यापनायुक्ताः, गृ. र. ५३४.

6 आमिषैः, गृ. र. ५३४.

7 'अविनीता' दण्डोचितापराधवन्तः, गृ. र. ५३४.

चरेत्तत्र वसेच्चैव धर्मशीलेषु साधुषु ॥

देवलः

अरण्यं देवतास्थानं तीर्थान्यायतनानि च ।

तस्मात्तेषु मृता लोके [1]यान्ति लोकान् दिवौकसाम् ॥

'अरण्यं' नैमिषादि । 'तीर्थं' गङ्गादि । 'आयतनं' अविमुक्तादि । एतानि देवस्थानानि । तस्मात्तेषु तिष्ठन्तीत्यन्वयः ।

इति निवासः ।

1 लोकाः, गृ. र. ५३५.

२५

# अथ वाच्यावाच्यम्

तत्र मनुः [४, १३९]

> भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् ।
> शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥

'भद्रं भद्रमि'ति प्रथमं भद्रपदं भद्रेतरवस्तुपरम् । द्वितीयं भद्रपदं तत्पर्यायपरम् । "न भद्रमभद्रं इति ब्रूयात् पुण्यं प्रशास्त[1]मिति एव ब्रूयात्" [१, ३१, १३–१४] इति आपस्तंबदर्शनात् । 'भद्रमित्येवे'ति । भद्रपदमेव तत्रार्थे प्रयोक्तव्यम् । 'शुष्कं' निष्प्रयोजनम् ॥

विष्णुपुराणे [३, १२, २२–२३]

> विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः ।
> [2]विवाहश्च विवादश्च तुल्यरूपैः सहेष्यते ॥
> नारभेत कलिं प्राज्ञः [3]शुष्कं वैरं विवर्जयेत् ।
> [4]अप्यल्पहानिः सोढव्या वैरेणार्थागमं त्यजेत् ॥

1 'प्रशास्तं' प्रशास्तमिति हरदत्तमिश्राः

2 विवाहश्च विषादश्च तुल्यरूपैर्नृपेष्यते, गृ. र., ५३६.

3 शुष्कवैरं च गृ. र., ५३६.

4 अप्यर्थहानिः, गृ. र., ५३६.

विष्णुः [७२, ७२–७८]

नाश्लीलं कीर्तयेत् नानृतं नाप्रियं न काञ्चित् मर्मणि स्पृशेत्।

'मर्म' अत्र गोप्यदूषणम् ॥[1]

आपस्तम्बः [१, ३१, ८–११]

[2]गोर्दक्षिणानां कुमार्याश्च परीवादान् [3]विवर्जयेत्। स्पृहयन्तीं [4]गां नाऽऽचक्षीत। [5]संस्पृष्टां च गां वत्सेनाऽनिमित्ते। नाऽधेनुं अधेनुरिति ब्रूयात्। धेनुंभव्येत्येवब्रूयात् ॥

गोः अदक्षिणाया अपि दक्षिणानां वस्त्रहिरण्यादीनां दक्षिणात्वे कल्पितानाम्। 'स्पृहयन्ती' धानादि भक्षयितुं प्रवृत्ताम् 'संस्पृष्टां' वत्सेन पाययितुमिति शेषः। 'अनिमित्ते' ऋतुवैगुण्यनिमित्ताभावे। सत्ताभ्यो धर्मवादोहन्वप्रकथने सति न दोषः[6] ॥ धेनुं भव्यशब्दो धेनुर्भविष्यतीत्यर्थो 'धेनोर्भव्यायां च नुम् वक्तव्य' इति नुमागमः ॥

शङ्खलिखितौ

नेन्द्रधनुश्चन्द्रसूर्य्यपरिवेषोल्कः परस्मै कथयेत्।

नात्मनः प्रतिकूलं न महाजन[7]विरोधं कुर्यात्। न [8]गोष्टिभिः संबध्येत् ॥

1 'अश्लीलं' अकीर्त्तनीयम्। तच्चानृताप्रियाभ्यां भिन्नमिव बोद्धव्यम् ॥ गृ. र. ५३६.

2 गो:, गृ. र., ५३६.

3 वर्जयेत्, गृ. र., ५३६.

4 च गां, गृ. र., ५३६.

5 संस्पृष्टां वत्सेनानिमित्ते। नाधेनुमधेनुरिति ब्रूयात्। धेनुं भव्येत्येव ब्रूयात्, गृ. र., ५३६.

6 यस्य हविषे वत्सा अपाकृता धयेयुरिति आदिके निमित्ते तु आख्यातव्यमेव संस्पृष्टां वत्सेन इति आपस्तम्बीये" इति गोविन्दस्वामी (गौतमस्मृतिव्याख्यायाम्, १. ९. २४) ॥

7 प्रतिकूलं, गृ. र., ५३६.

8 गोष्ठीभि: सम्बध्येत, गृ. र., ५३६.

'महाजनविरोधं' महाजनप्रतिकूलम्। महत्वं वेदार्थ-ज्ञानादिना। 'गोष्ठीभिः' वृथा सङ्कथाभिः॥

आपस्तम्बः [१, ३१, १७]

नाऽसौमे सपत्न इति ब्रूयात् यद्यसौमे सपत्न इति ब्रूयात् द्विषन्तं भ्रातृव्यं जनयेत्[1]॥

पैठीनसिः

[2]मत्तप्रमत्तोन्मत्तैः सह संभाषां न कुर्वीत न परस्त्रियं रहसि [3]संभाषेत्॥

'अप्रमत्तोऽ' नवहितः॥

साङ्ख्यायनगृह्यम् [४, ११, ६]

सूतिकोदक्याभ्यां न संवदेत्॥

गौतमः[4] [१, ९, १७–२५]

न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत[5]। संभाष्य पुण्यकृतो मनसा ध्यायेत्। ब्राह्मणेन सह संभाषेत। अधेनुं धेनुभव्येति। अभद्रं भद्रमिति। कपालं भगालमिति। मणिधनुरितीन्द्रधनुः। गां धयन्तीं परस्मै नाऽऽचक्षीत न चैनां धारयेत्।

1 असौ देवदत्तः मे सपत्नः [वैरी] इति न ब्रूयात सदसि। किं कारणम्? यद्यसौ, 'मे सपत्न इति ब्रूयात्,' 'द्विषन्तं' (क्रियाशब्दोऽयं) विद्विषाणं, 'भ्रातृव्यं' सपत्नं जनयेत्। एवं हि उक्ते स मन्येत—'न अकस्मादयं ब्रूते। नूनमस्य मयि दोषो वर्तते' इति। ततश्च तत्प्रतीकारार्थं यतमानः सपत्न एव जायते॥ इति **हरदत्तमिश्राः**।

2 मत्तोन्मत्तप्रमत्तैश्च सह संभाषणं न कुर्यात्, गृ. रत्ना. ५३७.

3 संभाषयेत्—गृ. र., ५३७.

4 ९. १७.

5 तेन मार्गप्रश्नादौ न दोषः इति **गोविन्दस्वामी**.

पारस्करः [२, ७, १०–११]

गर्भिणीं विजन्येति ब्रूयात्। सकुलं इति नकुलम् ॥

यमः

तिथिं पक्षं च न ब्रूयान्न नक्षत्राणि निर्दिशेत्।
[1]अद्य द्वितीया इदं नक्षत्रमिति अकारणे न ब्रूयात् ॥

देवलः

जीवेति क्षुवतो ब्रूयाज्जीवेत्युक्तः सहेति च ॥
सहेति चेति एकवचनप्रयोगाज्जनितक्रोधप्रतिषेधः।

शङ्खलिखितौ

न परक्षेत्रागारे गां चरन्तीं [2]यापयन्तीं चान्यस्मै कथयेत्। न गोब्राह्मणोपरोधे अश्नीयात्। न वाह्यमाने वाह्यतामिति ब्रूयात् ॥

'उपरोधे' [3]आसेवने ॥

बौधायनः [२, ६, २०]

[4]अयुक्ता रूक्षाः परुषा वाचो न ब्रूयात् ॥

हारीतः

न गां [5]धयन्तीं परवत्सभक्षेत्रावतीर्णां वाऽऽचक्षीत ॥

[6]पैठीनसिः

न परक्षेत्रे गां चरंतीमाचक्षीत पिबन्तं वा परवत्सम् ॥

1 जीवनार्थमद्येयं तिथिरद्येदं नक्षत्रमिति न ब्रूयादित्यर्थः, गृ. र., ५३८.
2 परस्मै कथयेत्, गृ. र., ५३८.
3 आसने सति, गृ. र., ७३८.
4 नायुक्ता रूक्षाः परुषा वाचो ब्रूयात्, गृ. रत्ना. ५३८.
5 चरन्तीं परक्षत्रावतीर्णां चाचक्षीत। पिबन्तं परवत्सकम्, गृ. र., ५३८.
6 पैठीनसिवाक्यं न दृश्यते, गृ. रे.

आपस्तम्बः [१, ३६, १०]

[1]वर्जयेत् स्तुतिश्च गुरोः प्रसक्तं यथा सुस्नातमिति ॥ 'सुस्नातमिति 'स्नानप्रशंसा ॥

पुनरापस्तम्बः [२, ५, ११-१३]

वाक्येन वाक्यस्य प्रतीघात-
माचार्यस्य वर्जयेच्छ्रेयसां च ।
सर्वभूतपरीवादां आक्रोशांश्च
विद्यया च विद्यानाम् ॥

श्रेयसीं प्रशस्तानां विद्यया च विद्यानां प्रतीघातमित्यन्वयः ॥[2]

साङ्ख्यायनगृह्यम् [४, १२, ९-१०]

न जनसमवायं गच्छेन्नोपविशेत् । समेत्य नाक्रोशनेऽपि पिशुनोऽकुलं कुलं नेति हेतिह स्यात् ॥

कुलं कुलप्रयोजनं परगृहगमनशीलः ॥ इति हेतिह वृत्तमिति प्रकाशनपरः ।

महाभारते

पण्यानां शोभनं पण्यं कृषीणां सिध्यतां कृषिः ।
बहुकारं च सस्यानां वाह्येऽवाह्यं तथा गवाम् ॥
संपन्नं भोजने ब्रूयात् पानीये तर्पणं तथा ।
अमृतं पायसे ब्रूयाद्यवाग्वां कृषरे तथा ॥

1 वर्जयेत् स्तुतिं गुरोः सुस्नातमिति, गृ. र., ५३८.

2 'विद्यया च विद्यानां' परीवादाक्रोशान् वर्जयेत् । ऋग्वेद एव श्रोत्रसुखः, अन्ये श्रवणकटुका इति परीवादाः ॥ (हरदत्तः).

श्मश्रुकर्मणि सम्प्राप्ते [1]क्षुते स्नाने च भोजने ।
व्याधितानाञ्च सर्वेषामायुष्यमभिनन्दनम् ॥
महात्मनाञ्च गुह्यानि न वक्तव्यानि कर्हिचित् ।
[2]त्वङ्कारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ॥

अधराणां समानानामुभयेषां न [3]दुष्यति ।

'पण्यानां शोभनं पण्यमि'ति, पण्यानां कृते शोभनमेतत्पण्यमिति ब्रूयात् । 'बहुप्रकारः' बहुशस्यमस्त्वित्यादि । 'वाह्यावाह्यन्तथा गवामि'ति, गवां मध्ये वाह्यं दान्तं वाहनयोग्यं वाह्यमिति ब्रूयात् । '[4]आयुष्यमि'ति नन्दनं ब्रूयादित्यर्थः । 'अवराणां' कनीयसाम् ॥

विष्णुः[5]

न विगृह्य कथां कुर्यात् ।

'विगृह्य' आक्षिप्य[6] ।

[7]यमपैठीनसी

अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः ।
[8]पृथिवी च षडेतानि यो निन्दति स निन्दितः ॥

1 व्रते, गृ. र.
2 त्वङ्कारं गृ. र.
3 दूष्यति इति गृ. रत्ना.
4 अभिनन्दनमिति, गृ. र., ५३९.
5 मनुः—न विगृह्य, ना. को.; "न विगहस्य कथां कुर्यात्" इति मनु. ४, ७२.
6 'विवादकारणं विना' इति पारिजातः इति गृ. र., ५३९.
7 यमः, गृ. र., ५३९.
8 पृथिवीं यतिनामानि, गृ. र., ५३९.

हारीतः

न देव[1]गुरुब्राह्मणपरिवाहं कुर्यान्नचैषां दीयमानं [2]प्रतिवारयेत् ।

चाण्डालशपथेषु वराहपुराणे[3]

पूर्वभुक्तां स्त्रियं यस्तु निन्देत् सर्वाङ्गसुन्दरीम् ।
[4]निन्दते यौवनभ्रष्टां तेन पापेन लिप्यताम् ॥
[5]भुक्त्वा परस्य चान्नानि यस्तु निन्दति निर्घृणः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
श्रुत्वा परस्य वाक्यानि [6]भवेद्यन्मन्त्रभेदनात् ।
तेन पापेन लिप्येहं यद्यहं नागमे पुनः[7] ॥

[8]ब्रह्मपुराणे

माऽस्मै देहीति चैवं यः प्रब्रवीति दुरात्मवान् ।
अपि जातिशतं गत्वा न स मुच्येत किल्बिषात् ॥

विष्णुः [७१, ८३]

देवब्राह्मणशास्त्रमहात्मनां परिवादं परिहरेत् ।

'शास्त्रं' विद्यास्थानम् ।

1 गोगुरुपरीवादं, गृ. र., ५३९.
2 अपि, गृ. र.
3 चाण्डालशपथे ब्रह्मपुराणे, गृ. र., ५३९.
4 तेन पापेन लिप्येहं यद्यहं नागमे पुन:—गृ. र., ५४०.
5 भुक्त्वा परस्येति चान्नानि यस्तु निन्दति निर्गुण:—गृ. र., ५४०.
6 भवेद्यत्तन्त्रभेदनं गृ. र., ५४०.
7 विद्यां गृह्य यथान्यायं निन्दते च पुनर्गुरुम् ।
तेन पापेन लिप्येहं यद्यहं . . . . . . . पुन: ॥
यस्तु निन्दति राजानं ब्राह्मणं यस्तु निन्दति ।
तेन पापेन लिप्येहं यद्यहं . . . . . . . पुन: ॥ इति श्लोकद्वयं अधिकतया दृश्यते—गृ. र., ५४०.
8 ब्रह्माण्डपुराणे इति—गृ. र., ५४०.

मार्कण्डेयपुराणे [३४, ८३–८५]

[1]देवदेव द्विजातीनां साधु सत्यमहात्मनाम् ।
गुरोः पतिव्रतानां च तथा [यज्वितपस्विनाम्]
परिवादं न कुर्वीत परिहासेऽपि पुत्रक ।
कुर्वतामविनीतानां न श्रोतव्यं कथञ्चन ॥

महाभारते

सदा नारायणं देवं सर्वपापहरं [2]शुभम् ।
[3]निन्द्यमानो नरः शीघ्रं नरकेषु [4]प्रपद्यते ॥

वराहपुराणे

[5]विष्णुं रुद्रान्तरं ब्रूयाद्या श्रीगौर्य्यन्तरन्तथा ।
तन्नास्तिकानां मर्त्यानां काव्यं शास्त्रविगर्हितम् ॥

'अन्तरं' भेदम् । 'काव्यं' [6]कुत्सितप्रमाणमित्यर्थः ।

यमः

यस्तु निन्द्यात्परं जीवन्प्रशंसत्यात्मनो गुणान् ॥
स वै वार्धुषिको नाम [7]वेदवादिषु गर्हितः ॥

[8]देवलः

गृहे पररहस्यानि नैवोपश्रृणुयाद्बुधः ।

1 वेद—गृ. र., ५४०. ; इति मुद्रित पुराणे च.
2 प्रभुं—गृ. र., ५४१.
3 निन्दमानः—गृ. र., ५४१.
4 उपपद्यते—गृ. र., ५४१.
5 विष्णुरुद्रान्तरं ब्रूयाल्लक्ष्मी—गृ. र., ५४१.
6 कल्पितं न प्रमाणमित्यर्थः—ना. को.
7 ब्रह्म इति—गृ. रत्ना., ५४१ ; ना. को.
8 गृ. र. देवल इति न दृश्यते ५४२.

न ब्रूयात्प[1]रतन्त्राणि प्रकाशं जनसंसदि ॥

यमः

[2]परोक्षाणि परेषाञ्च परिवादं च वर्जयेत् ।
नैव ब्रूयान्न शृणुयाद् दुष्टवाक्यं कथञ्चन ॥
ब्राह्मणानां विशेषेण कदाचिदपि केनचित् ।
दुष्टवाक्यं न वक्तव्यं ब्राह्मणानां [3]कथञ्चन ॥
तूष्णीमासीत निन्दायां न ब्रूयात्किञ्चिदुत्तरम् ।
ब्राह्मणानां परीवादं न कुर्य्यान्नैव कारयेत् ॥
यद्ब्राह्मणेषु कुशलं [4]तदेव शुभमाचरन् ।
ब्राह्मणानां परीवादो निन्दा यत्र प्रवर्तते ॥
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ।
स्याद्रासभः परीवादात् श्वा स्यात्सू[5]कर एव च ॥
परिभूय कृमिश्चैव कीटःस्यादपि मत्सरी ।
'परोक्षाणि' दुष्टवाक्यानीति शेषः ॥

हारीतः

[6]परीवादं त्यजेद्विप्रोऽसवर्णेषु च सूचनम् ।
परिभोगं यथोक्तेषु मत्सरं पुत्रशिष्ययोः ॥

'सूचनं' पैशुन्यं । 'परिभोगः' परिभूय धनाद्युपभोगः । 'यथोक्तेषु' ब्राह्मणेषु सवर्णेषु च ।

1 न शृणुयाद्दुष्टवाक्यं कथञ्चन—ना. को.
These two lines are omitted in ना. को.
2 यमवचानानि—गृ. र., ५४१.
3 कदाचन—गृ. र., ५४१.
4 तदेवाशु समाचरेत्—गृ. र., ५४१.
5 सूचक एव सः इति—गृ. रत्ना. ५४२.
6 विवादं वर्जयेद्विप्रे सवर्णेषु च सूचनम्—गृ. र., ५४२.

अप इत्यनुवृत्तौ वायुपुराणे

[1]नैताः परिचक्षीत वहन्त्योऽथ वाथवा स्थिताः ।

'परिचक्षीत' परिवहेत् ।

तस्मान्नैतं परिवदेत् वायुं तं वायुमीश्वरम् ।
आदत्ते सुकृतं तेषां ये वै परिवदन्ति तम् ॥

तथा

तावत्कालं स्मृतो [2]देव उग्रो देवस्तु दीक्षितः ।
तस्मान्नैवं[3] परिवदेदश्लीलं नास्य कीर्तयेत् ॥

'तावत्कालं' यावद्दीक्षाकालम् । 'उग्रो' रुद्रः ।

तथा

योगं परिवदेद्यस्तु ध्यानिनं मोक्ष[4]कांक्षिणम् ।
स गच्छेन्नरकं घोरं श्रोतारश्च न संशयः ॥

मनुः[5]

ऋत्विक्पुरोहिताचार्यमातुलातिथिसंश्रितैः ।
वृद्धबालातुरै[6]र्विप्रैर्ज्ञातिसंबन्धिबान्धवैः ॥
मातापितृभ्यां जामीभिः भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥

1 परिचक्षीत सर्वत्र वहन्त्यो वाऽथवा स्थिताः—गृ. र., ५४२.

2 विप्रः—गृ. र., ५४१.

3 नैनं—ना. को.

4 कारिणम्—गृ. रत्ना., ५४२.

5 मनु—४. १७९–१८६.

6 वैद्यैः—गृ. र. ५४३.

एतै[1]स्त्यजेद्विवादांस्तु सर्वपापैः प्रमुच्यते ।
[2]एतैर्जितस्तु जयति सर्वान् लोकानिमान् गृही ॥
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशो [3]देवलोकस्य चर्त्विजः ॥
जामयो[4]ऽप्सरसां लोके वैश्वदेवस्य बान्धवाः ।
संबन्धिनो[5]ऽपां लोकेषु पृथिव्यां मातृमातुलौ ॥
आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः ।
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ॥
[6]छाया स्वा दासवर्गस्तु दुहिता कृपणं परम् ।
तस्मादेतैरधि[7]क्षिप्तैः सहेतासंज्वरः सदा ॥

'कृपणं' कृपापात्रम् ।

देवीपुराणे

न कुर्याज्जनवादं तु न विप्रैर्न च वत्सलैः ।
न [8]प्रधानजने वादो नृपाक्षेपः कदाचन ॥
नृपबन्धुगुर्वमात्यभिषग्ज्योतिःपुरोहितैः ।
विरोधात्सुमहद्दुःखं प्रीत्या [9]च सुखमाप्नुयात् ॥

तथा च—

न च वाचं वदेद्दुष्टां नदीनां न च कर्कशाम् ।

1 त्यजन्, गृ. र. ५४३.
2 एभिर्जितश्च, गृ. र., ५४३.
3 ब्रह्मलोकस्य च द्विजः, गृ. र., ५४३.
4 'जामयो' भगिनीस्नुषाद्याः इति कुल्लूकभट्टः
5 ह्यपां लोके, गृ. र., ५४३.
6 छायायाम्, गृ. र., ५४३.
7 क्षिप्तः सहेतापह्यवम्, गृ. र. ५४३.
8 प्रधानजने, गृ. र., ५४३.
9 सुखमवाप्नुते, गृ. र., ५४४.

बन्ध्वादयो नृपसंबन्धिनः। 'ज्योतिः' अत्र ज्यौतिषिकः।

विष्णुपुराणे [३, १२, ३७]

शमं नयति यः क्रुद्धान् सर्वबन्धुरमत्सरी।
भीताश्वासनकृत्साधुः स्वर्गस्तस्याल्पजं[1] फलम्॥

शममुपयान्ति।

मत्स्यपुराणे [४१, ५०–५२]

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत्।
योऽस्य संकीर्तयेन्नाम कल्यं उत्थाय मानवः॥
न तस्य वित्तनाशः स्यान्नष्टं च लभते पुनः।

स्कन्दपुराणे नन्दिनं प्रति महेश्वरः—

अनामयश्चेतनवान्नामकीर्तयिताऽ[2]थवा।
सोऽश्वमेधफलं चैव लभते नाऽत्र संशयः॥

पापदोषा इत्यनुवृत्तौ देवलः

ततः परुषवचनमपवादः, पैशुन्यमनृतं, वृथालापो, निष्ठुरमिति वाङ्मयाः षट्। परेषां देशजातिकुलविद्याशिल्परूपवृत्ताचार[3]परिच्छदाशरीरकर्माजीवानां [4]तत्प्रत्यक्षं दोषवचनं [5]परुषम्।

यच्चान्यत् क्रोधसंतापत्रासससञ्जननं वचः।
परुषं तच्च विज्ञेयं [4]यथान्यच्च तथाविधम्॥

1 तव, गृ. र., ५४४.
2 परिच्छेद, गृ. र., ५४५.
3 गृ. र. ५४५.
4 गृ. र. ५४५.
5 तथा, गृ. र. ५४५.

चक्षुष्मानिति लुप्ताक्षं चाण्डालं ब्राह्मणेति च ।
प्रशंसा निन्दनं द्वेषात्परुषादविशिष्यते[1] ॥
वृषलं वृषलेत्युक्त्वा पतितं पतितेति च ।
सत्येनापि च दोषः स्यान्मिथ्या द्विगुणभाग्भवेत् ॥

तेषामेव परुषवचनानां परोक्षमुदाहरणमपवादः । गुरुनृपतिबन्धुभृत्यसकाशेऽर्थोपघातार्थं दोषोपाख्यानं पैशुन्यम् । अनृतं द्विविधम्—असत्यं विसंवादश्चेति ।

[2]तथा

देशे राजप्रवादाच्च [3]प्रवाक्षपरिकल्पनात् ।
नर्महासप्रसङ्गाच्च विज्ञेयं व्यर्थभाषणम् ॥
[4]गुह्याङ्गाऽमेध्यसंज्ञानां वचनं निष्ठुरं विदुः ।
यदन्यद्वा वचो नीचं स्त्रीपुंसो[5]र्मिथुनाश्रितम् ॥
इत्येवं [6]षड्विकल्पस्य दुष्टवाक्यस्य भाषणम् ।
इहाऽमुत्र च स क्रूरमनर्थमधिगच्छति ॥
हिताहितं मनुष्याणां केवलं वचसि स्थितम् ।
तस्मात्संयोजयेद्वाचमप्रमत्तः परीक्ष्य च ॥
दुश्चिकित्स्यतमं पश्चाद्दुरुक्तं हि वचो भवेत् ।
क्षिप्रं विनिपतेच्चापि वचनं दोष[7]संहितम् ॥

1 षान्न विशि, ना. को.
2 तथा, देशे, गृ. र., ५४५.
3 परार्थ, गृ. र. ५४५.
4 गुह्याङ्गा, ५४५.
5 मिथुनाश्रितं, ५४५.
6 यदि कल्पस्य, गृ. र., ५४५.
7 संस्थितं, गृ. र. ५४५.

'वृत्तं' शीलम्। 'आचारो' नित्यनैमित्तिकानुष्ठानम्। 'आजीवो' जीविका।

यमः

[1]अपापं पापमित्युक्त्वा चौरं चौरेति वा [2]द्विज।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत्॥
प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति।
प्रत्यादेशो न कर्तव्यो रक्षेदात्मानमात्मना॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात्।
तानि [3]पुत्रान् पशून् हन्ति [4]तेन मिथ्याभिशंसिनाम्॥

याज्ञवल्क्यः[5] [३, २६३]

मिथ्याऽभिशंसिनो दोषो द्विःसमो भूतवादिनः।
मिथ्याभिशस्तदोषं च समादत्ते [6]मृषां वदन्॥

आपस्तम्बः [१, २१, २०]

[7]दोषं बुध्वा नु पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेच्चैनं धर्मेषु[8]॥

1 पापं पापस्त्वमित्युक्त्वा, गृ र., ७४५.
2 द्विजः, गृ. र., ५४६.
3 पूतान्, गृ. र., ५४६.
4 तेषां, गृ. र., ५४६; ना. को.
5 ३. २६३.
6 मृषा वदन्, या. अप., या. वीर., ५४६.
7 दोषं बुध्वा न पूर्वं परस्य समाख्याता स्यात् परिहरेच्चैनं धर्मेषु, या. अपरार्कः.
8 "पतितस्य दोषं परैरविदितं बुद्ध्वा परस्य समाख्याने पूर्वो न स्यात्। परैरविदितं स्वयं विद्वानपि न परेभ्यः पूर्वमाचक्षती। किं तु स्वयं धर्मकृत्येष्वेनं वर्जयेत्, यथा परे न जानन्ति। अन्यथा दोषवान् स्यात्"। (हरदत्तः).

शातातपः

[1]स्नातस्य वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् ।
[2]भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु[3] ॥

विष्णुपुराणे [३, १८, १०४]

एते पाषण्डिनः पापा न ह्येनात्तालयेद्बुधः ।
पुण्यं नश्यति संभाषादेतेषां दन्तिनोद्भवम् ॥

इति वाच्यावाच्यानि ।

1 स्नातस्तु, गृ. र., ५४६.

2 गृ. र., ५४६.

3 'स्नातः' स्नानं कुर्वतः । 'न व्याहरेत्' न भाषेत, गृ. र., ५४६.

# अथ गमनप्रवेशनविधिः

तत्र मनुः[1] [४, ६७–६८, १४०]

नाविनीतैर्व्रजेद् धुर्यैर्न[2] वालधिविरूपितैः ।
न भिन्नशृङ्गाक्षिखुरैः न[3] चक्षुर्व्याधिपीडितैः ॥
विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः ।
वर्णरूपोपसंपन्नैः प्रतोदेनातुदन्भृशम्[4] ॥
[5]नातिकल्यं नातिसायं नातिमध्यंदिने स्थिते ।
नाज्ञानेन समं गच्छेन्नैको न वृषलैः सह ॥

'अविनीतैः' दुष्टैः । 'वालधिविरूपितैः' छिन्नपुच्छैः । 'धुर्यैः' अश्वादिभिः । 'नातिमध्यन्दिने स्थिते' सवितरीति शेषः ।

1 ४, ६७.

2 न चक्षुर्व्याधिपीडितैः, गृ. र., ५४७.

3 'वालधिः' पुच्छस्तेन 'विरूपिताः' च्छिन्नपुच्छादयः । तादृशेन न यावत् । आरोहणमेव स्मृत्यन्तरे प्रतिषिद्धम् । इति मेधातिथिः.

4 'प्रतोदेनाक्षिपन् भृशमिति' मेधातिथिपाठः.

5 उषःसमये प्रदोषे च दिवा संपूर्णप्रहरद्वये अज्ञातकुलशीलेन पुरुषेण न गच्छेदिति कुल्लूकः

तथा

गवां च यानं पृष्ठेन सर्वथैव विगर्हितम्[1] ॥

विष्णुः [६३, २-१७][2]

नैकोऽध्वानं प्रपद्येत नाधार्मिकैः सार्द्धम्। न वृषलैः। न द्विषद्भिः। नातिप्रत्यूषसि नातिसायम् न संध्ययोः। न मध्याह्ने। नासन्निहितपानीयम्। [3]नाति [तूर्णम्।] [न रात्रौ।] [न सन्ततं] व्याधितार्तैर्वाहनैः [न हीनाङ्गैः न दीनैः।] न गोभिः नादान्तैः।

असन्निहितपानीयमिति क्रियाविशेषणम्। 'अदान्तैः' अशिक्षितैः। 'सन्ततम्' अविश्रमेण। 'व्यालो' दुष्टः।

हारीतः

पूर्ववृत्तिषु [4]वृत्त्या तन्नासूर्यमध्वानं गच्छेत्। न नियमवेलायाम्। नानुदको [5]यज्ञोपवीती नैको न वृषलैः सह।

पूर्ववृत्तिषु विद्यमानास्विति शेषः। 'असूर्य्यं' रात्रावित्यर्थः। 'नियमवेला' नित्यकर्मकालः।

शङ्खलिखितौ

नैकोऽध्वानं प्रपद्येत नानुपातवग्रे नाऽयज्ञोपवीती न शूद्रादिसहायः।

1 मनु, ४, ७२ उत्तरार्द्धम्। पूर्वार्द्धन्तु—

न विगर्ह्य कथां कुर्याद्बहिर्माल्यं न धारयेत्।

2 The words in rectangular brackets are supplied from the printed text of *Viṣṇusmṛti*.

3 नातिपूर्णं न सततं। न वालव्याधिताशस्तैः गोभिर्वा नादान्तैः—गृ. र., ५४७.

4 वृत्यर्थं नासूर्यं, गृ. र., ५४७.

5 नायज्ञोपवीती न वृषलैः सह, गृ. र.

बौधायनः [१, ७, ७–८]

[तस्माद्] विना कमण्डलुना नाध्वानं व्रजेन्नासीमान्तं [न] गृहाद्गृहम्। पदमपि न गच्छेदिषुमात्रमित्येके।

'विना कमण्डलुने'ति सर्वत्र योजनीयम्। कमण्डलुग्रहणमुदपात्रोपलक्षणार्थम्। 'इषुमात्रम्' इषुविक्षेपपरिमितदेशादधिकं पदमित्यर्थः।

विष्णुपुराणे [३, १२, ३८, ३९, ९, १४]

वर्षातपादिषु छत्री दण्डी रात्र्यटवीषु च।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्॥
[1]नोर्ध्वं न तिर्यग्दूरं वा निरीक्षन् पर्यटेद्बुधः।
युगमात्रं महीपृष्ठं नरो [2]गच्छन्न दोषभाक्॥
न [3]दुष्टं यानमारोहे[4]त्कुलच्छायं न संश्रयेत्॥
नैकः शून्याटवीं गच्छेन्न तु शून्य[5]गृहेवसेत्॥

देवीपुराणे

नासहायो व्रजेद्रात्रौ नोत्पथे [6]च चतुष्पथे।

स्कन्दपुराणे

सौनन्दीति यः प्रोक्त्वा कान्तारं प्रतिपद्यते।
न तस्य [7]द्विजशार्दूल हिंस्राः कुर्युः भयं क्वचित्॥

1 न चोर्ध्वं, गृ. र., ५४८.
2 गच्छेद्विलोकयन्, गृ. र., ५४८.
3 दुष्टयानं, गृ. र.
4 न कूलच्छायाः, गृ. र.
5 गृहं, गृ. र., ५४८.
6 न, गृ. र., ५४८.
7 द्वीपि शार्दूलसिंहाः, गृ. र., ५४८.

जाबालः

नैकोऽध्वानं प्रपद्येत न रात्रौ नाऽरिणा सह ।
न महावृक्षमारोहेन्न बाहुभ्यां नदीं तरेत् ॥

बौधायनः [२, ६, २१–२३]

नैकोध्वानं [1]प्रपद्येत । न पतितैर्नाभिशस्तैर्न स्त्रिया न शूद्रेण । न प्रतिसायं गच्छेत् ॥

वसिष्ठः [१२, १८-३०]

नाग्निं ब्राह्मणं चान्तरेण व्यपेयात् । नाग्न्योर्न ब्राह्मणयोरननुज्ञाप्य वा ॥

व्यपेयादित्यनुषङ्गः ।

पैठीनसिः

न गो [2]ब्राह्मणान्तरेणोपेयात् ॥

यमः

सन्निकृष्टमधीयानं योऽन्तरा व्याहरेद् द्विजः ।
श्वभासरासभानां च योनिं व्रजति पापकृत् ॥

'सन्निकृष्टः' एकस्यां सभायामिति तात्पर्यार्थः ।

बौधायनः [२, ६, १३–१५]

पुरद्वारेन्द्रकीलपरिघान्तरेण नातीयात् ।
प्रेषयोरन्तरेण न गच्छेत् [3]वत्सतन्त्रीं नोपरि गच्छेत् ॥

1 व्रजेत् न पतितैर्न स्त्रिया न शूद्रेण । न प्रतिसायं व्रजेत्, गृ. र., ५४९ मुद्रित बोधा. च.
2 ब्राह्मणाग्नीनामन्तरेणोपेयात्, गृ. र., ५४९.
3 वत्सतन्त्रीं, गृ. र., ५४९.

'इन्द्रकीलं' इन्द्रयष्टिः। 'परिघः' अर्गला। 'प्रेषा' हिन्दोलाः[1]।

आपस्तम्बः [१, ३२, २५–२७]

गार्दभं यानमारोहणे विषमारोहणाऽवरोहणानि वर्जयेत्। बाहुभ्यां च नदीतरं नावं च सांशयिकीम्[2] ॥

आरोहणे न कर्तव्य इति शेषः। 'तर' तरणम्।

विष्णुः [६३, ४३–४७]

[3]प्रवर्षति न धावेत्। न वृथा नदीं तरेत्। [4]देवताभ्यः पितृभ्यश्चोदकमप्रदाय च। बाहुभ्यां भिन्नया नावा ॥

'न तरेत्' इति प्रत्येकमनुषज्यते ॥

[5]मनुः

अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित्।

'अचक्षुर्विषयं दुर्गं' प्रमाणेन विरोधिरहितत्वेनाज्ञातमरण्यादि।

याज्ञवल्क्यः[6]

अयं मे वज्र इत्येवं मन्त्रं कृत्स्नमुदीरयेत्[7]।

1 'इन्द्रकील' पुरद्वारे स्थापितः काष्ठविशेषः। 'प्रेङ्खो' निखातदारुलम्बमानाक्रोडापलका। 'तन्ती' धाम। (गोविन्दस्वामी).

2 जीर्णां नावं वर्जयेत्। (हरदत्तः).

3 न प्रवर्षति धावेत, गृ. र.

4 न देवताभ्यः पितृभ्यश्च उदकमप्रदाय च, बाहुभ्यां भिन्नया नावा वा, गृ. र., ५४९.

5 ४. ७७.

6 १. १३६.

7 कृत्स्नमुदाहरेत, गृ. र., ५४९; सर्वं मन्त्रमुदीरयन् इति या. अप; या. वीरमित्रोदये च.

**वर्षत्य[1]प्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥**

**'अयं मे वज्रः सर्वं पाप्मानमपहन्तीति' सर्वमन्त्रं पठन्, वर्षत्यप्रावृतो गच्छेत् यावन्मन्त्रसमाप्तिः । ऊर्द्ध्वमनियमस्तावतैव [2]पाप्मनो हतत्वादिति विश्वरूपः[3] ।**

**आपस्तम्बः [२, १२, ११]**

**[4]अभिमुखमग्नये क्रियमाण नाऽऽमप्रतिष्ठितं भूमौ प्रदक्षिणीकृत्योपेयात् ॥**

**भूमौ प्रदक्षिणीकृत्यैव गच्छेदित्यर्थः ।**

**मनुः[5]**

**मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।**
**प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्[6] ॥**

**मार्कण्डेयपुराणे [३४, ४२]**

**विद्याधिकं गुरुं चैव द्विजं कुर्यात्प्रदक्षिणम् ।**

1 अप्रावृतो गच्छेत् पुण्यात् प्रत्यक्छिवा नरा, गृ. र., ५५०.

2 अतिपाप्मनो, या. वीरमित्रोदयः.

3 तथाम्नायः—'तस्माद् वर्षत्यप्रावृतो न व्रजेत्'। 'अयं मे वज्रः पाप्मानमहतादि' त्येव तदेव मन्त्रस्य कार्त्स्न्यम् । यदा वर्षति गच्छेत्, तदैवमिति व्याख्येयम् ॥ (**विश्वरूपभाष्ये**).

4 अभिमुखमग्निमाह्रियमाणं प्रतिष्ठितं भूमौ नाप्रदक्षिणीकृत्योपेयात्, गृ. र., ५५०; प्रतिमुखमिति **हरदत्त**पाठः; ना. को., च.

5 ४, ३९.

6 "प्रज्ञाता वनस्पतयो महाप्रमाणाः प्रसिद्धा वनस्पतयो महावृक्षाः प्रमाणतः पुष्पफलातिशयतो वा प्रसिद्धा उदुम्बरादयः। ये तु गुणाधिकान् 'प्रज्ञातान्' आचक्षते ते निर्मलप्रसिद्धमात्रप्रमाणका उपेक्षणीयाः।" (**मेधातिथिः**) "प्रज्ञातान् प्रसिद्धान् वनस्पतीन् विना पुष्पं फलिनोऽश्वत्थादीनिति" **चण्डेश्वरः** (गृ. र., ५५०).

शङ्खलिखितौ

गोब्राह्मणसमवायेन्द्रकीलचतुष्पथान्यभिज्ञातांश्च वनस्पतीन् प्रदक्षिणानि कुर्यात् ॥

प्रदक्षिणं कुर्यात् इत्यनुवृत्तौ विष्णुः [६३, २९–३२]

अग्नि-ब्राह्मण-गणिका-पूर्णकुम्भादर्श-छत्र-ध्वजपताका-श्रीवृक्ष-वर्धमाननन्द्यावर्तांश्च तालवृन्तचामरांश्च, गजाजगो-क्षीर-दधि-घृत-मधु-सिद्धार्थकांश्च । वीणा[1]बकुलार्द्रगोमयफल-पुष्पार्द्रशाक-गोरोचना-दूर्वाप्ररोहांश्च [2]उष्णीषालङ्करणमणिकनकरजतवस्त्रासन-यानामिषाणि, च [3]भृङ्गारोद्धृतो बीजबन्धैककुमारी[4] मीनांश्च [दृष्ट्वा प्रयादिति ॥]

श्रीवृक्षवृद्धमानं नन्द्यावर्ताः 'सन्निवेशाः[5]' सुवर्णदार्वादिविनिर्मिताः ज्योतिःशास्त्रादिप्रसिद्धाः । 'उष्णीषालङ्कारो' मुकुटम् ।

मत्स्यपुराणे [२४३, १४–२८]

[6]अथेष्ट्यादि प्रवक्ष्यामि [7]मङ्गल्यानि यथाऽनघ ।
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च ॥
जलजानि च पुष्पाणि [8]मांसं मद्यं च पार्थिव ।
गावस्तुरङ्गमा नागा वद्ध एक पशुस्त्वजः ॥

1 चन्दनायुधार्द्र, गृ. र., ५५०.
2 उष्णीषालङ्कार, गृ. र., ५५०.
3 शृङ्गारोद्धृतोर्वीवद्धैकपशुकुमारीमीनांश्च, गृ. र., ५५०.
4 कपशुकुमारी, ना. को.
5 निवेशविशेषाः, ना. को.
6 अथेष्टानि, गृ. र., ५५०.
7 माङ्गल्यानि, गृ. र., ५५०.
8 मांसमत्स्याश्च, गृ. र., ५५०.

त्रिदशाः सुहृदो [1]विज्ञाः ज्वलितश्च हुताशनः।
गणिका च महाभाग दूर्वा चार्द्रं च गोमयम् ॥
रुक्मं [2]रौप्यं तथा वस्त्रं सर्वरत्नानि चाप्यथ।
औषधानि च [3]धर्मज्ञा यवाः सिद्धार्थकास्तथा ॥
नृवाह्यमानं यानं च भद्रपीठं तथैव च।
खड्गं [4]चक्रं तथा काश्चमृदमायुधमेव च ॥
[5]घृतं दधि पयश्चैव फलानि विविधानि च।
स्वस्तिकं वर्द्धमानं च नन्द्यावर्तं च कौस्तुभम् ॥
[6]सन्यस्तचित्रविन्यस्तमङ्गलान्यपराणि च।
अक्षताः श्वेत[7]पुष्पाश्च तथा [8]दर्पण एव च ॥
अञ्जनं रोचना चैव भृङ्गारो [9]माक्षिकं तथा।
वादित्राणां मुखः शब्दो गम्भीरश्च [10]मनोहरः ॥
गान्धारषड्जऋषभा ये च शस्तास्तथासुराः।
मेघाः शस्ताः घनाः स्निग्धाः गजबृंहितनिस्स्वनाः ॥
अनुलोमा तडिच्छस्ताः शक्रचापस्तथैव च।
अनुलोमा गृहाः शस्ताः दिक्पतिस्तु विशेषतः ॥
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम्।

1 विप्राः इति गृ. र., ५५१, मुद्रित म. पु. च.
2 रौप्यं तथा चास्त्रं सर्वरत्नानि वाप्यथ, गृ. र.; ५५१.
3 सर्वज्ञ, गृ र., ५५१ ; धर्मज्ञ इति मुद्रित पुराणे.
4 छत्रं पताकाश्च मृदश्च, इति गृ. र., ५५१, मुद्रित मात्स्ये च.
5 राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम्। घृतं इति, मुद्रित मात्स्ये, ना. को., च.
6 नयश्चरित्रविन्यस्ता माङ्गल्यान्यपराणि च, गृ. र., ५५१.
7 मुख्याश्च, गृ. र., ५५१.
8 दर्पणमेव, गृ. र., ५५१.
9 मक्षिकास्तथा, गृ. र., ५५१.
10 मनोरमः, गृ. र., ५५१.

शस्त्राण्येतानि [1]धर्मज्ञ यच्च स्यान्मनसि प्रियम् ॥
मनसस्तुष्टिरेवात्र परमं जयकारणम् ।
एकतः सर्वलिङ्गानि [2]मनस्तुष्टिकरं तथा ॥
[3]यत्रोत्सुकत्वं मनसः प्रहर्षः
शुभस्य लाभो विजयस्य[4] वादः ।
मांगल्यलब्धिः श्रवणं च राजन्
ज्ञेयानि नित्यं विजयावहानि ॥

'[5]नृपवर्द्धमानं' पुरुषयुक्तं । यानं 'भद्रपीठः । स्वस्तिककौस्तुभाः', सुवर्णादिघटिताः सन्निवेशविशेषाः । 'अनुलोमाः' पृष्ठस्थाः । 'दिक्पतयो[6]' रविसितकुजाद्याः[7] ॥

विष्णुः [६३, ३४–३८]

अथ मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्तेत । वान्त[8]विरिक्तमुण्डजटिलवामनांश्च । काषायि[9]प्रव्रजितमलिनांश्च । तैलगुडशुष्कगोमयेन्धन[10]तृणपर्णभस्मांगारकचांश्च लवणक्लीबासवनपुंसककार्पासरज्जुनिगडितमुक्तकेशांश्च ॥

1 सर्वज्ञ यच्च स्यान्मनसः, गृ. र., ५५२.
2 मनसस्तुष्टिरेकतः, गृ. र., ५५२ नस्तत्तुष्टि, ना. को.
3 यानोत्सुकत्वं, गृ, र., ५५२, मुद्रित मत्स्य पुराणे च.
4 प्रवादः, गृ. र., ५५२.
5 नृवाह्यमानं, गृ. र., ५५२.
6 रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।
बुधो बृहस्पतिश्चेति दिशामीशास्तथा ग्रहाः ॥, गृ. र., ५५२.
7 "तथापि खड्गस्य पुनरुपादानं मङ्गलातिशयत्वबोधाय" इति, गृ. र., ५५२.
8 विविक्त, गृ. र., ५५२.
9 'काषायी' वृथा लिङ्गधारी । 'प्रव्रजितः' सन्यासी । 'मलिनो' मलाक्रान्तदेहः कापालिकादिः ॥ (केशववैजयन्ती).
10 तृणपर्णभस्माङ्गारकांश्च । लवणक्लीबासवनपुंसककार्पासनिगडमुक्तकेशांश्च, गृ. र., ५५३.

'कचाः' केशाः। 'क्लीबो' निरेतस्कः। ['आसवः' सन्धानकः। नपुंसकः स्त्रीपुंव्यञ्जनरहितः[1]]।

मत्स्यपुराणे [ २४३, २-१२, २२-२५]

औषधानि च युक्तानि धान्यं कृष्णं च यद्भवेत्।
कार्पासं च तृणं शुष्कं गोमयेन्धनमेव च॥
इन्धनं[2]श्च तथाङ्गारं लगुडाश्च तथाऽशुभाः।
[3]अभ्यक्तं मलिनं मुण्डे तथा नग्नं च मानवम्॥
मुक्तकेशं [4]जरार्तश्च काषायांबरधारिणम्।
उन्मत्तकं तथा षण्डं दीनं चाथ नपुंसकम्॥
[5]अयः पंगुस्तथा चर्मकेशबन्धनमेव च।
तथैवोद्धृत्तसाराणि पिण्याकादीनि यानि च॥
[6]रिक्तानि चैव भाण्डानि मृतं साङ्कृतमेव च।
एवमादीनि चान्यानि [7]प्रशस्तान्यभिदर्शने॥
अशस्तो वा[8]युशस्तश्च भिन्नभैरवजर्जरः।
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः॥

1 [ ] बिकानीरकोशे.
2 च तथाङ्गारलगुडाश्च, गृ. र., ५५३.
3 अभ्यङ्गं, गृ. र., ५५३.
4 त्वरार्तं च, गृ. र., ५५३.
5 अन्धः पङ्गुस्तथा, गृ. र., ५५३.
6 चाण्डालाः श्वपचाश्चैव राजबन्धनपालकाः।
वधकाः पापकर्माणो गर्भिणी स्त्री तथैव च॥
तुषभस्मकपालास्थि भिन्नभाण्डानि यानि च।
रिक्तानि, गृ. र., ५५३, बीकानीर कोशे च॥
7 न शस्तान्यपि, गृ. र., ५५३, ना., को.
8 वाद्यशब्दश्च, गृ. र., ५५३.

गच्छेति पश्चाद्धर्मज्ञ पुरस्तात्तु विगर्हितः ।

[1]क्व यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य तु ।
अन्ये शब्दाश्च येऽनिष्टास्ते विपत्तिकराः पथि ॥
ध्वजादिषु तथा स्थानं क्रव्यादानां विगर्हितम् ।
[2]चलनं वाहनानां च वस्त्रसङ्गस्तथैव च ॥
निर्गतस्य च द्वारादौ शिरसश्चाभिघातिता ।
छत्रध्वजानां शस्त्राणां [3]पताकाश्च तथाऽशुभम् ॥
वायुः सशर्करः रूक्षः सर्वदिग्भ्यः समुत्थितः ।
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः ॥
अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः ।
रूक्षा रूक्षस्वराश्चण्डाः क्रव्यादाश्च विगर्हिताः ॥
अप्रशस्ते तथा ज्ञेये परिवेषप्रवर्षणे ।

'औषधानि युक्तानि' मिलितानि दशमूलीभृतीनि। 'कृष्णधान्यं' तिलमाषादि । 'बन्धनं' निगडादि । 'क्रव्यादानां' गृध्रादीनाम् ।

तथा [२४३, १३-१४]

दृष्टे निमित्ते प्रथम [4]मनिमित्तं विनाशनम् ।
शङ्करं [5]पूजयेद्विद्वांस्तथैव मधुसूदनम् ।
द्वितीये तु तथा दृष्टे [6]प्रदीपं प्रविशेद्गृहम् ॥

1 गृ. र., ५५४.
2 स्खलनं, गृ. र., ५५४, बीका, कोशे च.
3 पतनं च, गृ. र., ५५४, ना. को.
4 अमङ्गल्य, गृ. र., ५५४.
5 'केशवं' इति मुद्रित मात्स्ये.
6 प्रतीपे, गृ. र., ५५४, मुद्रित मात्स्ये च.

वसिष्ठः[1] [१२, ४२]

नावृतो यज्ञं गच्छेत् यदि व्रजेत् प्रदक्षिणं पुनराव्रजेत् ॥ 'अवृतः' अनाहूतः ।

[2]वृद्धमनुः

नमस्कर्तुं व्रजेत्कामं दिदृक्षुर्यज्ञ[3]कर्मणः ।
कुलात्कुलं [4]रहस्यपि सञ्चरेन्नानिमित्ततः ॥

'[5]कुलात्कुलं' गृहाद्गृहम् । 'रहस्यं' गोप्यम् । 'अनिमित्ततः' [6]संप्रयोजनं विना ।

शङ्खलिखितौ

[7]न वधबन्धसमवायं गच्छेत न दावं न दंपत्योरन्तरम् न ऋषीणां प्रभवम् । न ऋषीणां न वधबन्धनसमवाये ॥

'न वधबन्धननिमित्तो' जनसमूहः । 'दावो' वनवह्निः । तत्समीपं न गच्छेत् । 'ऋषीणां प्रभवं' उत्पत्तिस्थानम् । [8]कपालग्रामादिकमिति माधवस्वामी[9] ।

1 १२, ४२.

2 मनुः—यज्ञं गच्छेन्नचावृतः, नमस्कर्तुं, गृ. र., ५५४.

3 कर्म च, गृ. र., ५५४.

4 रहस्यार्थी, गृ. र., ५५४.

5 अनाहूतः कुलात्, ना को.

6 स्वप्र, ना. को.

7 न वधबन्धनसमवायं गच्छेत् । न दावं । न वनस्पत्योरन्तरं । न ऋषीणां प्रभवम् । न ऋषीणां वधबन्धनसमवाये, गृ. र., ५५५.

8 कलाप, गृ. र., ५५५.

9 Reproduced verbatim by गृ. र., ५५५. Mādhavasvāmin seems to have commented on this Smṛti. See Kane, *Hist. of D. S.*, I, p. 77.

मनुः [४, ७३]

अद्वारेण च [1]जानीयान् ग्रामं वा वेश्म [2]चावृतम् ।
[3]रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ॥

शङ्खलिखितौ

न रात्रौ विचरेत् ॥

आपस्तम्बः [१, ३१, २३]

[4]सृत्या ग्रामं प्रविशेत् । यदि प्रविशेत् "नमो रुद्राय वास्तोष्पतय" [5]इत्येतामृचं जपेदन्यां [6]वा रौद्रीम् ॥

'सृत्या' मार्गेण ।

शङ्खलिखितौ

न बाह्यैरयुक्तैरपीतपानीयैः पिबेत् । न ग्रासं अदत्वा श्नीयात् ॥

मार्कण्डेयपुराणे[7] [१४, ५६]

एकसार्थं [8]प्रयाता ये निःस्वमन्नार्थिनं [9]नरम् ।

1 नाभीयात्, गृ. र., ५५५; नातीयात्, मुद्रित निर्णयसागर मनौ.
2 वावृतं, गृ. र., ५५५.
3 वायौ, गृ. र., ५५५.
4 सृत्या ग्रामं गच्छेत्, गृ. र., ५५५; मुद्रित आ. ध. सू. च; ना. को., च.
5 तै. ब्रा., ३, ७, ९:—नमो रुद्राय वास्तोष्पतये । आयने विद्रवणे । उद्यायने यत्परायणे । आवर्तने निवर्तने । यो गोपायति तꣳ हुवे.
6 अन्यां रौद्रीम्—इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय इति रुद्राध्यायगता (तै. सं., ४, ५, १०).
7 Name omitted by गृ. र., ५५५.
8 प्रयातं इति, गृ. र., ५५५.
9 अर्धार्थिनमिति मु. पुराणे.

अपास्य स्वान्नमश्नन्ति त इमे श्लेष्मभोजिनः ॥

दक्षपुत्राणां भ्रात्रन्वेषणाय गतानामनिवृत्तिमभिधाय विष्णुपुराणे [१, १५, १००]

ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विजः ।
प्रयातो नश्यति तथा तन्न कार्यं विजानता ॥

इति गमनप्रवेशनविधिः ।

२७

# अथाऽनाक्रमणीयान्यनधिष्ठेयानि

तत्र मनुः[1]

देवतानां गुरोर्प्राज्ञः स्नातकाचार्य[2]मन्त्रिणाम्[3] ।
नाऽऽक्रामेत् कामत[4]श्छायां कपिलस्य च गोरपि ॥
स्वान्तु नाऽऽक्रमयेच्छायां क्लीबेन पतितेन च ।
[5]चाण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन च ॥

'प्राज्ञः' प्रशस्तबुद्धिः ।

याज्ञवल्क्यः[6]

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाऽऽक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि च ॥

1 ४. १३०–१३१.

2 The Nagpur MS. reads thus:

तत्र मनुः—देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा । नाक्रामेत्कामतश्छायां बभ्रुणोः कपिलस्य दीक्षितस्य च ॥ बभ्रु. कपिलः । यमः देवद्विज.

3 प्राज्ञः स्नातकाचार्ययोस्तथा, गृ. र., ५५६, या. अप. १९३.

4 छायां बभ्रुणो दीक्षितस्य च, गृ. र., या. अप. १९३.

5 चण्डालेन भिषग्भिश्च नित्यरोगान्वितेन च, गृ. र., ५५६.

6 १. १५२.

मनुः[1]

मध्यन्दिनेऽर्द्ध[2]रात्रे च श्राद्धं भुक्त्वा तु सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥
उद्वर्तनमपस्नानं विण्मूत्रं रक्तमेव च ।
श्लेष्मनिष्ठ्यूतवान्तानि नाधि[3]तिष्ठेत्तु कामतः ॥
[4]वैरिणं नोपसेवेत सहायं चैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितम् ॥

'उद्वर्त्तनं' कृतमलापकर्षणं कुङ्कुमादि । 'अपस्नानं' स्नानोपयुक्तं जलम् । 'निष्ठ्यूतं' उद्गीर्णं तांबूलादि ।

शङ्खलिखितौ

नोद्धतकुहकैः सहै[5]कतस्तिष्ठेत् ॥

'उद्धतः' अविनीतः । 'कुहकः' वशीकरणादिनिष्ठः ।

विष्णुः [६३, १९-२३]

न चतुष्पथमधितिष्ठेत् । न रात्रौ वृक्षमूलं न शून्यालयम् । [न तृणम्] न [6]पशूनां बन्धनागारम् ॥

हारीतः

[7]आवपनाप्रमार्जनापस्नानतुषभस्मास्थिकपालकेश सञ्चयानाधितिष्ठेत् ॥

1 ४. १३१-१३३.

2 रात्रं तु, गृ. र., ५५७; मध्यन्दिने च रात्रौ च श्राद्धं भुक्त्वा च सामिषम्, या. अपरार्के., १९३.

3 तिष्ठेत, गृ. र., ५५७.

4 वैरिणं नैव सेवेत सहायं नैव, गृ. र., ५५७.

5 एकत्र तिष्ठेत, गृ. र., ५५७.

6 न सूना ब. ना. को; न पशूनां, गृ. र., ५५७.

7 आचमनापमार्जनापस्नान-तुष-भस्मास्थिकपालिकैः सञ्चयन्नाधितिष्ठेत, गृ. र., ५५७.

'[1]आवपनं' गोण्मादिभाण्डम्। 'अप्रमार्जनं' मार्जनोपयुक्तकुशादि। 'कपालः' कूर्परः।

शङ्खलिखितौ

नाहेः [2]पद माधिनिष्ठेत्। [3]न तुषकपालकेशभस्मास्थितृणसङ्करकूटे तिष्ठेत्॥

'सङ्करः' अवकरः।

[4]मनुः [४, ७८-७९]

अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः।

मार्कण्डेयपुराणे [३४, २५]

तुषाङ्गारास्थिशीर्णानि रज्जुवस्त्रादिकानि च।
नाधितिष्ठेत्तथा प्राज्ञः पथि पत्राणि वा भुवि॥

आपस्तम्बः [२, १२, ५]

पाणिसमूहनं ब्राह्मणस्य नाप्रोक्षितमधितिष्ठेत्। [5]न भूमावनन्तर्हितायामासीत॥

विष्णुपुराणे [३, १२, १३-१५, २८]

चतुष्पथश्चैत्यतरुः श्मशानोपवनानि च।
दुष्टस्त्रीसन्निकर्षश्च वर्ज्यानि निशि सर्वदा॥
पूज्य देव[6]ध्वजाज्योतिश्छायां नातिक्रमेद्बुधः।

1 आचमनं शौचादि भाण्डं अपमार्जनं मार्जनोपयुक्तकुशादि, कपालं खर्परम्, गृ.र., ५५६
2 कुलं गृ. र., ५५८.
3 न तुषकपालभस्मकेशास्थितृणसंकारकूटेषु तिष्ठेत्, गृ. र., ५५८.
4 मार्कण्डेयपुराणे इति दृश्यते, गृ. र., ५५८; मनौ तु अधितिष्ठेदित्यर्धं परं दृश्यते.
5 आप. ध. सूत्रे न लब्धम् उत्तरसूत्रम्.
6 पूजकयोः, गृ. र., ५५८.

केशास्थि [1]कण्टकामेध्यबलिभस्मतुषां तथा ।
स्नानार्द्रां [2]धारिणीं चैव दूरतः परिवर्जयेत् ॥
श्लेष्मविण्मूत्ररक्तानि सर्वदैव न लङ्घयेत् ॥

देवीपुराणे

[3]शून्यागारे न तिष्ठेच्च न च पर्वतमस्तके ।
न श्मशाने न देवानां प्रासादेषु [4]कदाचन ॥
न चैव गोः प्रसूतायाः विश्वसेत् स्त्रीजनेषु च[5] ।

मार्कण्डेयपुराणे [३४, ८५]

नोत्कृष्ट[6]शय्याशयनो न निकृष्टस्य [7]चारुहेत् ॥

तथा [३५, ३०]

नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठे[8]त्कथञ्चन ।
न चालपेत् जनं दुष्टं वीरहीनां न च स्त्रियम् ॥

इत्यनाक्रमणीयान्यनधिष्ठेयानि ।

1 करका, गृ. र., ५५८.
2 वरणीं चैव यत्नेन, गृ. र., ५५८.
3 न च सभ्यालये तिष्ठेन्न च, गृ. र., ५५८.
4 कथञ्चन, गृ. र., ५५९.
5 एतदनन्तरम्—

न मुखेन धमेदग्निं न तु खड्गं तु लङ्घयेत् ।
तथा चैवायुधान् सर्वान् यन्त्रोपस्करमार्जनीः ॥
न प्रमत्तजनाकीर्णे न स्त्रीबालकसेविते ।
गृहे वा गमनं कुर्यात् विश्वासे क्रीडनानि च ॥

—पद्यद्वयमधिकतया दृश्यते गृ. र., ५५९.

6 शय्यासनयोः, गृ. र., ५५९.
7 चावहेत्, गृ. र., ५५९.
8 कदाचन । न चालपेज्जनद्विष्टां, न चादर्शदर्शनाद्युपगतं न मध्याह्ने, गृ. र., ५६०.

# अथाऽवलोकनीयानि

तत्र विष्णुः [७१, १७–२१]

आदित्यमुद्यन्तं नेक्षेत । नास्तं यान्तम् नोपरक्तम्[1] । न वाससा तिरोहितम् । न चादर्शदर्शनाभ्युपगतम् । न मध्याह्ने ॥

'उपरक्तः' राहुग्रस्तः ।

शङ्खलिखितौ

नोद्यन्तमादित्य[2]मीक्षेत । नास्तंयान्तं आप्यायनं च । तस्मै विधिवत् विदधति ॥

'आप्यायनं' अर्घ्यादिना पूजनम् । 'तस्मै' आदित्याय ।

हारीतः

न नग्नां स्त्रियं पुरुषं वा ईक्षेत । नोदयास्तमयौ चन्द्रार्कौ ॥

याज्ञवल्क्यः[3]

नेक्षेतार्कं न नग्नां स्त्रीं न च [4]संसृष्टमैथुनाम् ।

1 नास्ति मुद्रित विष्णौ.

2 वीक्षेत, गृ. र., ५६०.

3 १. १३५.

4 संसृष्ट, गृ. र., ५६० ; या. अप., १८० ; या. वी., संसृष्टमैथुनं, २२१.

न च मूत्रं पुरीषं वा नाऽशुची राहुतारकाः ॥

देवलः

सूर्याचन्द्रमसौ [1]चोभौ नक्षत्राणि च सर्वशः ।
नोदीक्षेताशुचिर्नित्यं ग्रहानन्यांश्च मानवाः ॥
पतितव्यङ्गचाण्डालो[2]च्छिष्टाद्या न विलोकयेत् ।
[3]अर्थदृष्टिमतैरेतैः संभाषेत नृणां वरः ॥

विष्णुपुराणे [३, १२, ११]

[4]ज्योतींष्यमेध्यासक्तानि नाभिवीक्षेत च प्रभो ।

तथा

संवत्सरं क्रियाहानिर्यस्य पुंसोऽभिजायते ।
तस्या[5]वलोकनात्सूर्यो निरीक्ष्यः साधुभिः सदा ॥

मार्कण्डेयपुराणे [३५, ३३, ३६]

देवतापितृसच्छास्त्रयज्ञसन्ध्यादि निन्दकैः ।
कृत्वा तु स्पर्शनालापं शुध्येतार्कावलोकनात् ॥
अवलोक्य तथोदक्यामन्त्यजं पतितं शवम् ।
विधर्मिसूतिकाषण्डं [6]विवस्त्रान्त्यवसायिनः ॥
मृतनिर्यातकाश्चैव परदाररताश्च ये ।
एतदेव हि कर्तव्यं प्राज्ञैः शोधनमात्मनः ॥

1 चेतौ, गृ. र., ५६०.
2 उच्छिष्टाद्यान्नावलोकयेत्, गृ. र., ५६०.
3 अन्यदृष्टिगतैरेतैः संभाषेन नृणां बुधः, गृ. र., ५६०.
4 ज्योतिरमेध्यासक्तानि, गृ. र., ५६०.
5 अभिलोकनात्, गृ. र., ५६१.
6 विवस्त्रान्त्यावसायिनं, गृ. र., ५६१.

[1]स्कन्दपुराणे

कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि कुत्सितम् ।
शुद्ध्यर्थं देवि द्रष्टव्याः सोमानलदिवाकराः ॥

सोमादीनां यथा संभवं विकल्पः ।

हारीतः

[2]अवगुण्ठित उच्छिष्टोऽमेध्यान्तरो नावभाषेत ।
नोर्द्ध्वं ज्योतींषि वीक्षेत न च देववनस्पतीन् ॥

'अवगुण्ठित' अत्र अवगुण्ठितशिराः ।

गौतमः[3]

न नग्नां परयोषितमीक्षेत ।

[4]साङ्ख्यायनगृह्यम् [४, ११, १]

न नग्नां स्त्रियमीक्षेताऽन्यत्र मैथुनात् । तथानाप्तकार्यकारिणम् ॥

'अनाप्तं' शत्रुं । 'अकार्यकारिणं' पातकिनम् । नेक्षेतेत्यनुषङ्गः ।

[5]ईक्षतेत्यनुवृत्तौ—

1 स्कन्दपुराण इति न दृश्यते, गृ. र., ५६१.

2 अवगुण्ठित उच्छिष्टो मेध्यान्तरो नाभिभाषेत ।
नोर्ध्वं ज्योतींषि वीक्षेत न देवान् न वनस्पतीन् ॥ गृ. र., ५६१.

3 १. ९. ४५.

4 सांख्यायनगृह्यमिति न दृश्यते; गौतमवाक्यत्वेनैव दृश्यते परन्तु गौतमे न लब्धम्, गृ. र., ५६२.

5 नेक्षेतेत्यनुवृत्तौ विष्णुः, गृ. र., ५६२.

विष्णुः [७१, २२-३१]

न क्रुद्धस्य गुरोर्मुखम्। न तैलोदकयोः स्वच्छायाम्। न मलवत्यादर्शे। न पत्नीं भोजनसमये। न स्त्रियं नग्नाम्। न कश्चन मेहमानम्। न चालानम्। भ्रष्टकुञ्जरम् न विषमस्थो वृषादियुद्धम्। नोन्मत्तम्। न मत्तम्।

मनुः[1]

नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम्।
क्षुवतीं जृम्भमाणां वै न चासीनां यथासुखम्॥
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम्।
न पश्येत्प्रसवन्ती च तेजस्कामो द्विजोत्तमः॥

[2]शङ्खलिखितौ

न कूपश्वभ्राण्यतिष्ठेत्। न कूपमवलोकयेत्। न लङ्घयेत्।

मनुः[3]

न विण्मूत्रमुदीक्षेत।

इत्यवलोकनीयानि॥

1 ४. ४३-४४.

2 वचनमिदं विष्णुवचनत्वेन गृ. र., ५६२, दृश्यते। विष्णुस्मृतिपुस्तके च वाक्यमिदं न दृश्यते.

3 ४. ७७.

# अथ शूद्राऽप्रदेयानि

तत्र [1]मनुर्यमवसिष्ठौ प्रथमे [म. ४, ८०-८१]

न शूद्राय मतिं दद्यात् नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं [2]न चान्यव्रतमादिशेत् ॥
यो ह्यस्य धर्ममाचष्टे यश्चैवा[3]दिशते व्रतम् ।
सोऽसंवृतं नाम तमः [4]सह तेनैव गच्छति ॥

'मतिः' [5]अदृष्टार्थकार्याकार्यविषया । 'उच्छिष्टं' भोजनपात्रस्थं भक्तशिष्टम् । 'हविष्कृतं' हविस्त्वेन कल्पितं पुरोडाशादि । 'धर्मं' पञ्चयज्ञादि ।

अयं चोच्छिष्टदाननिषेधोऽनाश्रितशूद्रविषयः । आश्रितं प्रति—"उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।" [१०, ११९] इति मनुनैवोदाहृतत्वात् । इतरे तु प्रतिषेधाः सर्वशूद्रविषयाः[6] । वर्णधर्मस्य तु लोभादिना अतिक्रान्तप्रतिषेधेनैवोपपत्तेः न तद्विधानापेक्षा[7] ॥

1 Not traced in Vasiṣṭha.

2 न चास्य, गृ. र., ५६३.

3 आदिशति, गृ. र., ५६३.

4 तेनैव सह, गृ. र., ५६३.

5 अदृष्टार्थकार्यविषयमिति कल्पतरुः, गृ. र., ५६३.

6 सङ्कोचाभावानुरोधेन अन्यशूद्रविषया अपि । अत्र वर्णधर्मोपदेशस्य तु लोभादिना अतिक्रान्तप्रतिषेधेनैव करणोपपत्तेः न तद्विधानापेक्षा—गृ. र., ५६३.

7 Both Udaipur and Nagpur MSS. read न तद्विधानाक्षेपः.

**यमः**

**वृषलाध्यापको यस्तु वृषलाध्यापितश्च यः ।**
**तावुभौ नरके मग्नौ वसेतां शरदां शतम् ॥**

**विष्णुः [७१, ४८–५२]**

**[1]न शूद्राय मतिं दद्यात् । नोच्छिष्टहविषी । [न तिलान् ।] न चास्योपदिशेद्धर्मं न व्रतम् ॥**

**शङ्खलिखितौ**

**कृशरपायसापूपमांसदधिमधुघृतकृष्णाजिनानि न शूद्रेभ्यो दद्यात् । न [2]चोच्छिष्टं हविष्कृतं नोपकृतं किञ्चिदन्याप्रकृतात् ॥**

**[3]प्रकृतमुत्सवः ।**

**आपस्तम्बः [१, ३१, २५–२६]**

**नाऽब्राह्मणायोच्छिष्टं दद्यात् यदि प्रयच्छेद्दन्तान् कृष्ट्वा तस्मिन्नवधाय[4] प्रयच्छेत् ॥**

**अब्राह्मणो ऽत्रशूद्रः । विलिख्य तस्मिन्नुच्छिष्टे अवधाय निःक्षिप्य दन्तमलानीति शेषः ।**

1 श्लोकरूपेण गृहस्थरत्नाकरे दृश्यते—

न शूद्राय मतिं दद्यान्नोच्छिष्टं हविषं तिलान् ।
न चास्योपदिशेद्धर्मं न ब्रह्म नैव च व्रतम् ॥—गृ. र., ५६३.

2 न चोच्छिष्टं न हविष्कृतम् । नोपकृतं किञ्चिदन्यत्राप्रकृतात्, गृ. र., ५६४.

3 प्रकृतमिह उत्सवात्मकं—गृ. र., ५६४.

4 उच्छिष्टं प्रयच्छेत् । यदि प्रयच्छेत् दन्तान् कृष्ट्वा तस्मिन्नवधाय प्रयच्छेत्, गृ. र., ५६४.

## ३०

# अथ क्रोधादीनां वर्जनम्

तत्राऽऽपस्तम्बः [१, ३१, २८]

क्रोधादींश्च भूतदाहीयान् दोषान् [1]वर्जयेत् ॥

'भूतदाहीयान्' शरीरदाहहेतून् ।

पुनरापस्तम्बः [१, २३, ४–६]

अथ भूतदाहीयान् दोषानुदाहरिष्यामः ।

क्रोधो हर्षो लोभो मोहो दम्भो द्रोहो मृषोद्यमात्याश-परीवादावसूया काममन्यू अनात्म्यमयोगः ।

[तेषां योगमूलो निर्घातः] ॥

'अत्याशः' [2]बहुतरभक्षणम् । 'मन्युः' पराभिभवोत्थ-दोषानुवृत्तिः । 'अनात्म्यम्' अवशित्वम् । 'अयोगो' अनुयोगः ॥

हारीतः

औदर-रैतस-कामज-क्रोधज-हर्षजानग्नान् यथावन्नि-यच्छेत् ।

1 परिवर्जयेत् । भूतस्य शरीरस्य दाहीयान् दाहकारकान्—गृ. र., ५६४.

2 बहुतरभक्षणं, रैतसकामजक्रोधजहर्षजानग्नीन् यथावत् नियच्छेत । औदराः सर्वकर्मेन्द्रिय-भावदोषाः संभवन्ति । यैः उपसृष्टो विविधसन्तापमुपैति तस्मात् शुचिर्यथा परिमिताहारः स्यात् । आहारशुद्धौ सत्त्वशुद्धिरित्याचार्याः । लोकद्वयसन्तापकरत्वात्—गृ. र., ५६५.

औदराः सर्वकर्मेन्द्रियभावदोषाः सम्भवन्ति यैरुपसृष्टो विविधामापदमुपैति, तस्माच्छुचिर्यथा परिमिताहारः स्यात्। आहारशुद्धौ सत्वशुद्धिरित्याचार्याः। लोकद्वय सन्तापकरत्वादग्नित्वमेतेषाम् ॥

नियच्छेत् शमयेत्।

पुनर्हारीतः

पौस्ता [1]साहसं रेतस्य बीजं तदमृतावुत्सर्गदोषः स्यादृतौ वोत्सर्गे तद्ब्रह्मचर्येण व्याख्यातम्। देवादिप्रवृत्तत्वाज्जगतः प्रथमं, यज्ञनियमार्थं द्वितीयं, तपःसिद्ध्यर्थं तृतीयं, मोक्षसिद्ध्यर्थं चतुर्थं, सङ्कल्पात् काम सम्भवत्याशयात् प्रवर्तते स्नेहान्निबध्नाति। स इच्छालक्षणोऽनेकविधः कामो येनाभिभूतः तृप्त एव कामानां लोकेष्वनेकविधजन्मसंसारकामावर्ते निमज्जति स एवाऽनलः। कामोहि भगवान् वैश्वानर इति श्रुतिः। तस्य सङ्कल्पो नियमनं, स व्याख्यातः ॥

कामगीतौ चात्र श्लोकौ भवतः

प्रवृत्तौ च निवृत्तौ च सर्वतः प्रतिभूरहम्।
सर्वार्थेषु [2]यथार्थोऽहं महते नास्ति किञ्चन ॥
यो मां यथार्थं सर्वार्थे सर्वभूतेषु पश्यति।

1 पुंयोगात् साहसं रेतस्य बीजं तदनृतावुत्सर्गदोषः स्यात् ऋतौ चोत्सर्गे तद्ब्रह्मचर्येण व्याख्यातं। देवादिप्रवृत्तत्वात् जगतः प्रथमं, द्वितीयं यज्ञनियमार्थं, तृतीयं मोक्षसिध्यर्थं सङ्कल्पात् कामः सम्भवत्याशयात् प्रवर्तते स्नेहान्निवर्तते। स चेच्छालक्षणोऽनेकविधः कामो येनाभिभूतोऽतृप्त एव कामानां लोके ह्यनेकसंसारकामावर्ते निमज्जति स एष अनलः। कामो हि भगवान् वैश्वानर इति श्रुतिः। तस्य सङ्कल्पनं नियमनं स व्याख्यातः—गृ. र., ५६५.

2 अयथार्थोहं महते न हि, गृ. र., ५६६.

सोऽध्वनः [1]परमां याति नेतरे कामवादिनः ॥ इति[2]

क्रोधाग्निनाऽभिभूतः स्वेषामप्यबहुमतो[3]नाभिभवति योऽविश्वसनीयश्च भवति। कार्याकार्यवाच्यावाच्यानि न वितर्कयति। [[4]हितवादिनो गुरून् पश्यति क्रमेत्याविष्टः। प्रेतलोकायात्मानं गमयति।] तत्र घोरां निरयप्रायां यातनामनुभूय क्रूरक्रव्यादश्वतिर्यग्योनिषु [5]जायते। तत्र सर्वासां प्रजानां वश्यो भवति।

क्रमशो मनुष्यतां प्राप्य सर्वजनविद्विष्टतामुपैति।

क्रोधो हि तमोरूपस्तस्य क्षमा नियमनं सा व्याख्यातेति। लोभाग्निनाऽभिभूतः पुण्यार्थेष्वप्युपयुज्यमानमतिक्रामन्तमात्मानं मन्यते। नष्टं पुत्रं दारबन्धूनामुपयुक्तं [6]सुहृद्बन्धुसंबन्धिनामप्यनुजीव्यतमो भवति। असद्वृत्तानामप्यादानमिच्छति। [7]तत्रार्थानुबन्धात्तिर्यग्योनिषु जायते लोभो हि तमोरूपस्तस्य सन्तोषो नियमनं सोऽपि व्याख्यातः॥

एवं ह्याह—

[8]औदरो रेतसश्चापि कामजः क्रोधजोऽङ्गजः[9]।
एते वै निर्जिता येन स वै पञ्चतपा स्मृतः॥

1 पारमायाति, ना. को.
2 इति। कार्याकार्य वाच्यावाच्य, ना. को.
3 नाभिगमनीयः, गृ. र., ५६६.
4 कोष्ठकान्तर्गतो भागः गृ. रत्नाकरे न दृश्यते.
5 व्रजति इति गृ. रत्ना., ५६६.
6 सुहृत्सम्बन्धिनामप्युपजीवनीयतमः; सकृद्व, Udaipur and ना. को.
7 तत्रानुबन्धात् सोपि तिर्यग्योनिषु जायते.
8 औदरो रैतसश्चापि कामजः क्रोधजोऽङ्गजः।
एते वै निर्जिता येन स वै पञ्चतमः स्मृतः॥
9 अर्थजः, ना. को.

[1]वाचोवेगं मनसः क्रोधवेगं
जिह्वावेगं तूदरोपस्थवेगम् ।
एतान् वेगान् धारयेद्यस्तु विप्र-
स्तं प्रब्रूयुः ब्रह्मिष्ठं वा मुनिं च ॥ इति ।

[2]पौरस्तान् पुरुषव्यापारान् साहसं बलवन्तस्य पुरुषस्य बीजं यतस्तत्तस्माद्ब्रह्मचर्येण बहुरूपतया कृष्णादि तत्सर्वाः सर्वमुदारगमनरूपम् । प्रथमं जगन्निवासिनः सर्वस्य भवति देवमारभ्य तिर्यक्पर्यन्तं स्वभावप्रवृत्तत्वात् । द्वितीयं सर्ववर्जनरूपं यज्ञसाङ्गतासिध्यर्थं तृतीयं ऋतावेव गमनं ऊर्द्ध्वरेतस्कं सङ्कल्पः विषयसौन्दर्यज्ञानम् । 'कामो' विषयेच्छा । 'आशयः' पौनःपुन्येन भावना । 'स्नेहः' तत्रैवासक्तिः । 'अध्वनः' अर्चिरादिमार्गात्परं त्रिपा लक्षणम् ॥

विष्णुः [३३, ६]

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभः तदेतत् त्रितयं त्यजेत् ॥

जाबालः

त्यजेदिन्द्रियचापल्यं ब्रह्मनिन्दां तथैव च ।

1 तूरः प्रशस्तवेगम् इति, गृ. र., ५६६.

2 पौरुष्यं पुरुषव्यापारः, साहसं सहो बलं तद्भवं तस्य पुरुषस्य रेतो बीजं यतस्तस्मात् तत्पर्वापर्वसाधारणेषु दारगमनरूपं । ब्रह्मचर्येण पूर्वोक्त कृष्णशबलादिभेदेन प्रथमं निषिद्धानिषिद्धसाधारणं गमनम् । जगतः सर्वस्य तद्देवादारभ्य तिर्यक्पर्यन्तं स्वभावप्रवृत्तत्वात् । द्वितीयं पर्वादिवर्जनरूपं यज्ञार्थं यज्ञसाङ्गतासिध्यर्थं । तृतीयं ऋतुमात्रगमनं तपःसिध्यर्थम् । चतुर्थमूर्ध्वरेतस्त्वं मोक्षार्थं । सङ्कल्पाद्रमणीया युवतीत्यादि विज्ञानात् । कामो विषयरागः । आशयात् पौनःपुन्येन भावनातः । स्नेहात्तत्रैव पक्षपातात् । अध्वन आर्तवादिमार्गात् परं त्रिपा-लक्षणम् । इति, गृ. र., ५६७.

मायामात्सर्यलोभांश्च क्रोधवेगान् बलाय ते ॥
परापवादमोहांश्च आत्मार्थे याचनां तथा ।
वृथा कलहमालस्यं तथा मैथुनमेव च ॥

आपस्तम्बः [२, ५, १८]

मनसा वाचा घ्राणेन चक्षुषा श्रोत्रेण त्वक्शिश्नोदरारम्भणास्त्रावान् परिभुञ्जानो ऽमृतत्वाय कल्पते ।

त्वक्शिश्नोदरारम्भणानान् आस्त्रावन् पञ्चभिरिन्द्रियैः 'परिभुञ्जानो' वर्जयेत्[1] ।

मनुः [४, १६३]

नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम् ।
द्वेषं दंभं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ॥

हारीतः

[2]सर्वा भक्ष्याभक्षणमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रतिग्रहो परदाराभि[3]गमनं परद्रव्यापहरणं, [4]प्राणिहिंसा चेति शरीराणि । पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाच्यानि । परोपतापः पराभिद्रोहः क्रोधो लोभो मोहो ऽहङ्कारश्चेति तदेतान्यष्टादश च यानि कर्माणि ।

'अभोज्य भोजनं' पतिताद्यन्नभक्षणम् । 'नैरेयाणि' नरकहेतवः ।

1 'आस्त्रा:' शब्दादयो विषयाः । ते विशेष्यन्ते 'त्वक्-शिश्नोदराम्भणान् आलम्यन्ते इति 'आरम्भणाः' । पञ्चभिरिन्द्रियैः 'परिभुञ्जानः' वर्जयन् 'अमृतत्वाय' मोक्षाय कल्पते (हरदत्तः).

2 सर्वभक्ष्यभोजन गृ. र., ५६७.

3 मर्षण, गृ. र., ५६८.

4 पर, गृ. र., ५६८.

[1]देवलः

अथातः पापदोषान् मनोवाक्शरीरजान् व्याख्यास्यामः। तत्र मोहरागद्वेषमानलोभमदशोकममत्वाऽहङ्कारभयहर्ष[2]मोघचिन्ताश्चेति द्वादश मानसाः॥

तेषां च त्रिविधो मोहः संभवः सर्वपाप्मनाम्।
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम्॥
विज्ञानं सर्वविद्यानामर्थानां स्वयमूहनम्।
दोषैरधर्षणश्चेति ज्ञानमज्ञानमन्यथा॥
अश्रेयःश्रेयसोर्मध्ये [3]भ्रमणे संशयो भवेत्।
मिथ्याज्ञानमिति प्राहुरहिते हितदर्शनम्॥
भवत्यधर्मो [4]अज्ञानादविद्यातश्च संशयः।
उभाभ्यामन्यथाज्ञानं पापिष्ठमुपजायते॥
अज्ञानाद्दुःखसंप्राप्तिः संशया[5]द्वर्तते पुनः।
मिथ्याज्ञानात्पतत्येव [6]मूढः तामिस्रयोनिषु॥
आवृत्ताः विषयाः सर्वे धर्मदोषै र्यथा तनुः।
गुणतो हृदि तान्[7] श्रुत्वा रागोरागस्य [8]लक्षणम्॥
[9]असन्निकर्षादज्ञानात्सङ्कल्पादभिमानतः।

1 देवल इति न दृश्यते हारीतवाक्यशेषतया दृश्यते इति गृ. र., ५६८। परन्तु बीकानीरकोशेऽपि देवल इति दृश्यते.

2 मोह, गृ. र., ५६८.

3 भ्रमणं संशयाद्भवेत्, गृ. र., ५६८.

4 अज्ञानमविद्यातश्च, गृ. र., ५६८.

5 बध्यते, गृ. र., ५६८.

6 गूढः, ना. को.; मूढो तामिश्र, गृ. र., ५६८.

7 कृत्वा, गृ. र., ५६८.

8 कारणं, गृ. र., ५६८.

9 असन्निकर्षात्, गृ. र., ५६९.

सुखाच्च जायते रागो विषयेषु शरीरिणाम् ॥
ज्ञानाद्द्वेषादसामर्थ्यात् क्लेशादन्यप्रसङ्गतः ।
वियोगा[1]त्कामतः शोका[2]द्धर्माच्चैव निवर्त्तते ॥
निवर्तते चेद्रागोऽयं पुंसो द्वेषादिहेतुभिः ।
भूयोप्युत्पद्यते सङ्गात् ज्ञानान्नश्यति केवलम् ॥
[3]अतिप्रसक्तः भोगेषु रागो भवति दोषकृत् ।
परस्त्रीषु परस्वेषु किञ्चित् प्रार्थनयापि च ॥
[4]रोषोऽमर्षोऽभ्यसूया च द्रोहो मिथ्या वितर्कितम् ।
दुःखार्हश्चेति तत्वज्ञैर्द्वेषः षोढा [5]विधीयते ॥
[6]यत्तस्मात् हृदये जन्तोः समुत्तिष्ठति वैकृतः ।
परानिष्ट[7]चिकीर्षा च सरोष इति [8]संज्ञितः ॥
[9]पराभवसमुत्थेन दोषेणैवाभि[10]चोदितः ।
[11]किञ्चिद्दृष्ट्वैव यो द्वेषस्तदमर्षस्य लक्षणम् ॥
परस्य शुद्धान् दृष्ट्वातु [12]स्वगुणाभ्यधिकान् गुणान् ।
नाभिनन्दति यो द्वेषात् साऽभ्यसूयेत्युदाहृता ॥
सुहृदामपि यो नित्यमर्थानुपजिघांसति ।

1 कालतः, गृ. र., ५५९.
2 धर्माच्च विनिवर्तते, अज्ञानात, गृ. र., ५६९.
3 अतिप्रसक्तो, गृ. र., ५६९.
4 रोषोऽमर्षोऽभ्यसूया च द्रोहो मिथ्याभि, गृ. र., ५६९.
5 अभिधीयते, गृ. र., ५६९.
6 य उष्मा, गृ. र., ५६९.
7 चिकीर्षायां, गृ. र., ५६९.
8 संज्ञितः, गृ. र., ५६९.
9 रोषोद्भध, गृ. र., ५६९.
10 वेदितः, गृ. र., ५६९.
11 किञ्चिद् दृष्ट्वैव यो द्वेषस्तदमर्षस्य, गृ. र., ५६९.
12 स्वगुणाभ्यधिकान् गुणान्, गृ. र., ५६९.

[1]असौहृद्यमतिः पापस्तदाहुर्द्रोहलक्षणम् ॥
यः साधून् [2]परदोषांश्च मन्यते [3]द्वेषकारिणः ।
मिथ्या वितर्कितं चेति तदाहुर्भावदोषजम् ॥
[4]द्वेषात् लोभाच्च सङ्कल्पाच्चिन्तनं पापकर्मणाम् ।
दुःखार्हमितिविज्ञेयं पूर्वदुष्कृतसंभवम् ॥
दुःखान्मिथ्या [5]विघाताच्च दुःखोऽयं द्विविधो भवेत् ।
ज्ञानात् कालात्ययात् धर्मात्प्रीतेश्च विनिवर्त्तते ॥
अतत्त्वग्रहणं[6] तापो वेपथुर्ज्ञानसंप्लवः ।
स्वेदोऽक्षिरोगः पारुष्यं श्वासस्तु द्वेषदोषजाः[7] ॥
सर्वत्रोत्कृष्टमात्मानं सर्वेभ्यो योऽभिमन्यते ।
समान इति विज्ञेयो [8]यथेष्टस्य सुराकृयः (?) ॥
[9]नरस्याऽऽत्माभिमानेन या उत्कृष्टि र्न शोभते ।
उत्कृष्टि [10]र्याचिता प्राहुरुत्कृष्टिः साऽवमानतः ॥
परार्थं परभोगांश्च परसामृद्ध्यमेव च ।
दृष्ट्वा श्रुत्वा [11]च या तृष्णा जायते लोभ एव सः ॥
[12]अलोभात् मूलतर्काच्च पिपासा परिवर्धितः ।

1 असौहृदमतिः पापस्तथाहुर्द्रेहि, गृ. र., ५६९.
2 अप, ना. को.
3 दोष, गृ. र., ५६९.
4 द्वेषाल्लोभाच्च, गृ. र., ५६९.
5 अभिलाषाच्च द्वेषोयं षड्विधः, गृ. र., ५७०.
6 श्रवणं, गृ. र., ५७०.
7 रोधतः गृ. र., ५७०.
8 यथेष्टं स्पष्टवक्रिणः, गृ. र., ५७०.
9 निरस्य, गृ. र., ५७०.
10 यावता, गृ. र., ५७०.
11 तु या तृष्णा, गृ. र., ५७०.
12 अलोभमूलतर्काच्च, गृ. र., ५७०.

[1]अनर्थेष्वेव संमोह्य लोभः [2]पचति दुर्नरम् ॥
नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
तस्माच्च लोभसंजातां तृष्णां विद्वान्परित्यजेत् ॥
प्राप्याऽपि मेदिनीं कृत्स्नां तृष्णा [3]वै नोपशाम्यति ।
विवर्द्धते [4]किं भूयोऽपि हविषेव विभावसुः ॥
दुःखादित्या[5]दुरन्तत्वादनित्यत्वादतृप्तितः ।
पश्चाच्छोकावहत्वाच्च न क्वचिच्छ्रेयसी तृषा ॥
कुलवृद्धिवपुर्विद्यावित्तैश्वर्यविभूतिभिः ।
[6]स्वैरेतैःर्बाध्यते योऽन्यान् उन्मादस्येह लक्षणम् ॥
देवासुरमनुष्याणामुत्सिक्तामदहेतवः ।
[7]मदेनैव विनेशुस्ते तस्मात्त्याज्यो मदो बुधैः ॥
[8]हर्षैः शोकावलोकाच्च दंभाद्दर्पाच्च गर्वतः ।
अन्ये च तद्विधा भावास्ते मदस्य विकल्पजाः ॥
अनिष्टयोगजाद्द्वेषात् स्नेहाविष्टाच्च योगजात् ।
क्लेशाद्वा[9] हृदि दुःखं च सशोक इति पद्यते ॥
अनित्याः सर्वभावाश्च[10] शोकस्तत्र [11]न वर्तते ।
अथवा यदि नित्याः स्युः [12]कुतः शोकः प्रवर्तते ॥

1 अनर्थेष्वेव, गृ. र., ५७०.
2 पतति, गृ. र., ५७०.
3 प्रायो न; नैवोप, ना. को.
4 हि, गृ. र., ५७०.
5 दुरन्तत्वादनन्तत्वात्, गृ. र., ५७०.; दुष्पूरत्वादतृप्तितः, ना. को.
6 स्वैरेतैः बाधते योऽन्यान् स तन्मोहस्य, गृ. र., ५७०.
7 उत्पत्यैव विनेशुस्ते, गृ. र., ५७१.
8 हर्षशोकापलापाच्च दंभाद्दर्पाच्च गर्वतः, गृ. र., ५७१.
9 च हृदि यद्दुःखं, गृ. र., ५७१.
10 चेत्, गृ. र., ५७१.
11 निवर्तते, गृ. र., ५७१.
12 अतः, गृ. र., ५७१.

नैवं हि शोचेत्सत्वस्थस्तामसो वाऽपि केवलम् ।
शोकाद्दुःखमवाप्नोति समासेनेह [1]राजसः ॥
इदं ममेति यः स्वाम्य[2]मात्मानं स्वेषु मन्यते ।
[3]अजानन्तमनित्यत्वं ममत्वमितितद्विदुः ॥
अहमित्यभि[4]मानेन यः क्रियासु प्रवर्तते ।
कार्यकारणयुक्तासु तदहङ्कारलक्षणम् ॥
अहङ्कारममत्वाभ्यां [5]बाध्यन्ते सर्वदेहिनः ।
संसारविनियोगेषु ताभ्यां मुक्तस्तु[6] मुच्यते ॥
आत्मबाधाकरं[7] श्रुत्वा दृष्ट्वा वा प्रत्युपस्थितम् ।
*उद्वेगो जायते यस्तु हृदये तद्भयं स्मृतम् ।
*तावद्भये न भेतव्यं यावद्भयमनागतम् ॥
*आगतं तु भयं दृष्ट्वा प्रवर्तव्यमभीतवत् ।
*भवितव्यं भवत्येव नास्ति कर्मव्यतिक्रमः ॥
*इत्येवं दृष्टतत्वानां न क्वचिज्जायते भयम्[8] ।
आत्मनो [9]हृदयं दृष्ट्वा परेभ्यो व्यसनानि च ॥
आनन्दो मानसो जन्तोर्हर्ष इत्यभिधीयते ।
सर्वद्रव्येष्वनित्येषु क्षणिकेष्वसुखेषु च ॥
न हर्षस्याऽवकाशोऽस्ति विमृश्य यदि पश्यति ।

1 मानवः, गृ. र., ५७१.
2 आत्मनोऽर्थेषु, गृ. र., ५७१.
3 अजानंस्तदनित्यत्वं, गृ. र., ५७१.
4 अभिधानेन, गृ. र. ५७१.
5 वध्यन्ते, गृ. र., ५७१.
6 च, गृ. र., ५७१.
7 बाध, गृ. र., ५७१.
8 **** बीकनीरकोशे, गृ. र. च, ५७१, अधिकश्लोकाः.
9 अभ्युदयं, गृ. र., ५७२.

[1]माध्यस्थ्यमपि दोषाय परेषां व्यसनागमे ॥
किं पुनर्मूढभावेन प्रमोदः [2]परिविद्रवे ।
यो वृथा [3]चिन्तयत्यर्थान्मनसा हि परम्परम् ॥
मोघचिन्तेति [4]तामाहुर्धर्मकर्मोपघातिनीम् ।
[5]भोगैश्वर्यधनादीनि लोभाद्यः संसरेद्वृथा[6] ॥
[7]स मोघचिन्तयात्मानं हन्ति बुद्धिं च कर्म च ।
तस्माद्विदूरगां चिन्तां त्यक्त्वा शोकं च कर्मजम् ॥
आरभेत शुभं कर्म [8]धियं प्राप्तुं च सर्वशः ।
राग संकल्पजान् [9]हन्ति हृदयेषु दृढार्पितान् ॥
उच्छिद्य [10]चैतान् मेधावी तत्वज्ञानासिना[11]हुतम् ।
[12]आत्मनो रक्षणोपायमनित्यामध्यतां तनोः ॥
हितं च सर्वभूतानां चिन्तयेन्मनसा सह ।
एते मनोभवा दोषाः द्वादशाऽशिवहेतवः ॥
मोहादयः समाख्याता देवासुरनृमोहनाः ।
[13]तत्संयोगान्मनो गुप्तेर्ज्ञानधर्मप्रसङ्गतः ॥
[14]त्यागाच्च व्यसनादीनां हानिं गच्छन्ति मानवः ।

1 माध्यस्थ्यं, गृ. र., ५७२.
2 च परिद्रवे, गृ. र., ५७२.
3 चिन्तयेत्, गृ. र., ५७२.
4 तां प्राहुः, गृ. र., ५७२.
5 लाभैश्वर्य, गृ. र., ५७२.
6 हृदा, गृ. र., ५७२.
7 स मोघचिन्तश्च, गृ. र., ५७२.
8 ध्रुवप्राप्तं, गृ. र., ५७२.
9 दोषान् हृदये सु, गृ. र., ५७२.
10 ह्येतान्, गृ. र., ना. को. ५७२.
11 द्रुतं गृ. र., ५७२.; नाद्भुतम्, ना. को.
12 आत्मदोषक्षयोपायमनित्या, इति गृ. र., ५७२.
13 सत्संयोगात्, गृ. र., ५७२.
14 त्यागाच्च, गृ. र., ५७२.

तथा

[1]अप्रकाशकरो बुद्धिं तम आवृत्य [2]सर्वतः ।
प्रथमं जायते [3]मोहाद्देहिनां हृदि पाप्मजः ॥
मोहादुत्पद्यते रागो रागा[4]द्द्वेषः प्रजायते ।
त्रिभिरेतैर्भवत्येवं पापं शारीरवाङ्मयम् ॥
तस्मा[5]द्गरीयः सर्वेषु मानसेष्वपि च त्रयम् ।
[6]सर्वान् दोषान् परित्यक्तुं त्रीनेतान् प्रथमं त्यजेत् ॥

वाङ्मयानभिधाय पापदोषानुवृत्तौ पुनर्देवलः —

[ततो हिंसाऽपचारः स्तेयमर्थदूषणमिति चतुर्विधाः शारीरजाः । कृतप्रणाशनं द्रव्यापध्वंसनञ्चार्थदूषणमित्येवम्[7] ।]

वेश्म[8]क्षेत्रशस्यदहनं सेतुभेदनं आजीवोपघातनं कृतप्रणाशनं । द्रव्यापध्वंसनं चार्थदूषणमित्येवम् ॥

कृत्वा त्वर्थजातान्यायात् पूर्वान्स्वलक्षणैः ।
आख्यातानि विशेषेण पापानि परिशेषतः ॥

मनुः [४–१६२, १६५–१६९]

आचार्यं [9]च प्रवक्तारं पितरं मातरं गुरुम् ।

1 करां, गृ र., ५७२.
2 धर्मतः, तथाकाशकरो, ना. को.
3 मोहः, गृ. र., ५७२.
4 दुःखं, गृ. र., ५७३.
5 गरीयः, गृ. र., ५७३ ; गृहीयः इति उदय. को.
6 सर्वान् दोषान्, गृ. र., ५७३ ; सर्वान् देवान् इति उदय. को.
7 बीकानीरकोशे, गृ. रत्नाकरे च उद्धृताधिकपङ्क्तयः, ना. को. च.
8 क्षेत्रशस्यदहनं सेतुभेदनं आजीवोपघातनं । कृतप्रणाशनं द्रव्यापध्वंसनं चार्थदूषणमित्येवम् इति गृ. र., ५८३.
9 नीति, गृ. र., ५७३.

न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः ॥
[1]ब्राह्मणायावगूर्यैव द्विजातिर्वधकाम्यया ।
शतं वर्षाणि तामिस्रे नरके परि[2]वर्तते ॥
ताडयित्वा तृणेनापि संरम्भान्मतिपूर्वकम् ।
एकविंशतिम[3]जातिः पापयोनिषु जायते ॥
अयुध्यमानस्यो[4]त्पाद्य ब्राह्मणस्यानृशंसिनः ।
दुःखं [5]सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः ॥
शोणितं यावतः पांसून्संगृह्णाति मही[6]तलात् ।
तावतोऽब्दानमुत्रान्यैः[7] शोणितोत्पादकोऽद्यते ॥
[8]न कदाचिद्द्विजं तस्माद्विद्वानवगुरेदपि ।
न ताडयेत्तृणेनापि न गात्रात्स्रावयेदसृक् ॥

तथा [मनु, ११, २०६][9] यमः

[10]अवगूर्यस्त्वब्दशतं सहस्रमभि[11]हत्य तु ।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥

तथा [११, २०७]

शोणितं यावतः पांसून्संगृह्णाति द्विजन्मनः[12] ।

1 ब्राह्मणायावगुर्यैव, ना. को., गृ. र., ५८३.
2 पद्यते, गृ. र., ५८३.
3 जातीः, गृ. र., ५७३.
4 उत्पाद्य ब्राह्मणस्यासृगङ्गतः, गृ. र., ५७३.
5 सु, गृ. र., ५७३.
6 तले, गृ. र., ५७३.
7 अन्यैः, गृ. र., ५७३.
8 यमः—न कदाचिद्द्विजं रोषात्तस्मादश्रग्वरेदपि ?, गृ. र., ५७३.
9 यमवचनमिति, गृ. र., ५८४.
10 अश्रग्वर्यः, गृ. र., ५७३.
11 हन्यते, गृ. र., ५७३.
12 महीतले इति मेधातिथि पाठः.

तावद्वर्षसहस्राणि तत्कर्ता नरके वसेत् ॥

'अजाति'श्च जन्मानि । 'अमुत्र' परलोके । 'अद्यते' भक्ष्यते ।

उशनाः

न ब्राह्मणस्याऽऽपदं कुर्यात् ।

यमः

वादेन ब्राह्मणं जित्वा हर्षं वै योऽधिगच्छति ।
श्मशाने पादपः सस्याद् [1]गृध्रकंकनिषेवितः ॥

हारीतः

देवा लोकास्तथा वेदा गावो यज्ञास्तथैव च ।
सर्वस्थानेषु [2]भूयिष्ठं ब्राह्मणेषु व्यवस्थिताः ॥
पूजितैः पूजिता ह्येते द्विष्टैर्द्विष्टा भवंत्युत ।
निन्दितैर्निन्दिता ह्येते तस्माद्विप्रोऽधिदवैतम् ॥

पुनर्हारीतः

समीपस्थो दहत्यग्निः [3]तेजसैवेन्द्रियं तनुम् ।
मन्युना तद्दहेद्विप्रः [4]कुशलमाप्रकृतिं यशः ॥
[5]आसन्नं प्रदहत्यग्निः [6]दूराच्च दहति द्विजः ।
तस्मात्तं पूजयेन्नच्यायात् स हि तीव्रतरोऽनलात् ॥

1 कङ्कगृध्र, गृ. र., ५७४.
2 भूयिष्ठं, गृ. र., ५७४.
3 तेजसैव, गृ. र., ५७४.
4 कुलमायुर्गतिं, गृ. र., ५७४.
5 आसन्नः, गृ. र., ५७५.
6 दूरात्तु, गृ. र., ५७५.

छिन्नं रोहति शस्त्रेण दग्धं रोहति वह्निना।
विप्रमन्युप्रदग्धस्य रोहणं [1]नैव विद्यते।
[2]ब्राह्मणान् भोजयेन्नित्यं ब्राह्मणानर्चयेत्सदा॥
ब्राह्मणानां प्रसादेन सर्वतः शान्तिमाप्नुयात्।
यथा[3]र्णवे नौर्महती प्रयुक्ता
[4]सत् गारयंत्याशु ततो दुर्गात्।
[5]हृष्टा द्विजा तद्वदिह क्षणेन
सन्तारयेयु र्महतोऽपि दुर्गात्॥

'पूजयेत्' प्रणामादिना।

मनुः [४-१६४]

परस्य [6]दण्डं नो यच्छेत् क्रुद्धो नैनं निपातयेत्।
अन्यत्र[7]पुत्रशिष्याद्वा शिष्ट्यर्थं तत्र पातयेत्॥

'एनं' दण्डं। 'शिष्ट्यर्थं' शिक्षार्थं। 'तत्र' पुत्र-शिष्ययोः।

याज्ञवल्क्यः [१, १५५]

न निन्दाताडने कुर्यात् [8]पुत्रं शिष्यं च ताडयेत्॥

[मनुः, ४, १४१]

हीनांगानतिरिक्तांगान् विद्या हीनान् वयोधिकान्।

1 नेह, गृ. र., ५७५.
2 अर्धं न दृश्यते, गृ. र., ५७५.
3 प्लवे, गृ. र., ५७५.
4 सन्तारयन्त्याशु जलाच्च, गृ. र., ५७५.
5 दृष्ट्वा द्विजास्तद्वदिह क्षणेन सन्तारयेयुर्महतोघसङ्घात्, गृ. र., ५७५.
6 दण्डं नो, गृ. र., ५७५.
7 शिष्यात् पुत्राद्वा शिष्ट्यर्थं ताडयेदुभौ ; गृ. र., ५७५, ताडयेदुभौ इति कुल्लूकधृतपाठश्च.
8 सुतं, गृ. र., ५७५.

रूप[1]द्रव्यविहीनांश्च जातिहीनांश्च नाऽऽक्षिपेत् ॥

विष्णुः [७१, १–३]

[2]न च नावमन्येत। नहीनाङ्गमधिकाङ्गं वा। न च [मूर्खान्] धनहीनान् वा उपहसेत्। एवं[3] स्त्रीं नावमन्येत। न हीनानवमन्येत ॥

मनुः [४–१३५–१३७]

क्षत्रियं चैव [4]सर्पं च ब्राह्मणं च बहुश्रुतम्।
नावमन्येत वै हृष्टं [5]कृशानपि कदाचन ॥
एतत् त्रयं हि पुरुषं निर्दहत्यवमानितम्।
तस्मादेतत्प्रयत्नेन नावमन्येत बुद्धिमान् ॥
नात्मानमवमन्येत [6]पूर्वाभिरसमृद्धिभिः।
आमृत्योः श्रिय[7]मन्विच्छेन्नैतां मन्येत दुर्लभाम् ॥

शङ्खलिखितौ

न शिष्टानसत्कुर्यात् ॥

बौधायनः [२, ४; २५–२७]

[8]दैन्यं शाठ्यं जैह्म्यं च परिवर्जयेत्।

1 द्रविण, ना. को.

2 अथ कथञ्चन नावमन्येत। यथा एवं स्त्रीं नावमन्येत। नाप्यवहसेत्। न हीनानुपहसेत्, गृ. र., ५७५.

3 एवं स्त्रीं नापहसेत् न पलीतरामप्यवहसेत् न हीना, ना. को., गृ. र., ५७५.

4 वैश्यं च, गृ. र., ५७६.

5 'भूष्णुः' (वर्धिष्णुः) इति मेधातिथिकुल्लूकपाठः।

6 सर्वाभिः, गृ. र., ५७६.

7 ईहेत नैनामीहेत, गृ. र., ५७६.

8 दैन्यं साध्यं तैक्ष्ण्यं च वर्जयेत्, गृ. र., ५७६.

अथाऽप्यत्रोशनसोश्च वृषपर्वणश्च दुहित्रोस्संवादे गाथामप्युदाहरन्ति—

स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः ।
अथाऽहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥

देवलः

आत्मानं न शपे [1]द्रोषान्नीरुजो न स्वपेद्दिवा ।
न [2]नखैर्विलिखेद्भूमिं गांश्च रात्रौ न संविशेत् ॥
न नदीषु नदीं ब्रूयात्पर्वतेषु च पर्वतम् ।
[3]नाऽन्यत्प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥
आवासे भोजने वापि न त्यजेत्सहयायिनम् ।
देवान् नृपानृषींश्चैव [4]अनुसप्तपदं व्रजेत् ॥
ब्राह्मणान्नृपतीन् [5]विद्वान् गाश्च साधून् शिशूनपि ।
नाक्रोशेन्नाऽवमन्येत पूजयेद्दैवतं [6]यथा ॥
नावगाहेदपो नग्नो वह्निं [7]नातिक्रमेत्पदा ।
[8]शिरोभ्यक्तावशिष्टेन तैलेनाऽङ्गं विलेपयेत् ॥

अत्र 'न' इति अनुषङ्गः ।

1 कोपादरुजो, गृ. र., ५७६.
2 नक्तं विलिखेद्भूमीं, गृ. र., ५७६.
3 नान्यं, गृ. र., ५७६.
4 आसप्तमपदं, गृ. र., ५७६.
5 वृद्धान् गाश्च, गृ. र., ५७७.
6 तथा, गृ. र., ५७७.
7 चापि व्रजेत्, गृ. र., ५७७.
8 शिरोभ्यङ्गा, गृ. र., ५७७.

**विष्णुः** [७१, ७८]

[1]न सर्पैर्न शस्त्रैः क्रीडेत् ।

**मनुः** [४–१४४]

अनातुरः[2] स्वानिखानि न स्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ॥

[४, १७७]

न पाणिपादचपलो न नेत्रचपलोऽनृजुः ।
न स्याद्वाक्[3]चपलश्चैव न परद्रोहकर्मधीः ॥

[4]**वसिष्ठः** [६, ३३, ३९, ४१, ४२]

[5]नाङ्गन[ख]वादनं कुर्यात् न चाऽऽपोंजलिना पिबेत् ॥
नम्लेच्छभाषां शिक्षेत ॥

अथाप्युदाहरन्ति—

न पाणिपादचपलो न नेत्रचपलो भवेत् ।
[6]न च वागङ्गचपल इति शिष्टस्य गोचरः ॥

**गौतमः** [१–९–४९]

[7]न पदा मनसा कर्षेत्, न शिश्नोदरपाणिपादचपलं

1 न सर्पशस्त्रैः क्रीडयेत्, गृ. र., ५७७.

2 त्वालिखनात्, गृ. र., ५७७.

3 कृपणश्चैव गृ. र., ५७८.

4 इतःपूर्वं मनोः श्लोकषट्कं गृ. र., ५७८, दृश्यते.

5 नाङ्गे नखवादनं कुर्यात् । न चापोञ्जलिना पिबेत् । न पादेन पाणिना वा जलमभिहन्यात् । नेष्टकाभिः फलानि पातयेत [न फलेन फलम] न कल्को न कुहको भवेत् । न म्लेच्छभाषां शिक्षेत्, गृ. र., ५७८, ना. को. च.

6 न बाहुचपलो विप्रः, गृ. र., ५७८.

7 न पदा आसनमाकर्षेत् । न शिश्नोदरपाणिपादचक्षुश्चापलानि कुर्यात्, गृ. र., ५७८.

कुर्यात्। छेदनभेदनविलिखनविमर्दनाङ्ग[1]स्फोटनानि नाऽक-स्मात्कुर्यात् ॥

'[2]अवस्फोटनं' हस्ताद्यङ्गसन्धिस्फोटनम्।

मनुः [४-६३-६४]

न कुर्वीत वृथाचेष्टां न वार्यञ्जलिना पिबेत्।
नोत्सङ्गे भक्षये[3]द्भक्ष्यं न जातु स्यात् कुतूहली ॥
[4]न नृत्येदथवा गायेन्न वादित्राणि वादयेत्।
[5]न चास्फोटेन्न वा क्ष्वेडेन्न संरक्तो विरावयेत् ॥

'आस्फोटनं' पाणिना बाहूमूलाभिघातनम्। 'क्ष्वेडनं' सिंहनादः। 'संरक्तो' हर्षणः। 'विरावो' विकृतशब्दः ॥

शङ्खलिखितौ

न भूमिं विलिखेन्न पदाऽभिहन्यात् ॥

यमः

न गायेन्न च [6]नृत्येत नाक्षैः क्रीडेत् कदाचन।
[7]न वादयेत वादित्रं न(च)क्ष्वेडेद् कदाचन ॥

1 स्फोटनानि न कुर्यात्, गृ. र., ५७८.

2 अत्र स्फोटनं हस्ताभ्यङ्गविस्फोटनं बोध्यं, गृ. र., ५७६.

3 भक्ष्यान्, गृ. र., ५७६; भक्ष्यं, या. अप., १८२.

4 न नृत्येन्न तथा गायेन्नवादित्रादि, गृ. र., ५७६; न नृत्येन्नैव गायेच्च, या. अप., १८२.

5 न चास्फोटयेन्न च लिखेत् संरक्तो न, गृ. र., ५७६; नास्फोटयेन्न क्ष्वेडेच्च न च रक्तं विरागयेत्, या. अप.

6 नृत्येत् तु, गृ. र., ५७९.

7 नैकवस्त्रेण भोक्तव्यं न नग्नः स्नानमाचरेत्।
स्वप्तव्यं नैव नग्नेन उच्छिष्टस्तु न संविशेत्।
न गच्छेन्न पठेच्चैव न स्पृशेच्च तथा शिरः ॥
न वादयेत इति पद्यमेकं न दृश्यते गृ. र., ५७९.

नास्फोटयेन्न धावेत्तु नाऽतिसाहसमाचरेत् ॥

हारीतः

न पथि मूत्रपुरीषं शिलां [1]चोत्सृजेत् । [2]व्रीहिनिष्कृषण-लोष्टमर्दनलेखालिखनं करजदशनवीणावादनानि वर्जयेत् । दैन्यमात्मनः । तथा मालावलेपप्रमादकरण [3]विविधां चेष्टांश्च मद्यशुक्लविकारांश्च वर्जयेत् ॥

'निष्कृषणं' नखैर्वितुषीकरणम् । 'अवलेपो' गर्वः ॥

यमः

नैकवस्त्रेण भोक्तव्यं न नग्नः स्थान[4]मर्हति ।
सुप्तव्यं नैव नग्नेन [5]उच्छिष्टन्तु न संविशेत् ॥
न गच्छेन्न पठेच्चैव न स्पृशेच्च तथा [6]शिरः ॥
[7]न दधिसुमनसां प्रत्याचक्षीत नात्मनः ।
स्रजं च नापकर्षेत् सुप्तं न प्रतिबोधयेत् ॥

मनुः [४-६९—७१]

[8]बालातपः प्रेतधूमो [9]वर्ज्यं भिन्नं तथाऽऽसनम् ।

1 वा, गृ. र., ५७९.
2 व्रीहिनिष्कुषणं कुट्टललोष्टमर्दनं लेखाभिलिखनं, गृ. र., ५७९.
3 विविधाङ्गचेष्टाश्च, गृ. र., ५७९.
4 आचरेत्, गृ. र., ५७९.
5 उच्छिष्टस्तु, गृ. र., ५७९.
6 शिरः ॥ मनुः—केशग्रहान्प्रहारांश्च शिरस्येतान्विवर्जयेत् ।
तथा
न चैव प्रलिखेद्भूमिं नात्मनोपहरत्स्रजम् ॥
विष्णुः—नं संहताभ्यां पाणिभ्यां कण्डूयेद्वदनं शिरः । न दधि—ना. को.
7 न दृश्यते, गृ. र., ५७९.
8 बालातपं प्रेतधूमं, इति या. अप., १८६.
9 वर्ज्यः, गृ. र., ५७९.

न [1]छिन्द्यान्नखरोमाणि [2]दन्तैर्नोत्पाटयेन्नखान् ॥
न [3]मृल्लोष्ठं विगृह्णीयान्नच्छिन्द्यात्करजैस्तृणम् ।
[4]न निष्फलं कर्मकुर्यान्नाय आमसुखोदयम् ॥
[5]लोष्टभक्षी तृणच्छेदी [6]नखखादी च यो नरः ।
स विनाशं व्रजत्याशु सूचको शुचिरेव च ॥

वर्जयेदित्यनुवृत्तौ आपस्तम्बः [१, ३२, २८]

[7]तृणच्छेदनलोष्टविमर्दननिष्टीवनानि चाऽकारणात् यच्चाऽन्यत् परिचक्षते ॥

'अकारणात्' प्रयोजनं विना, यदृच्छया इत्यर्थः। 'परिचक्षते' वर्जयन्ति शिष्टा इति शेषः।

पुनरापस्तम्बः [२, १२, १२]

पृष्ठतश्चाऽऽत्मनः पाणी न संश्लेषयेत्[8] ॥

याज्ञवल्क्यः [१–१३८]

नाक्षैः [9]क्रीडन्न[10]धर्मघ्नैर्व्याधितैश्च[11] न संविशेत् ।
विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ॥

1 भिन्द्यात्, गृ. र., ५७९.
2 न छिन्द्यान्नखरैस्तृणम्, गृ. र., ५७९.
3 अर्धमिदं न दृश्यते, गृ. र., ५७९; न मृल्लोष्टं, या. अप., १८३.
4 न कर्मनिष्फलं कुर्यान्नायत्यामसुखोदयम्, या. अप., १८३.
5 लोष्टमर्दी, गृ. र., या. अप., १८३.
6 नखच्छेदी, गृ. र., ५७९.
7 पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत्। प्रेङ्खोलनं च पादयोः। जानुनि चात्याधानं जङ्घायाः। नखैश्च नखवादनानि चाकारणात्। यच्चान्यत् परिचक्षते, गृ. र., ५७९.
8 स्वस्य पृष्ठभागे स्वपाणिद्वयं न 'संश्लेषयेत्' बध्नीयात् (हरदत्तः).
9 क्रीडेत धर्मघ्नैः, या. अप., १८२.
10 अधर्मघ्नैः, गृ. र., ५८०.
11 वा, या. वी., २२३.

'नदीतरं' नदीतरणं। बाहुभ्यां वर्जयेदित्यर्थः।

मनुः [४-७४]

[1]नाक्षैः क्रीडेत् कदाचित्तु स्वयं नोपानहौ हरेत्॥

तथा [४, ५७]

नैकः [2]सुप्याच्छून्यगृहे शयानं[3] न प्रबोधयेत्।
[4]नोदक्याऽभिभाषेत यज्ञं गच्छेन्न चाऽऽवृतः॥

आपस्तम्बः [२, २०, १२-१७]

पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत्। प्रेङ्खोलनं च पादयोः जानुनि चाऽत्याधानं जङ्घायाः [5]नखैश्च नखवादनः। स्फोटनानि चाऽकारणात्। यच्चान्यत्परिचक्षते॥

"प्रेङ्खोलन"मितस्ततश्चालनम्। 'अत्याधानं' आरोपणम्॥

शङ्खलिखितौ

[न पादौ पादेन प्रक्षालयेत्। [6]न दर्भैः परिमृज्यात्॥

1 शयनस्थो न भुञ्जीत न पाणिस्थं न चासने, गृ. र., ५७८.

2 स्वप्यात्, गृ. र., ५७८.

3 श्रेयांसमिति मेधातिथिकुल्लूकपाठः॥ 'न श्रेयांसं'। कनीयान् वृत्तादिभिर्ज्येष्ठं 'इदं ते युक्तं इदं अयुक्तमिति' हेतूपदेशेन न प्रबोधयेत्। 'यज्ञं गच्छेन्न चावृतः'। यज्ञभूमिं अनिमन्त्रितो न गच्छेत्। 'दर्शनाय तु कामम्' इति **गौतमः** (९, ५५)। अतो यज्ञे भोजनादिप्रतिषेधोऽयमवृतस्य॥ (**मेधातिथिः**).

4 नोदक्यामभि, गृ. र., ५७८.

5 नखैश्च, नखवादनानि, गृ. र., ५८०.

6 न दर्भैः परिमृज्यात्। न पादौ परितापयेत्। कुशेषु न परिमृजेत्। न कांस्य भाजनेषु धावयेत्॥ अधिकं गृ. र., ५८०. बीकानिरकोशे च.

विष्णुः [७१, ३७-३९]

न पादौ प्रतापयेत्। न कुशेषु परिमृज्यात्। नाकांस्य-भाजने पादौ धावयेत्॥

यमः

न कांस्ये शौचयेत्पादौ यत्रस्यादपि भोजनम्।]

[1]गौतमः [१, ९, १३-१४]

वाय्वग्निविप्रादित्यो देवता गाश्च प्रतिपश्वन्वा मूत्र-पुरीषामेध्यान् व्युदस्येत्। नैता देवताः प्रतिपादौ प्रसारयेत्॥

आपस्तम्बः [१, ३१, २८]

अग्निमादित्यमपो ब्राह्मणं गा देवताद्वारं प्रतिपादं च शक्तिविषये नाऽभिप्रसारयेत्॥

पादौ इति शेषः॥

हारीतः

न देवगुरुगोब्राह्मण समीपे पादौ प्रसारयेत्॥

देवलः

अशुद्धः शयनं स्नानं स्वाध्यायं यानवाहनम्।
बहिर्निष्क्रिमणश्चैव न कुर्वीत कथञ्चन॥
स्वप्नमध्ययनं स्नानमध्वानं भोजनं गतिम्।
उभयोः सन्ध्ययोः नित्यं मध्याह्ने च विवर्जयेत्॥

1 न दृश्यते, गृ. र.

याज्ञवल्क्यः [१–१५५]

गोब्राह्मणा[1]नलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।

शङ्खलिखितौ

नाग्निं [2]गां ब्राह्मणं च पादे नाधितिष्ठेत् ॥

आपस्तम्बः [१, ३१, ४–७]

वर्जयेद्देवताभिधानं चाऽप्रयतः । पुरुषं चोभयोर्देवतानां राज्ञाश्च । ब्राह्मणस्य च गौरिति पदोपस्पर्शनं वर्जयेत् । हस्तेन चाऽकारणात् ॥

देवतानामिति जात्याख्यायां बहुवचनम् । 'उभयो'- र्देवताराज्ञोः ॥

शङ्खलिखितौ

नाऽशुचिरग्निं परिचरेत् । [3]न ऋषिपितृदेवताः कीर्तयेत् । [4]न गाधोदकमवगाहेत् । नाऽऽपोञ्जलिना पिबेत् । नाऽऽपोग्निं चैकतो धारयेत् ॥

'पितरो' अग्निष्वात्तादयः । 'देवता' विष्ण्वादयः । 'एकतः' एकस्मिन् हस्तादौ ॥

वृद्धशातातपः

विद्यमानेन हस्तेन ब्राह्मणो ज्ञानदुर्बलः ।
तोयं पिबति वक्त्रेण श्वाऽसौ जायेत नाऽन्यथा ॥

1 अग्नीनस्नातः गृ. र., ५८१.

2 गां इति न दृश्यते, गृ. र., ५८१ ; पङ्क्तिभेदः.

3 न पितृदेवताः, गृ. र., ५८१.

4 नागाधोदकं अवगाहेत । न गामग्निं च एकतो धारयेत्, गृ. र., ५८१ ; न गाभीरोदकम्, ना. को., ५८१.

उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥

अभोज्य इत्यनुवृत्तौ वसिष्ठः [१४, ३६]

अन्तर्नाव्युदकम् ॥

नौस्थ्यं जलं[1] न पेयमित्यर्थः ॥

आपस्तम्बः [२, १२, ९–१०]

अग्निमपश्च न युगपद्धारयीत । नानाग्नीनां च सन्निवापं वर्जयेत् ॥

'सन्निवापः' संसर्गः ।

गौतमः [१, ९–९–११]

नाऽऽपोऽमेध्येन संसृजेत् । नाञ्जलिना पिबेत् । नातिष्ठेत् ॥

[2]हारीतः

न नग्नो जलमुपेयात् । न निष्ठीवेत् । नोत्तरेदनुपस्पृश्य नाऽऽपः पिबेदञ्जलिना । नाऽनुद्धृताभिरद्भिः कार्यं कुर्यात् । नाऽऽप्सु रेतो मूत्रपुरीषाणि चोत्सृजेत् ।

मनुः [४, ५६]

नाऽप्सु मूत्र[3]पुरीषं वा ष्ठीवनं वा समुत्सृजेत् ।
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥

1 नौस्थं तोयं, गृ. र., ५८२ ; पङ्क्तिभेदः.
2 हारीत इति न दृश्यते, गौतमशेषतयैव गृ. रत्नाकरे दृश्यते, गौतमे न दृश्यते ; गृ.र., ५८२.
3 पुरीषाणि, गृ. र., ५८२.

आपस्तम्बः [१, ३०, २२]

[1]ष्ठीवन[2]मैथुनकर्माण्यप्सु वर्जयेत् ।

यमः

[3]व्यतिक्रामेन्नस्रवन्तीं ज्वलन्तीज्वलनं तथा[4] ।
चैत्यवृक्षं न [5]वै छिन्द्यात् [6]नाशुष्केष्माणमुत्सृजेत् ॥
न शुक्रं न विषं न [7]मूत्रं न लोहितम् ।
नाऽस्थिभस्म[8]कपालञ्च न केशान्न च [9]विन्नखान् ॥

मनुः [४, ५३-५४]

नाऽग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।
नाऽमेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥
अधस्तान्नोपदध्याच्च [10]न चैवम[11]वलङ्घयेत् ।
न चैनं वादतः कुर्यान्न प्राणाबाधमाचरेत् ॥

आपस्तम्बः [१, १५, १८-२१]

अग्निं नाप्रयत आसीदेत् । इषुमात्रादित्ये । न चैनमुपधमेत् । खट्वायां च नोपदध्यात् ॥

1 निष्ठीवन, गृ. र., ५८३.
2 'ष्ठेवनं' आस्य श्लेष्मादीनामुत्सर्गः (हरदत्तः).
3 व्यतिक्रमेन्न स्रवन्तीं ज्वलनं ज्वलितं तथा, गृ. र., ५८३.
4 न वा, ना. को.
5 वा, गृ. र., ५८३.
6 नाप्सु श्लेष्माणं, गृ. र., ५८३.
7 मूत्रपुरीषं, गृ. र., ५८३.
8 कपालानि, गृ. र., ५८३.
9 कण्टकान्, गृ. र., ५८३.
10 न चैनमभिलङ्घयेत्, गृ. र., ५८३.
11 मभिलङ्घयेत्, ना. को.

इषु मात्रादिषु परिमितदेशादुपधमेत्य समप्रायत इत्य-
नुषङ्गः ॥

पैठीनसिः

नाऽपुष्पितं वृक्षमारोहेत् ॥

देवलः

नाऽवेक्षेताऽशुचिः[1]पूर्वं घर्षयेन्न पदं पदा ।
नग्नौ [2]न प्रक्षिपेदग्नौ अद्भिः प्रशमये[3]त्तथा ॥
प्राणोपघातमन्येषां न [4]शुद्धादिभिराचरेत् ।
सुहृन्मरणमार्तिं वा [5]नसूयं श्रावयेत्परान् ॥
[6]अभियोगेण मित्राणि [7]बालिश्याचैव पीडयेत् ।
[8]दाक्षिण्याद्धि दरिद्रोऽपि सहते मित्रपीडनम् ॥
प्राणिनो हिंसितव्याश्च क्लिष्टघातं न घातयेत् ।
अपण्यं [9]कूष्टपण्यं वा विक्रये न प्रयोजयेत् ॥
[10]न च वह्निं विनिश्वासै र्ज्वालयेद्धर्मतत्त्ववित् ।
[11]नवाद्वृथा (?) शस्त्रं गोगुरुस्त्रीकुमारके ॥

1 कूपं, गृ. र., ५८४.
2 अग्निं न प्रक्षिपेदग्नौ, गृ. र., ५८४.
3 न च, गृ. र., ५८४.
4 युद्धादिभिः, गृ. र., ५८४.
5 स्वयं न श्रावयेत्, गृ. र., ५८४.
6 अतिभोगेन, ना. को.
7 वाणिज्यान्नैव, गृ. र., ५८४.
8 दारिद्र्याद्धि, गृ. र., ५८४.
9 कूटपण्यं, गृ. र., ५८४.
10 न वह्निं मुखनिश्वासैः, गृ. र., ५८४.
11 नावगुण्ठेद्वृथा, गृ. र., ५८४.

पुण्यस्थानोदकस्थाने [1]सीमान्तं वा कृषेन्न च ।
न [2]भिन्द्यात्समयं पूर्वमभ्युपेतं कदाचन ॥
अविश्वासो हि पापिष्ठो भवेत् समयभेदनात् ।
निक्षेपोपनिधी प्राप्तौ तथैव पुनरर्पयेत् ॥
[3]दत्वाऽपनयनं चार्यैर्नरकद्वारमुच्यते ।
यः पापिष्ठो नरः कुर्यात्तिर्यग्योनिषु मैथुनम् ॥
वियोनिगमनाद्भूयः स वियोनिषु जायते ।
परस्परं पशून् बाला[4]न्पक्षि[णो] वा न योधयेत् ॥
[5]परबाधान्नकुर्वीत जलवातायनादिभिः ।
कारयित्वा स्वकर्माणि कारून् [6]पश्चान्नवञ्चयेत् ॥
कर्मानुरूपमेतेषां प्रयच्छेद्भक्तवेतनम् ।
[7]प्रतिवेश्मानुवेश्माभ्यामन्यत्र न निमन्त्रयेत् ॥
प्रदीप्तं गृहमासन्न अद्भिर्यायात्त्वरान्वितः ।
सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत् ॥
न चिरं वासयेत्कन्यां स्वामी प्राप्तफलां गृहे ॥

'क्लिष्टघातं' बहुक्लेशपूर्वकं वृथामोहार्थमिति। 'निक्षेपं' प्रकाशमर्पितं द्रव्यम्। 'उपनिधि'र्वस्त्रादिपिहितमनाख्यात-

1 सीमानं कर्षयेन्न च, गृ. र., ५८४.
2 भिन्द्यात्, गृ. र., ५८४; न विन्द्यात् इति इदयपुरमातृकायाम्.
3 दत्तापलपनं, गृ. र., ५८४.
4 पक्षिणो नावबोधयेत्, गृ. र., ५८४.
5 परस्य बाधां नेच्छेत, गृ. र., ५८४.
6 From here to यायात्त्वारान्वित:, there is a gap in ना. को.
7 प्रतिवेश्म स्ववेश्मभ्यामन्यत्र विनिवर्तयेत्, गृ. र., ५८४.

स्वरूपं समर्पितम्। 'जलायनं' प्रणालिकादि। 'वातायनं' गवाक्षः। 'कारून्' कर्मकरान्। 'प्रतिवेश्मानुवेश्माभ्यामिति' समीपगृहोपलक्षणम्। 'भिक्षार्थं' भिक्षानिवृत्यर्थम्। 'नावघट्टयेत्' न संवृणुयात्।

'स्वाम्य'त्र पित्रादिः। 'प्राप्तफलां' [1]रतिपुत्रफलयोग्याम्॥

पैठीनसिः

न स्वादंस्तिष्ठेत् [2]न हसन् जल्पेत। नाग्निं लङ्घयेत्। [न मुखेनोपधमेत्।] समृद्धमग्निं हस्ताभ्यां न स्पृशेत्। नोदके चिरं स्नायात्॥

उशनाः

[3]पूरनदीवृक्षनिकुटचतुष्पथपरस्त्रीणां प्रतारणावगाहना[4]तिरोहणप्रश्लेषणसंभा[5]षणानि वर्जयेत्॥

'पूरः' प्रवृद्धः जलप्रवाहः। 'निकुटः' कोटरः। पूरनद्योः प्रतरणावगाहने। निकुटचतुष्पथेषु 'अतिरोहण'मत्यन्ताक्रमणं। 'परस्त्रीणां' आलिङ्गिनसंभाषणे। एतानि वर्जयेत्।

1 पतिपुत्र, ना. को.

2 [ ] कोष्ठान्तर्गतो भागः न दृश्यते, गृ. र., ५८५.

3 नदीपूर, गृ. र., ५८५.

4 अधिरोहण, गृ. र., ५८५.

5 भाषणादि, गृ. र., ५८५, पङ्क्तिभेदः.

**आपस्तम्बः [१, ३०, १४]**

दिवा च शिरसः [1]प्रावरणं वर्जयेत्। मूत्रपुरीषयोः परिहाप्य ॥

**गौतमः [१, ९, ३६–३७]**

न [2]प्रावृत्य शिरोऽहनि पर्यटेत्। प्रावृत्य [3]रात्रौ ॥
[4]तथा न वस्त्रेण वीजयेदिति।

1 प्रावरणवर्जनं, गृ. र., ५८५.
2 प्रावृत्याहनि, गृ. र., ५८५.
3 रात्रौ पर्यटेत्, गृ. र., ५८५.
4 अयं न दृश्यते, गृ. र., ५८५, पङ्क्तिभेदः.

## ३१

# अथ परदारादिवर्जनम्

तत्र मनुः [४-१३४]

न हीदृशमनायुष्यं लोके किंचन विद्यते ।
यादृशं पुरुषस्येह पर[1]दारोपसेवनम् ॥

व्यासः

स्वकर्मनिरतो नित्यं स्वदारनिरतो भवेत् ।
सेवनात्परकीयानां [2]नरको दारकर्मणाम् ॥

उशनाः

नान्यपत्नीमभिगच्छेत् ॥

यमः

परदारान्न सेवेत ॥

देवलः

अगम्यागमनमपचारः । परभार्यात्तु वर्णोत्तमा [3]स्वसा-दुहिता सगोत्रा [4]चण्डाली पतिता प्रव्रजिता तिर्यग्योन्यश्चागम्याः ॥

1 दाराभिमर्षणम्, गृ. र., ५८६.
2 नरकं, गृ. र., ५८६.
3 स्वदुहिता, गृ. र., ५८६.
4 चाण्डालानी, गृ. र., ५८६.

[1]गम्यानामपि कन्यानां दूषणं पापमुच्यते ।
पुनस्तां यदि गृह्णाति गन्धर्वः समयो भवेत् ॥

'गम्यानां' विवाहार्हाणां । 'दूषणं' [2]समालिङ्गन-चुम्बनादि ।

याज्ञवल्क्यः [१-१६०]

परशय्यासनोद्यान [3]गृहयानानि वर्जयेत् ।
अदत्ता[4]न्यग्निहीनस्य न चाश्नीयादनापदि ॥

'अदत्तानि' अननुज्ञातानि ।

मनुः [४-२०२]

यानशय्यासनान्यस्य कूपोद्यान[5]गृहाणि च ।
अदत्तान्युप[6]भुञ्जान एनसः स्यात्तुरीयभाक् ॥

इति परदारादिवर्जनम् ।

1 आत्रत्या लिखितम्, गृ. र., ५८६.

2 रागप्रयुक्तचुम्बना, गृ. र., ५८६.

3 गृहयानानि, गृ. र., ५८६; गृहयानानि वर्जयेत्, या. अप, २३८; गृहपानानि, या. वी. २३८.

4 अग्नि, गृ. र., ५८६; अग्निहीनस्य नान्नमद्यात्, या. अप, २३८; अग्निहीनस्य नान्नमद्यादनापदि, या. वी. २३८.

5 गृहाणि च, गृ. र., ५८६; गृहाणि च, या. अप. २३८.

6 युञ्जान, या. अप. २३८.

३२

# अथ सङ्करवर्जनम्

बृहस्पतिः [आपद्धर्म., ५१]

विप्रयोनिं समासाद्य सङ्करं परिवर्जयेत् ।
[1]मानुष्यमधिकं लोके ब्राह्मण्यमधिकं ततः ॥

[प्राय. २४–२५]

एकशय्यासनं पंक्तिर्भाण्डपक्वान्नमिश्रणम् ।
याजनाध्यापने योनिस्तथा च सहभोजनम् ॥
नवधा सङ्करः प्रोक्तो न कर्तव्यो [2]ऽधमैः सह ।
उत्तमैरुत्तमैःसार्द्धं कर्तव्यस्तु समेन वा ॥

'योनि'रत्र यौनः संबन्धः । 'सहभोजनं' एकपात्र-भोजनम् ॥

यमः

ब्राह्मण्यं परिरक्षेत नानायोनिनिषेवणात् ।
दुष्टेभ्यो व्यवहाराच्च तथा दुष्टप्रतिग्रहात् ॥

1 मानुष्यं दुर्लभं, गृ. र., ५८७.
2 अधमैः, गृ. र., ५८७, I. O.

अशुभेभ्यश्च [1]कर्मभ्यः संसर्गादशुभैः सह ।
संसर्गगामिनो ह्येते हेतवः सद्भिरीरिताः ॥
संबन्धाद्गात्रसंस्पर्शाच्छयनात्सहभोजनात् ।
[2]संलापाच्चापि संवासात्पापं सङ्क्रमते नृणाम् ॥

तथा

भाण्डसंसर्गसङ्कीर्णा योनिसङ्करदूषिताः ।
अन्नसङ्करसंकीर्णा वियोनिं यांति वै द्विजाः ॥

[3]तथा

दुर्लभा ब्रह्मयोनिस्तु सङ्करेण तु नाऽन्यथा ।
ब्रह्मभावो न सुलभस्तस्माद्रुध्येत ब्राह्मणः ॥

'दुष्टाः' पतितादयः । 'व्यवहारः' परस्परगृहगमनादि । 'अशुभेभ्य'श्चौरादिभ्यः । 'अशुभैः' अपवित्रैः नीलरक्तादिभिः । 'संसर्गगामिनः' संसर्गेण चरमाणस्य पापस्य वेक्ष्यमाणाः । 'संबन्धो'यौनादि ॥

हारीतः

आलापाद्गात्रसंस्पर्शान्निश्वासादपि चैव तु ।
[4]एकयानासनाभ्यां तु पापं सङ्क्रमते नृणाम् ॥
[5]हन्यादशुद्धश्शुद्धन्तु शुद्धोऽशुद्धन्तु शोधयेत् ।

1 कर्मभ्यः, गृ. र., ५८७.
2 श्वपचालापसंवासान्नभस्य च विलोकनात् ।
अनृतभाषणाद्वदात्कूटसाक्ष्यप्रवादनात् ।
परद्रव्यापहाराच्च पापं सङ्क्रमते नृणाम् ॥—गृ. र., ५८७, अधिकपङ्क्तयः ।
3 पद्यमिदं न दृश्यते, गृ. रे.
4 शय्यासनाभ्यां च, गृ. र., ५८८.
5 हन्यादशुद्धः, गृ. र., ५८८.

अशुद्धस्तु तमोभूतः शुद्धवासेन शुध्यति ॥
[1]तयोर्यद्यत्र भूयिष्ठं शुद्ध्यशुद्धी ततः[2]स्मृते ।

बौधायनः [२, ५, ९]

गुरुसङ्करिणश्चैव शिष्यसङ्करिणश्च ये ।
आहारमात्रसङ्कीर्णा दीर्घं [3]तम उपासते ॥

हारीतः

पान[4]शयनासनान्यपरिहार्य्याण्येके मन्यन्ते। तत्र वर्णविशेषात् । शुक्लमलिनसंसर्गदर्शनात्—पापसंसर्गाद्व्याधिसंक्रमणयोगाच्च। तस्मात् प्रथक् शौचाः श्रेयांस इति। स्वानुपपत्तौ शुध्यन्तर्धाय समामनन्ति। अत्यन्तसंस्पर्शे सचेलस्नानम्। एवं ह्याह—

आसनं शयनं [5]पानमन्तर्द्धाय समाचरेत् ।
ब्रह्मसूत्रोपानद्वस्त्रं धृतमन्यैर्न धारयेत् ॥
न चैकभोजनं प्राहु र्ब्राह्मणानां स्वकैरपि ।
प्रसङ्गात् कर्म्मदोषाच्च पृथक्शौचास्तथापराः ॥

वस्तुविशेषात् शुक्लमलिनयोः। संसर्गेण वर्णविशेषो दृष्टः। 'स्वानुपपत्तौ' स्वकीयाद्यासनासंभवे। 'शुद्ध्यंत-

1 तयोर्यद्यत्र, गृ. र., ५८८.

2 स्पृशेत्, गृ. र., ५८८.

3 तमः, गृ. र., ५८८.

4 शय्यासनान्यपहार्याणि, एके मन्यन्ते। तत्र वस्तुविशेषात् शुक्लमलिनसंसर्गात् पापसंसर्गात् व्याधिसंसर्गयोगाच्च। तस्माच्च पृथक् शौचाः इति। स्वानुपपत्तौ शुध्यन्तर्धाय समापयन्ति। अत्यन्तसंसर्गे सचेलं स्नानं। एवं हि—आसनं, गृ. र., ५८८.

5 यानं, गृ. र., ५८८.

र्धाय' शुद्धि वस्त्रादिकम्। 'ब्रह्मसूत्रं' यज्ञोपवीतम्। 'अन्य-धृतं' सर्वथैव न धारयेत्। 'उपानद्वस्त्रे' तु कृतनिर्णेजने उपरि धार्य्ये। 'निर्णिज्याशक्ता'विति गौतमवचनात्॥

'एकभोजन'मेकस्मिन् पात्रे पङ्क्तौ वा। 'स्वकै'र्ज्ञातिभिः। 'प्रसङ्गात्' अन्येन पापकर्मणापि सह। कदाचिदुपरोधादिभोजनप्रसक्तेः॥

बृहस्पतिः [आचार., ९३, ९६]

एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम्।
भस्मनाकृतमर्यादा न तेषां सङ्करो भवेत्॥
अग्निना भस्मना चैव सलिलेन विशेषतः।
द्वारेण स्तंभमार्गेण षड्भिः पङ्क्तिर्विभिद्यते॥

इति सङ्करवर्जनम्॥

# [1]अथ त्याज्यात्याज्याः

तत्र शङ्खलिखितौ

अत्याज्या मातापिता सपिण्डास्तथा गुणवन्तः । सर्वे-वाऽत्याज्याः ॥

'गुणवन्तो' विद्याकर्मशालिनः ॥

देवलः

पितरं भ्रातरं पुत्रं पुत्रिकां भगिनीं स्नुषाम् ।
न त्यजेद्द्वेषलोभाभ्यां [2]दारानपतितानपि ॥
मातृत्यागो हि शास्त्रेषु नोपदिष्टः कथञ्चन ।
पतिता वाभि[3]शस्ता वा माता न त्यागमर्हति ॥
कुलवृद्धा [4]ज्ञानवृद्धा वयोवृद्धाश्च मानवाः ।
शीलवृद्धाश्च संपूज्या [5]तथा स्वगुणगौरवात् ॥

'अपतितान्' इति सर्वत्र विशेषणम् ॥

1 अथ—omitted by ना. को.
2 स्वदारान् पतितानपि, गृ. र., ५९०.
3 शप्ता वा न माता, गृ. र., ५९०.
4 वयोवृद्धा ज्ञानवृद्धाश्च, गृ. र., ५९०.
5 यथा, गृ. र., ५९०.

हारीतः

पितां तु जनको मर्त्यै[1]श्छन्दः स्वाचार्य उच्यते ।
[2]ह्वेवेष्वोनं जनयति त्वग्नीं नध्वर्युवा दधात् (?) ॥
तस्मादेतान्सदा [3]वृद्धान् पूजयेन्न परित्यजेत् ।
परित्यागात्तथैवैषा[4]मिष्टाल्लोकान्न विन्दति ॥
[5]अशुद्धौ तु परित्यागः पातकेऽयाज्ययाजिने ।
[6]उपाध्याये च याज्ये च न पितुस्त्याग उच्यते ॥
परित्यजन्ति ये रागादुपाध्यायं कथञ्चन ।
अवमानयन्ति ये मोहान्न तेषान्निष्कृतिः स्मृता ॥

'[7]छन्दस्सु' स्ववेदेषु । अशुचिरत्र पातकाऽयाज्ययाजनरूपा । 'उपाध्याये च' 'याज्ये च' अनन्तरोक्ताशुद्धौ न परित्याग इति संबन्धः । न पितुस्त्यागः पूर्वोक्ताशुद्धौ ॥

विष्णुः[8]

भार्या[9] शिष्यश्च पुत्रश्च संसृष्टाः पापकर्मभिः ।
[10]परिभाष्य परित्याज्या पतितो योऽन्यथा भवेत् ॥

1 छन्दः स्वाचार्यः, गृ. र., ५९०.
2 अर्धमिदं न दृश्यते, गृ. रे., ५९०.
3 विद्वान्, गृ. र., ५९०.
4 न तान् लोकान् स, गृ. र., ५९०.
5 अशुद्धौ तु परित्यागः पातकेऽयाज्ययाजने, गृ. र., ५९१.
6 याजने चैव याज्ये च, गृ. र., ५९१.
7 छन्दःसु वेदेषु, गृ. र., ५९१.
8 Not traced.
9 पुत्रश्च बन्धुश्च संसृष्टः, गृ. र., ५९१.
10 परिभाष्योऽपरित्याज्यः पतितोऽपि तथैव च, गृ. र., ५९१.

ऋत्विगाचार्य्यान् याजकाध्यापकौ हेयावन्यत्र हानात्पतितं भाष्य विभाष्य विख्याप्यः ॥

आपस्तंबः [१, २१, ५–६]

न पतितैस्संव्यवहारो विद्यते । तथाऽपपात्रैः ॥

'अपपात्रैः' शबरादिभिः ॥

गौतमः [२१–१२–१६]

अज्ञानाध्यापनादृत्विगाचार्यौ पतनीयसेवायां च हेयौ । अन्यत्र हानात् पतति । तस्य च परिगृहीतेत्येके । न [1]कदाचन माता पित्रोरवृत्तिः । दायं तु न भजेरन् ॥

'अज्ञानाध्यापनात्' इति समाहारद्वंद्वम् । कृत्वा पश्चात् नञ् संबन्धनीयः । 'अज्ञानात्' कर्मविशेषे आविर्भाव्याज्ञानात तस्य अकरणं ऋत्विगाचार्य्यौ त्यजतोऽन्यः स्वीकर्ता सोऽपि पतति । 'अवृत्तिः' अनुकूलवृत्तिरशुश्रूषेति यावत् । 'दायं तु न भजेरन्' पुत्रा इति शेषः[2] ।

आपस्तंबः [१, २८, ६–१०]

न पतितमाचार्य्यं ज्ञातिं वा दर्शनार्थो गच्छेत् । न चाऽस्माद्भोगानुपयुंजीत । यदृच्छासन्निपाते उपसंगृह्य

1 कर्हिचित, इति गौतमीय मिताक्षरायाम्.

2 यदि कर्मणि प्रवृत्त ऋत्विक् मन्त्रान् कर्मपद्धतिं वा न जानाति स च, य आलस्यादिना नाऽध्यापयति आचार्यः, तावुभौ 'हेयौ' त्याज्यौ । इदं पतितेन सह शयनासनादेः सेवायां प्रागब्ब्दात्परित्यागार्थम् । न तादृशस्य त्यागोऽत्र विवक्षितः ॥ 'अन्यत्राज्ञानात' अनध्यापनादन्यत्र तयोः त्यागो न कर्तव्यः । कुर्वन् 'पतति' ॥ तस्यर्त्विजं आचार्यमीदृशं त्यजतः 'प्रतिगृहीता' तं यः प्रतिगृह्णाति याज्यत्वेन शिष्यत्वेन ऋत्विगाचार्यौ वा सोऽपि पततीत्येके मन्यन्ते ॥ न कस्यांचिदवस्थायां मातापित्रोः 'अवृत्तिः' अशुश्रूषा कर्त्तव्या किं तु कर्तव्या । पतितयोरपि तयोः नमस्कारादि शुश्रूषा कर्तव्या ॥ तदीयं तु धनं तदभावे न भजेरन् पुत्रादयः । राजगामी तद्भवति ॥—(गौ. मिताक्षरा. पृ. १६८–९).

तूष्णीं [व्यति]व्रजेत्। माता पुत्र[त्व]स्य भूयांसि कर्माणि प्रारभेत, तस्यां शुश्रूषा, नित्या पतितायामपि। न तु धर्मसन्निपातः स्यात्॥

'दर्शनार्थे' दर्शनमर्थो यस्येति स तथोक्तः। 'पुत्रत्वस्या' आहितगर्भस्य पुत्रत्वसिद्ध्यर्थे गर्भसन्निपातः। 'वापः' धर्मकृत्ये श्राद्धादौ संमिलनम्॥

वसिष्ठः [१३–४७]

पतितः पिता न परित्याज्यो माता तु पुत्रंप्रति न पतति॥

बौधायनः [२, ३, ४२–४३]

न पतितैः संव्यवहारो विद्यते पतितामपि तु मातरं बिभृयादनभिभाषमाणः॥

गौतमः [३, २, १–७]

[1]त्यजेत्पितरं राजघातकं [2]शूद्रानुयाजकं वेदविप्लावकं भ्रूणहनं यश्चान्त्यावसायिभिःसह संवसेत् अन्त्यावसायिनां

1 अस्यार्थः अपरार्कभाष्ये (याज्ञ.), पृ. १२०५ :—

यो राजघातकत्वादिना हेतुना त्याज्य उत्कस्तस्य विद्यागुरूनाचार्यादीन् 'योनिसंबन्धान्' मातामहमातुलादींश्च पुत्रादयः 'सन्निपत्य' मेलयित्वा, तेभ्यस्त्यागकारणं आवेद्य तैरनुमताः पुत्रादयः सपिण्डाः सर्वाणि पिण्डोदकश्राद्धदीनि जीवन्तमेव तमुद्दिश्य कृत्वा 'पात्रं चास्य' त्याज्यस्य 'विपर्यस्येयुः परास्येयुः। कथमित्यपेक्षित आह—'दासः कर्मकरो वा' इत्यादि। दासः उक्तलक्षणः। कर्मकरो भृत्यः। तयो र्य संभवति सो' ऽवकारात्' पुरीषस्थानादशुचिपात्रमानीय दासीघटात्तत्पात्रमुदकेन पूरयति। तदितरः पादेन दक्षिणामुखो' ऽमुं देवदत्तं करोमि' इति पर्यस्येत्। तं पर्यस्तं त्याज्यस्य सपिण्डाः पुत्रादयः 'प्राचीनावीतिनो' 'मुक्तशिखाः' अन्वालभेरन्। विद्यागुरवो योनिसंबन्धाश्च अन्वीक्षेरन्। ततः स्नात्वा 'ग्रामं प्रविशति'॥

2 शूद्रयाजकं शूद्रार्थयाजकं, गौ. मि.

वा। [1]तस्य विद्यागुरून् योनि[2]संबन्धांश्च सन्निपात्य सर्वाण्युदकानि प्रेतकर्माणि कुर्युः। पात्रं चास्य विपर्यस्येयुः। [3]दासः कर्मकरो वा ऽवकरादमेध्यपात्रमानीय दासीघटात्पूरयित्वा दक्षिणाभिमुखः [4]पदा विपर्य्यस्येदमनुदकं करोमीति नामग्राहम्। ते सर्वेऽप्यारभेत् प्राचीनावीतीनो मुक्तशिखाः। विद्यागुरवो योनिसंबन्धाश्च वीक्षेरन् अप उपस्पृश्य ग्रामं प्रविशन्ति॥

'शूद्रार्थं याजकः' शूद्रादर्थमधिगम्य यो यजेत। 'वेदविप्लावकाः' अनध्यायाध्यापकाः। 'अन्त्यावसायिभिः'श्चण्डालादिभिः। 'अंत्यावसायिनो संवासो' मैथुनादिकः। 'तस्य'त्याज्यस्य जीवत एव 'प्रेतकर्म्माणि कुर्य्युः'। पुत्रादय इति शेषः। 'सन्निपात्य' मेलयित्वा। 'उदकादीनि', आदिशब्देन प्रेतश्राद्धोपपादानम्। 'विपर्य्यासो'न्युब्जीकरणम्। 'अवकरः' मार्जनीनिरस्तधूल्यादिसञ्चयः। तद्दासं कर्मकरं वा। सर्वे पूर्वोक्ताः पुत्रादयः।

## शङ्खलिखितौ

पतिताभिशस्तदुष्टात्मकुलक्षयकरस्य वा तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषमनुरव्याप्य तमभिभाष्य पुनः पुनरवस्थां लभस्वेति। स यद्येवमनवस्थितमतिः स्यात्।

1 वा तस्य, गौ. मि.

2 सम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकार्याणि कुर्युः.

3 दासः कर्मकरो वावकरादमेध्यपात्रमानीय दासी, घटात्पूरयित्वा दक्षिणामुखः, गौ. मि.

4 यदा विपर्यस्येदमुकं अनुदकं करोमीति नामग्राहम्। तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखाः। विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन्। अप उपस्पृश्य ग्रामं प्रविशन्ति—गौ. मि.

ततो भिन्नपात्रमादाय पूर्णमपां[1]सूनामपसव्यं कृत्वा वामपादेन पात्रदक्षिणां दिशमपवर्जयेत्। पात्रमपसव्यं कृत्वा अपविद्धोदकं दत्वा लौकिकं शौचं आसीरन्। अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्त्तन्ते। संभाषणसहासनव्यहारान्न तेन सह कुर्यात् ॥

'अभिशस्तो'ऽन्नाकृतपातकोऽपि पातकित्वेन प्रसिद्धः। 'सततं' पापकर्माभिसन्धिर्दुष्टात्मा। 'कुलक्षयकरः' विहितऋतुकालगमनवर्जनादिना। 'अवस्था' शुद्ध्यवस्था। 'अवस्थितमति'र्बान्धवोक्तशुद्धावस्थायामकृतमतिः। 'अपविद्धोदकं'त्यागोदकं। 'लौकिकम् शौचं,' स्नानाचमनादि ॥

वसिष्ठः [१५, १२-१६]

वेदविप्लावक-शूद्रयाजकोत्तमवर्णवर्गपतिताः तेषाम्। पात्रनियमनप्रपात्रसंकरादकृत्स्नं पात्रमादाय दासोऽसवर्णापुत्रो वा बन्धुरसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान् लोहितान् [दर्भान्] चोपस्तीर्य पूर्णपात्रमस्मै [निनयेत्।] निनेतारं चास्य प्रकीर्णकेशान् ज्ञातयोऽन्वालभेरन् अपसव्यं[कृत्वा] गृहेषु स्वैरं आपद्येरन्[2]। अत ऊर्ध्वं तेन न तं धर्मयेयुः। तद्धर्माणो तं धर्मयन्तः ॥

'उत्तमवर्णवर्गः' ब्राह्मणसमूहः। 'अकृत्स्नं' खण्डम्। 'पतितं' निस्सारितः। 'बन्धुरसदृशः' असवर्णो भ्रात्रादिः। 'व्यक्ताग्राः' साग्राः। 'लोहितान्' गौरिकादीन्।

1 पांसूनामपसव्यं, अभिमुखं न्युब्जयेत् पात्रमपसव्यं कृत्वा पवित्रोदकं शौचमासीरन्। अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्तन्ते। संभाषणसहासनव्यवहारान् न तेन सह कुर्यात, या. अप., पृ. १२०६.

2 Restored from printed text and या. अप, पृ. १२०६.

'अपूर्णं' रिक्तं यथा भवति। 'स्वैरं' मन्दम्। 'आपद्येरन्' अवसन्ना भवेयुः। 'न धर्मयेयुः,' न संव्यवहारयेयुः।

मनुः [११, १८२–१८५]

पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः।
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विक् गुरुसन्निधौ॥
दासीघटमपांपूर्णं पर्यस्येत् प्रेतवत्पदा।
अहोरात्रमुपासीरन्नशौचं बान्धवैः सह॥
निवर्तेरंश्च तस्मात्तु संभाषणसहासने।
दायाद्यस्य प्रदानं च [1]पात्रमेव च लौकिकी॥
ज्येष्ठता च निवर्तेत ज्येष्ठावाप्यं च यद्धनम्।
ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान् गुणतोऽधिकः॥

[2]मनुर्वसिष्ठश्चतुर्थे [मनु, ११, १८६–१८७, १८९]

प्रायश्चित्ते तु चरिते पूर्णकुंभमपां नवम्।
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये॥
सत्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम्।
सर्वाणि [3]प्रेतकर्माणि यथापूर्वं समाचरेत्॥
एवमेव विधिं कुर्यात्योषित्स्वपतितास्वपि।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके॥
एनस्विभिरनिर्णिक्तैः नार्थं किंचित्सहाचरेत्।
कृतनिर्णेजतांस्त्वेतान्नजुगुप्सेत कर्हिचित्॥

1 यात्रा चैव हि, गृ. र.
2 Not traced in printed *Vasiṣṭhasmṛti* (ed. Führer).
3 ज्ञाति, गृ. र.

अत्रापतिताऽधिकारे शङ्खलिखितौ

स चेत् प्रत्यापन्नः शुद्धिमन्विच्छेत्तमेव जनमाहूय राजानं अभिभाष्य गुणानुकीर्तनं कृत्वा, शौद्धिकं दधिमधुघृतजलाक्षतानां नवं पात्रं पूरयित्वा, गन्धमाल्योपनीतं कृत्वा, त्रिः प्रदक्षिणी कुर्युः। बान्धवाः योषितश्च ततो महाव्याहृतिहोमान्ते तत्पात्रं अपाम्मध्ये प्रवाहयेरन्। 'शान्तान्यशुभानि दुर्भाषितानीति' ब्रुवन्तः। ततः स्नात्वा शुचिः शुक्लवासाः पुनर्गृहं प्रविशेत्। बान्धवाऽनुमतः स्त्रीणामप्येवं परित्यागो, दुष्टानां पुनरावाहनं च ॥

'आवाहनं' बांधवैः सह प्रयोगः। 'प्रत्यापन्नः' पुनः शुद्धतां प्राप्तः। 'शुद्धिमन्विच्छेत्' शुद्ध्यनुरूपः संव्यवहार स्तमिच्छेत्। 'शौद्धिकं' शुद्धिप्रयोजकम् ॥

क्वचित्प्रायश्चित्तस्य आगमनाद्यभिधाय

याज्ञवल्क्यः [३-२११]

घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम्।
प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥

'सत्कारः' सत्पूर्वग्रासदानम्।

वसिष्ठः [१५-१७]

पतितानां चरितव्रतानां प्रत्युद्धारः।

अथाप्युदाहरन्ति—

अग्रेभ्युद्धरतां गच्छेत् क्रीडन्निव हसन्निव।
पश्चात् पातयितागच्छेच्छोचन्निव रुदन्निव ॥ इति

आचार्यमातृपितृहन्तारस्तत्प्रमादादपवाच्याद्वा एषां प्रत्यापत्तिः। [1]पूर्णाद्ध्रतात्पवित्राद्वा काञ्चनं पात्रमाहेयेनापि पूरयित्वाऽऽपोहिष्ठाभिरेनमभिषिञ्चेयुः। सर्व एवाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातः।

'हन्तारो' ऽत्रापि पीडितारः। 'अपवाच्याः' अपगत पापाः। 'प्रत्यापत्तिः' प्रत्यायनम्। 'प्रवृत्तं' नदीजलात् स्रवंतीभ्यो वेति गौतमवचनात्। 'पात्रं माहेयं' मृण्मयम्। 'पुत्रजन्मना व्याख्यात' इत्यनेन जातकर्मादिसंस्कारकर्मादिकुर्यादित्युक्तम्॥

गौतमः [३-२-१०-१६]

[2]यः प्रायश्चित्तेन शुद्धयेत् तस्मिन् शुद्धे शतकुंभमयं पात्रं पुण्यतमाद्ध्रदात् पूरयित्वा स्रवन्तीभ्यो वा तत एनं वा अप उपस्पृशेयुः। [3]अथास्मै तत्पात्रं दद्युः तत् प्रतिगृह्य जपेच्छान्तायौः। 'शान्ता पृथिवी शांतं शिवमंतरिक्षं ये रोचनस्तमिह गृह्णामीति' एतै र्यजुर्भिः पावमानीभिः तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयाद्। हिरण्यं वा ब्राह्मणाय दद्यात्। गां वा। आचार्याय च। यस्य तु प्राणान्तिकं प्रायश्चित्तम् स मृतः शुद्धयेत्। सर्वाण्येव तस्मिन्नुदकानि प्रेतकार्य्याणि कुर्युः। एतदेवशान्त्युदकं सर्वेषु पातकेषु जपेत्[4]॥

1 पुण्यह्रदात् प्रस्रुताद्वा.

2 यस्तु—Variant in the printed edition of Gautama.

3 अथास्मै—Variant in the printed edition of Gautama.

4 जपेत, ना. को.

शान्तेत्यादीति गृह्णामीत्यन्तानि । 'यजूंषि' श्रुतैरुक्तैर्यजुभिः । 'पावमानीभिः' तरत्समन्दीभिः । 'अप उपस्पृशेयु' रित्यत्र पूर्वेणान्वयः । ब्राह्मणाय गोहिरण्ययोः-वैकल्पिक्यं दानम् । आचार्येऽपि तथा ।

बौधायनः [२, १, ३५–३७]

अथ यस्य ज्ञातयः परिषद्युदपात्रं निनयेयुरसावह्वेवं भूत इति । 'चरित्वाऽपः पयो घृतं मधुलवण'मित्यारब्धवन्तम् ब्राह्मणा ब्रूयुः '[1]चरितं त्वयेति'। ओमित्यपरः प्रत्याह । चरितनिर्वेशं सवनीयं कुर्य्युः ॥

'चरितनिर्वेशं' कृतप्रायश्चित्तं । 'सवनं' प्रस्तरस्तत्संबन्धिजातकर्मादिसवनीयम् ।

विष्णुः [५४, ३२][2]

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
[3]शरणागतहन्तृंश्च स्त्रीहन्तृंश्च न संविशेत् ॥
तैः संभूयोदकपानादि न कुर्यात् ।

हारीतः

ब्राह्मणं क्षत्रियं वापि वैश्यं शूद्रमथापि वा ।
वित्तहीनं दुराचारं दूरतः परिवर्जयेत् ॥
स्वपदस्थं सुवृत्तस्थं स्वकर्मपरिदेविनम् ।
शूद्रं पुण्यतमं प्राहुर्नाऽन्ये वृत्तच्युतांस्त्रयः ॥

1 चितं त्वया, ना. को.
2 मनुः, ११, १९०.
3 शरणागतहन्तृंश्च स्त्रीहन्तृंश्च न संवसेत्, या. अपरार्के, पृ. १२०९.

वृत्तमेवप्रशंसन्ति सर्वारंभेषु(?)पण्डिताः ।
वृत्तैस्स्थिताः परांल्लोकान्नाच्छन्ती ह्यमरा इवेति ॥

'स्वपदस्थः' द्विजशुश्रूषकः । 'स्ववृत्तस्थः' श्राद्धाधिकारी । 'स्वकर्मपरिदेवी' द्विजशुश्रूषात्तधनः ।

यमः

य इमां धर्ममर्यादामृषिभिः स्थापितां पुरा ।
यथा च विन्दते विप्रः स प्रेत्येह च नन्दति ॥
शिष्टाचरितमार्गोऽयमशिष्टानामतोऽन्यथा ।
शिष्टास्ततो दिवं यान्ति यान्त्यशिष्टास्त्वधोगतिम् ॥

गौतमः [१-९-६७]

मनसा चैव[तत्समग्र]माचारमनुपालयेदापत्कल्पः ॥

साङ्गमनुष्टानाऽशक्तौ मनसा ध्यानेनाऽपि साङ्गनिष्पादयेदित्यर्थः ।

इति त्याज्यात्याज्याः ॥

## ३४

# अथ ऋणापाकरणम्

तत्र बौधायनः [२, १६, १–६]

प्रजाकामस्योपदेशः। प्रजननिमित्ता समाख्येत्यश्विना वूचतुः।

आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः।
प्रजामुत्पादयेद्युक्तः स्वे स्वे वर्णे[1] जितेन्द्रियः॥
ब्राह्मणस्यर्णसंयोगस्त्रिभिर्भवति जन्मतः।
उन्मुच्याऽऽत्मवान् भवति विमुक्तो धर्मसंशयात्॥
स्वाध्यायेन ऋषीन् पूज्य सोमेन च पुरन्दरम्।
प्रजया च पितॄन् पूर्वाननृणो दिवि मोदते॥

पुनर्बौधायनः [२, १६, ७–१२]

विज्ञायते च—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्य' [2]इति। एवमृणसंयोगं वेदो दर्शयति॥

'बन्ध'मृणं तस्य मोक्षः। प्रजायत्तं फलानुकर्ष, पितॄणां चानुकर्षशब्दांश्च, प्रजावाननुत्सन्नः।

1 'वंशे' इति गोविन्दस्वामिनोद्धृत पाठः.
2 तैत्तरीयसंहिते, ६, ३, ११.

'प्रजावान् भवति यावदेवं प्रजानुगृहीते तावदक्षयं लोकं जयति' इति ॥

सत्पुत्रमुत्पाद्यात्मानं तारयति ॥

सप्ताऽवरान् सप्तपूर्वान् षडन्यानात्मसप्तमान् ।
सत्पुत्रमधिगच्छंस्तु तारयत्येनसो भयात् ॥

यस्मात्प्रजासन्तानमुत्पाद्य फलमाप्नोति ॥ तस्माद्यत्नवान् प्रजामुत्पादयेत् । [औषधमन्त्रसंयोगेन ।] [[1]तस्योपदेशः श्रुतिसामान्येनोपदिश्यते । सर्ववर्णेभ्यः फलत्वादिति ॥]

आत्मनः फललाभाय तस्मात्स पुत्रमुत्पाद्याऽऽत्मानमेवोत्पादयतीति विज्ञायते 'आत्मा वै पुत्रनामासीति' । एवं द्वितीय आत्मा जीवताद्रष्टव्यो । 'यः पुत्रमुत्पादयति तस्मान्नाऽऽत्मा क्वचित् अक्षेत्रे समुत्स्रष्टव्यः । आत्मानमन्य यो हि यद्यात्मानमुत्पादयति स तथा भवति' । तस्मादादित एवमन्विच्छेत् । सवर्णे सङ्कृतमुपदेशेन तस्मिन्दारसंयोगे प्रजामुत्पादयेत् 'औषधमन्त्रसंयोगेन' तस्योपदेशश्रुतिसामान्येनोपदिश्यते सर्ववर्णेभ्यः । 'फलत्वात्' इति प्रजाकामस्योपदेशः । करिष्यत इति शेषः । 'प्रजननं' प्रजोत्पादनम् । 'समाख्या' कुलानुकीर्तनम् । 'आयुषा' आयुष्येण । 'दीर्घ' सन्ध्योपासनवर्जनादिकर्मणा । 'तपसा' नियमेन । 'इज्या' यागः । 'युक्तः' यत्नवान् । 'जितेन्द्रियः', परदार-निषिद्धकाल-मैथुनवर्जी । 'आत्मवान्' प्रशस्तात्मा । 'धर्मसंश्रयात्' पुत्रोत्पादनादिरूपधर्माश्रयात् । ब्रह्मचर्यादीनामृणाऽपनयनवदवश्यकर्तव्यत्वादृणस्योक्तिः । 'फलानुकर्ष' प्रजाधीनस्वर्गादिफलानुस्मृतिं पितॄणां चानुकर्मर्षः पुत्रादि-

1 [ ] इति मुद्रित बोधायने यथा व्याख्यातमधस्तात्.

रूपेणानुवृत्तिः[1]। 'शब्दांश्च' पित्रादीनामनुकीर्तनादि प्रजायामायत्तम्। 'वेदो दर्शयतीति' प्रत्येकं संबन्धः। 'अनुत्सन्नः' मृतोऽपि प्रजारूपेण विद्यमान एव भवति। तथाच तैत्तिरीयके [ब्रा. १, ५, ५, ६]—'प्रजामनु प्रजायसे तदु ते मर्त्याऽमृतमिति'। 'अक्षेत्रे' परदारादौ। 'सवर्णे' समानजातीये। 'उपदेशेन' गर्भाधानादिना। तस्य पुत्रोत्पादनस्य 'उपदेश श्रुतिः'। 'औषधसंयोगेन' समान्येन साधारण्येन सवर्णेभ्यः शतपथब्राह्मण उपदिश्यते पठ्यत इत्यर्थः[2]। 'फलवत्वादिना'ति। औषधमन्त्रयोरिति शेषः॥

विष्णुवसिष्ठौ [विष्णु, १५, ४५, वसिष्ठ, १७-२]

ऋणमस्मिन्सन्नयति अमृतत्वं च विन्दति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतोमुखम्॥

जातस्य ऋणापाकरणयोग्यस्येति भर्तृयज्ञः। 'सन्नयति' सङ्क्रमयति।

शङ्खलिखितौ

जीवत्पुत्रमुखं दृष्ट्वा पितृणामनृणः पिता।
स्वर्गं स तेन जातेन तस्मिन् सन्यस्य तत्क्षणम्॥

शङ्खलिखितपैठीनसयः

यत्र क्वचन जातेन पिता पुत्रेण नन्दति।
तेन चाऽनृणतां याति पितृणां पिण्डदेन वै॥

1 From here there is a gap in the Nagpur Manuscript till देवब्राह्मणसंपन्नो देवब्राह्मणपूजनपरः in page ४३३.

2 ऋणं ह वै जायते योऽस्ति। स जायमान एव देवेभ्यः ऋषिभ्यः पितृभ्यो मनुष्येभ्यः। शतपथ, १, ७, २, ११.

'यत्र क्वचन' जीवक्षेत्रयोरन्योन्यसमयपूर्वकं पर क्षेत्रेऽपि।

हारीतः

यस्य पुत्रः शुचि र्दक्षः पूर्वे वयसि धार्मिकः।
संयत्ता चाऽऽत्मदोषाणां स तारयति पूर्वजान्॥

बृहस्पतिः [श्राद्ध., १२०]

पुंनाम्नो नरकात्पुत्रः पितरं त्रायते यतः।
मुखसन्दर्शनेनाऽपि तदुत्पत्तौ यतेत सः॥

एतत्पुत्रोत्पत्तिमात्रस्यैतत्फलम्।

हारीतः

पुन्नामा निरयः प्रोक्तः छिन्नतन्तुश्च नैरकः।
तत्र वै त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः॥

'नैरकः' नरकगामी।

शङ्खलिखितौ

अग्निहोत्रं त्रयो वेदा यज्ञाश्च शतदक्षिणाः।
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम्॥
पुत्रपौत्रप्रतिष्ठस्य बह्वपत्यस्य जीवतः।
अक्षीणवेद यज्ञस्य हस्तप्राप्यं त्रिविष्टपम्॥

'ज्येष्ठपुत्रप्रसूतस्य' प्रथमपुत्रजन्मन इत्यर्थः।

[1]मनुःशङ्खलिखितौ [९-१३७] विष्णुवसिष्ठहारीताः [१७-५]

पुत्रेण लोकान् जयति पौत्रेणात्यन्तमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥

1 मनु., ९, १३७; वसिष्ठ., १७, ५; विष्णु., १५, ४६.

बौधायनः [२, ९, ६]

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहति ॥

शङ्खलिखितौ

सन्तानवर्धनं पुत्रं युक्तं च पितृकर्मणि ।
देवब्राह्मणसम्पन्नमभिनन्दति पूर्वजाः ॥

'सन्तानवर्द्धनः' पुत्रोत्पादनसमर्थः । 'देवब्राह्मण-संपन्नः' देवब्राह्मणपूजनपरः ।

वसिष्ठः [१७-२-४]

अनन्ताः पुत्रिणो लोकाः नाऽपुत्रस्य च लोकोस्तीति विज्ञायते[1] । 'प्रजाभिरग्नेरमृतत्व[2]मत्स्याम्' इत्यपि निगमेन च[3] ।

'अप्रजाः सन्त्वत्रिण' इत्यभिशापः ॥

आदानशीला राक्षसाः । नूनमयं महानपकारो येन राक्षसा नाकाश्यत इति तात्पर्यार्थः ।

बृहस्पतिः [व्यवहार, २६, ८८]

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोः नामसंकीर्तनस्य च ॥
कांक्षन्ति पितरः पुत्रान् नरकापातभीरवः ॥
यादृक् तादृक् मुख्यपुत्रिकापुत्रादिः ॥
[4]यादृशं गुणमाप्नोति कुप्लवैः सन्तरन् जलम् ।

1 श्रूयते इति मुद्रितवसिष्ठौ.
2 अश्यां.
3 निगमो भवति, इति, मु. वसि.
4 यथा विधि इति कूल्लूकधृतपाठः.

तादृशं गुणमाप्नोति कुपुत्रैः सन्तरंस्तमः ॥

बृहस्पतिः [आपद्धर्म. ५३]

यथा जलं कुप्लवेन तरन्मज्जति मानवः ।
तद्वत्पिता कुपुत्रैश्च तमस्यन्धे निमज्जति ॥

अस्य च पुत्रो अवश्यमनुशासनीयः इति तात्पर्यार्थः।

तथा शतपथ श्रुतेः

पुत्रमनुशिष्टं लोकमाहुस्तस्मात्तमनुशासतीति ।

आदित्यपुराणे

दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ।
महासंसारसङ्कीर्णा नास्ति वै नरकाद्भयम् ॥

मनुः [४–२५७]

महर्षिपितृदेवानां गत्वाऽनृण्यं यथाक्रमम्[1] ।
पुत्रे सर्वं समासज्य वसेन्माध्यस्थ्यमास्थितः ॥
एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ।
एकाकी चिन्तयन्[1] विप्रः परं श्रेयोऽधिगच्छति ॥

'माध्यस्थ्यं' धनपुत्रादौ ममतात्यागः। 'एकाकी' असहायः, सहाध्यायिप्रभृतिभिः। 'संभाषादिवर्जं', चिन्तयेदात्मनो हितम्, उपनिषदुक्तब्रह्मस्वरूपं ध्यायेदित्यर्थः।

यमः

त्यक्तमुक्तगृहावासं विमुक्तं पूर्वबान्धवैः ।
जितेन्द्रियमलुब्धञ्च तं देवाः स्थविरं विदुः ॥

1 चिन्तयानो हि इति कुल्लूकधृतपाठः

मनुः [४–२५९, २६०]

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पश्च सत्ववृद्धिकरः शुभः ॥
अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित् ।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते ॥

[५–१६९]

अनेन विधिना नित्यं पञ्चयज्ञान्नहापयेत् ।
द्वितीयमायुषो भागं गृहेषु ब्राह्मणो वसेत् ॥

[४–१]

चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः ।
द्वितीयमायुषो भागं कृतेद्वाहो[1] गृहे वसेत् ॥

तदेवमादिवचनपर्यालोचना । गृहस्थस्यैवापाकृतऋणत्रयस्य, कुटुंबभरणादिसमर्थस्य पुत्रस्य भार्यादिपरिकरं समर्थ्य त्यक्तममत्वस्याऽऽत्मनि समारोपणं कृतवतः इत्थंभूतस्यैव भार्यारहितत्वेनैव गताग्निहोत्रस्य वा द्रव्यसाध्यश्राद्धादिकर्मनिवृत्तस्य सन्ध्योपासनोदकतर्पणशौचात्मचिन्तनमात्राऽनुष्ठानं कुर्वतोऽयं प्रकार इति मेधातिथिः ॥

इति श्री महाधिराज श्रीमद् गोविन्दचन्द्रदेव महासन्धिविग्रहिक भट्टश्री हृदयधरात्मज भट्टश्री लक्ष्मीधर विरचिते कृत्य कल्पतरौ गृहस्थकाण्डम् समाप्तम्[2] ॥

1 'कृतदार' इति कुल्लूकोद्धृतपाठः.

2 The date recorded in the Nagpur manuscript is Samvat 1740 ज्येष्ठसप्तमी चन्द्रवारे पुस्तकं लिखितम् । वल्लभदास गौडे । माङ्गल्यं दद्यात् ॥

## APPENDIX A

### *Variant Readings of India Office and Bikanir MSS.*

Page 1, line 8 सा कर्म for सत्कर्म (B.); 1, 10 ०दानोत्सवे for ०नादोत्सवे (I. O.); 1, 12 भेदात् अधिवेदनम् (B.); 1, 17 क्षत्रविहृति कर्मणि (B.).

2, 1 कुलादीनां (B.); 2, 3 अनालोक्यानि (B.).

3, 9 अविच्युत (I.O.). 3, 11 कर्तव्यता (B.); 3, 13 वेदार्था (B.); 3, 13 यथाक्रमम् for अविलुप्त (B.); (I.O.); 3, 14 अविप्लुत (I. O.); 3, 14 अविशीर्ण 3, 14 धर्मतः for धर्मवित् (B.).

4, 1 प्रायश्चित्तोत्तर for प्रायश्चित्तस्योत्तर (I. O.); 4, 9 सदृशानाहवेद्दारां मातृपितृमते स्थितः (B.); 4, 9 सद्वृत्तां for सदृशीम् (I. O.); 4, 11 समनुज्ञाप्येत्यर्थेन्तर्भावित (I. O.); 4, 13 ब्राह्मणक्षत्रियविशाम् (I. O. and B.).

5, 2 स्नात्वा समानावर्षेयीम् for स्नात्वाऽसमानार्षेयीम (B.); 5, 3 अवरवयः सदृशीं for अवरवयसीं सदृशीं (I. O. and B.); 5, 4 गृहस्थ इति भाविभूतवदुपचारः (B.); 5, 4 भाविनि भद्रूपचारः (I. O.); 5, 5 तेनाकृतदारोऽपि (I. O. and B.); 5, 6 आश्रमान्तरान्निवृत्तो (I. O. and B.); I. O. omits भर्तृयज्ञः; 5, 8 गुणशीलवयः कुलैः (B.); 5, 10-11 तद्वर्षेवेकगुणाम् for तच्च वर्षैरेकगुणाम् (B.); 5, 13 Both I. O. and B. have मनुः before the S'loka; 5, 15 स्रग्विणं तल्प आसीनम् (I. O.); तस्य आसीनम् (B.); 5, 17 दक्षिणादिना for दाक्षिण्यादिना (B.).

6, 5 गुरुणानुज्ञातो लब्ध्वादीन् (?) गृह्णीयात् (B.); 6, 8 याचमाणेभ्यो वा याचनद्देव (B.); 6, 8 याचमानेभ्यो यजनद्देव (I. O.); 6, 11 स्रगदण्डादीन् (I. O.); सगृण्डादीन् (B.); 6, 12 यथानुधारणम् for यथार्थ धारणम (B.); 6, 15 नियम एव for नियमः (B.); 6, 17 I. O. omits वा after त्रीन्; 6, 18 युज्ञाद्यपनयनम् (B.); 6, 18 ब्राह्मणादिना विवाहेन (B.); 6, 21 तिथिम् for तिथीन् (B.).

7, 3 विशुद्धास्वत्वहेतुतः (B.).

8, 1 मैथुनशब्दवाच्ये स्त्रीपुंससाध्ये आधानादिकर्मणि (B.); 8, 2 स्त्रीसाधकोपादि (B.); 8, 4 मिथुनसाध्येऽस्मिन् पुत्रोत्पत्यादाविति (B.); 8, 6 असमानप्रवरयोः (B.); 8, 7 बीजिनं च (B.); 8, 9 प्रचरणात् for प्रकरणात् (B.); 8, 10 सुतादयः for पुत्रादयः (B.); 8, 10 बीजिनश्चेत्यत for बीजिन३चेत्यत्र (I. O.); 8, 11-16 I. O. omits all words after बीजीयः and up to मातृतः on line 16; 8, 11 जातिमात्राद्वेत्यनेन शास्त्रेण प्राप्तौ (B.); 8, 12 मातृमातुलोमातृपितृस्वषसा मातृस्वसा वा (B.); 8, 17 अत्र चासमानजातीये (I. O.).

9, 4 मातृ before सगोत्रानिषेधो is wanting in (B.); 9, 5 जन्मपरम्परानाम्नोः प्रत्यभिज्ञाने सति (I. O.) and (B.); 9, 8 जन्मनाम्नोरविज्ञानादुद्वहदविशङ्कितः (B.); 9, 10 मुक्तदोषाम् for युक्ताचासम् (B.); 9, 11 इति विज्ञायते (B. and I. O.); 9, 13 B. omits अपि; 9, 14 प्रतिपादन for प्रतिपादनार्थः.

10, 2 पैतृष्वसे[यीं], (B); 10, 6 B. omits मनुना; 10, 10 B. has आसप्तामद्विवाह्याः; 10, 11 I. O. has पितृपक्ष्यः for पितृपत्न्यः; 10, 12 B. interpolates, इति after भगिन्यः; 10, 12-13, B. has तदपत्या भागिनेयाः; 10, 13-14, तस्याध्यापयितुरेव तदेव (B.).

11, 2 सङ्करधर्मं (I. O.); 11, 2 सङ्करधर्मकारिण्यो भवन्तीत्यर्थः (B.), omitting 'धर्मारूपा'; 11, 9 हंससुनाम् (B.); 11, 15 बुद्धिरूपलक्षणसम्पन्नामुद्वहेत् (B.); उपयच्छेत् (I. O.); 11, 16 तानि च तथा भविष्यपुराणोक्तानि (B.).

12, 2 ईदृशाश्वरणा धन्याः (B.); 12, 3 भूभागाधस्तलाः (B. and I. O.); 12, 6 अतिनिर्मांसैः (B. and I. O.); 12, 10 सक्यः सूक्ष्मनखास्तथा (B.); 12, 10 सूक्ष्मनखाः (I. O.); 12, 11 अनन्तमैश्वर्यम् (B.); 12, 12 राजभोगोपमसंभोगम् (B.); 12, 13 ह्रस्वा तु (B.); 12, 15 प्रथमपर्ववर्गवक्रः (B.); 12, 16 तथा च (I. O.); 12, 17 परम्परसमारूढैः (B.); 12, 18 दाशी भवति (B.).

13, 1 अङ्गुष्ठोन्नतपर्वाणः (B.); 13, 5 पाण्डवैः (B.); सूक्ष्मैः for रूक्षैः (B.); तथाश्वरैः (B.) तथा नखैः (I. O.); 13, 6 निसुता (B.); 13, 7 समागूढशिवास्तथा (B.); 13, 8 यदि स्युर्नुपुरं दध्युः (B. and I. O.); 13, 9 अशिवाः (B.); 13, 10 जालं for यानं (B.); 13, 11 लोमजङ्घा (B.); 13, 13 सिंहजात्वन्धकारिभिः (B.).

14, 1 श्रियमावम् (B.); 14, 11 तनुभिर्वपुमित्याहुः (B.); 14, 12 सव्यावर्त्तम् for मध्यावर्त्तं (I. O.).

15, 2 कूर्मपृष्ठ ह्यवूडिकः (B.) कूर्मपृष्ठो ह्यतू-लिकः (I. O.); 15, 5 यस्या for यश्च (B.); 15, 6 कुर्वते (I. O.); 15, 7 निवृत्तानलैः for विवृताननैः (B.); 15, 8 विरूपयति (I. O.); विरूपं धृति (B.); 15, 9 चाधिगच्छति (B.); 15, 12 पयोधरान्नम्रः प्रवलत्रिवली गुरुः (B.); प्रवलित्रिवली (I. O.); 15, 15 भयावासम् (B.).

